THE

# KASHI SANSKRIT SERIES.

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

## 128

( Vyākaraṇa Section, No. 17 )

THE

# LAGHUS'ABDENDUS'EKHARA

OF

M. M. PT. S'RĪ NĀGES'A BHAṬṬA

with the

## NĀGES'OKTIPRAKĀS'A COMMENTARY

BY

PANDIT S'RĪ KHUDDĪJHĀ S'ARMĀ

EDITED BY

*Pandit S'ri Sudāmā Mis'ra S'āstri.*

AND

PANDIT S'RI SADĀS'IVA S'ĀSTRI JOSHI.

PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office*

*BENARES.*

1938

॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशी-संस्कृत-सीरिज़्पुस्तकमालायाः

१२८

व्याकरणविभागे (१७) सप्तदशं पुष्पम्।

# लघुशब्देन्दुशेखरः।

महामहोपाध्यायश्रीनागेशभट्टविरचितः।

(नपदान्तसूत्रान्तो भागः)

श्रीमदुमादत्तशर्म्मतनुजन्मना श्रीखुद्दीझाशर्म्मणा मैथिलेन मनीषिणा

विरचितया नागेशोक्तिप्रकाशव्याख्यया संवलितः।

वाराणसेयराजकीयप्रधानसंस्कृतपाठशालायां व्याकरणधर्मशास्त्रवेदान्ताध्यापक-

पण्डितश्रीगोपालशास्त्रिपादोपदिष्टां सरणिमवलम्ब्य

पण्डितश्रीसुदामामिश्रशास्त्रिणा परिशोधितः।

पण्डितजोशीत्युपाह्वसदाशिवशास्त्रिणा च परिष्कृतः।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः-

चौखम्बा संस्कृत सीरीज़ आफिस,

विद्याविलास प्रेस, गोपालमन्दिर,

बनारस सिटी।

* श्रीः *

# किञ्चित्प्रास्ताविकम् ।



आसीना कमले करैर्जपवटीं पद्मद्वयं पुस्तकं
बिभ्राणा तरुणेन्दुबद्धमुकुटा मुक्तेन्दुकुन्दप्रभा ।
भालोन्मीलितलोचना कुचभरक्लान्ता भवद्भूतये
भूयाद्वागधिदेवता मुनिगणैरासेव्यमानाऽनिशम् ॥ १ ॥

अयि ! सुरभारतीकृपाकटाक्षकञ्चुकिता महनीयचरिता विपश्चित्प्रवराः, विदितमेव तत्रभवतां भवतामनादिकालात्सर्वज्ञैर्महर्षिभिः कामदुघेयमिति सादरं सम्भाविताऽक्षय्यकोषा सर्वभाषाप्रसूरियं सुरभारतीति ।

अस्याः सर्वाङ्गोपाङ्गपुरःसरं सुविचारं न व्याकरणमन्तरा सञ्चरतीति देशकालपरिस्थितिविदश्चतुरा नेतारः सर्वव्याकरणनिकषायमाणं पाणिनीयव्याकरणमुररीकृत्यानेकनिबन्धसोपानपरम्परां विस्तारयामासुः ।

तत्र सर्वतन्त्रस्वतन्त्रैर्महीयसीम्महामहोपाध्यायपदवीमधिगतैः श्रीमद्भिर्नागेशभट्टैर्विलक्षणधिषणाप्रतिभासकं प्रगाढपण्डित्यगभीरं शब्देन्दुशेखरं विपश्चित्प्रज्ञागोचरं निरमायि ।

यतो ह्येतदध्ययनप्राप्तप्रतिभाप्रकाशप्रज्वलितधिषणाः शब्दशास्त्रनिष्णातमानसा मनीषिणोऽपि प्रतिवादिनोऽनेकानन्यशास्त्राध्ययनशालिनो विजित्य स्वकीयप्रज्ञाप्रतिभाकौतुकं लेभिरे ।

अस्य निर्माता विद्वत्कुलमौलिमुकुटमणिरयं नागेशभट्टः कतमदेशालङ्कारोऽभूदिति तु सन्दिग्धमेव । अस्य जन्मसमयस्तु सप्तदशशताब्द्यामासीदिति मुद्रितरसगङ्गाधरस्य भूमिकायां दुर्गाप्रसाददर्शितसङ्केतात्प्रतीयते । 'शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः' इति प्रकृतग्रन्थमङ्गलतो नागेशभट्टस्य पिता 'शिवभट्ट' नामकः, एवं जननी 'सतीदेवी' इति प्रथितमेव ।

बाल्यावस्थायां षोडशाब्दावस्थापर्यन्तं वाराणस्यामितस्ततः परिभ्राम्यन् कदाचिद्विद्वत्सभायां सहसा गत्वा तत्रासनमधिष्ठितस्तत्रत्यैर्विद्वद्भिर्भर्त्सितः परं निर्वेदमापन्नः सर्वातिशायिनीं विद्यामभीप्सुस्तपस्तप्तुं वागीश्वरीमन्दिरे तदीयध्यानपरायणो निवसन् कतिपयैरहोभिर्वागीश्वरीप्रसादाल्लब्धसकलशास्त्रतत्त्वविमर्शबुद्धिको विद्वज्जनमूर्धन्यः समभवदिति किंवदन्ती प्रश्रूयते ।

'श्रृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः' इत्यादिस्वकीयलेखेनैवायं तत्रत्यराज्यपण्डित आसीदिति विज्ञायते ।

नागेशभट्टस्य सन्ततिर्नासीदिति 'शब्देन्दुशेखरं पुत्रं मञ्जूषाञ्चैव कन्यकाम्' इति मञ्जूषाऽन्तस्थश्लोकात्प्रतीयते ।

नागेशभट्टो यद्यपि वागीश्वरीप्रसादादेवाधिगतसकलविद्यस्तथाऽपि गुरु-

सम्प्रदायलब्धवैदुषीमेव श्रेयस्करीं मत्वा महामहोपाध्यायहरिदीक्षिताद्व्याकरणशास्त्रं पण्डितप्रवररामरामभट्टान्न्यायशास्त्रञ्चाधीत्याखिलतन्त्रस्वतन्त्रतामवाप।

एवञ्च नागेशभट्टकृतशब्देन्दुशेखरः साम्प्रतं प्रचलिताध्ययनाध्यापनान् प्रायः सर्वानेव व्याकरणग्रन्थानतिशय्य वर्तत इति सुप्रसिद्धमेव सर्वेषां वैयाकरणानाम्। अस्य च ग्रन्थस्य व्याख्या अपि चन्द्रकलाऽऽदयो बह्वयः प्रसिद्धा मुद्रिताश्च सन्ति। परन्तु काश्यादिनगरेषु प्रचलिताध्यापनशैल्यनुसारिणी व्याख्या नागेशोक्तहार्दप्रकाशिका छात्रबुद्धिविकासिनी प्रगाढपाण्डित्यगभीरा नपदान्तसूत्रपर्यन्ता शब्दतन्त्रस्वतन्त्रवैयाकरणकेसरिभारद्वाजकुलललामभूतदामोदरशास्त्रिचरणारविन्दमकरन्दलोलुपमधुकरायमाणमैथिलकुलावतंसश्रीमद्रुमादत्तशर्मतनुजन्मश्रीखुद्दीशर्मविनिर्मिता छात्राणां परमोपकारार्थमद्य तत्रभवतां भवतां करकमलेषु सादरं पुरस्क्रियतेऽस्माभिः।

यद्यपि करालकलिकालवशात्सम्पूर्णाऽस्माभिरद्यापि नोपलब्धा; तथाऽपि नपदान्तसूत्रपर्यन्ताऽपि भवतां बहूपकारिका भवेदिति मत्वा सम्मुद्र्य प्रकाशिताऽस्माभिः।

अस्या नागेशोक्तिप्रकाशव्याख्यायाः परिष्करणं कर्तुं श्रीहरिदासश्रेष्ठितनुजन्मना बाबू जयकृष्णदासगुप्तमहोदयेन प्रोत्साहितोऽहं छात्राणां तत्र तत्र विषयेषु झटिति बुद्धिप्रगमनाय प्रतीकान् विरचय्य सम्बन्धस्य विरामाविरामार्थं सङ्केतचिह्नानि विधाय प्रकरणसूचीं विषयसूचीं च व्यररचम्।

नागेशोक्तिप्रकाशोपेतलघुशब्देन्दुशेखरस्य संशोधनकार्यभारं पं०श्रीसुदामामिश्रशास्त्रिणाऽतिप्रमुदोरीकृत्य प्राचीनग्रन्थं मुहुर्मुहुर्वीक्ष्य तत्तद्ग्रन्थं सङ्कलय्य जटिलग्रन्थसन्देहकर्दमान् श्रीगुरुचरणोक्त्यम्बुना प्रक्षाल्य अवशिष्टांशं परिष्कृत्य च पण्डितरामचन्द्रपणशीकरशास्त्रिणः साहाय्येन यथाशेमुषि समपादि। अतः संशोधनकर्तुर्महोदयस्योपकारान् स्मृत्वा तेभ्यो धन्यवादान् वितरामः।

तत्र परिष्करणयुतसंशोधितप्रकृतग्रन्थे गच्छतस्स्खलनन्यायान्मदीयमतिमान्द्याद् दृष्टिदोषाद्वा याः काश्चन त्रुटयः स्युस्ता गुणैकपक्षपातिनो विद्वांसो हंसक्षीरन्यायेन संशोध्य

न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ १ ॥

इत्युक्तिमनुसन्धाय मामनुगृह्णन्त्विवति साञ्जलिबद्धं मुहुर्मुहुः सम्प्रार्थयते।

विदुषामनुचरः—

जोशीत्युपाह्वसदाशिवशास्त्री।

* श्रीः *

# अथ नागेशोक्तिप्रकाशोपेतलघुशब्देन्दुशेखरस्य प्रकरणसूचिका।



इति नागेशोक्तिप्रकाशोपेतलघुशब्देन्दुशेखरस्य प्रकरणसूचिका।

# अथ नागेशोक्तिप्रकाशोपेतलघुशब्देन्दुशेखरस्य विषयसूचिका।

**इति नागेशोक्तिप्रकाशोपेतलघुशब्देन्दुशेखरस्य नपदान्तसूत्रावसाना विषयसूची समाप्ता ।**




सर्वविधपुस्तकप्राप्तिस्थानम्—

**जयकृष्णदास हरिदास गुप्तः—**

**चौखम्बा संस्कृत पुस्तकालय,**

**बनारस सिटी ।**

* श्रीः *

॥ श्रीशः शरणम् ॥

नागेशोक्तिप्रकाशोपेतः—

# लघुशब्देन्दुशेखरः ।

पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः ।

---

दधती काञ्चनसुषमामनिशं हरिदम्बराश्लिष्टा ।
चपलातीतचरित्रा चित्रा कादम्बिनी जयति ॥ १ ॥
वाणीपदनखकिरणोऽज्ञानतमिस्रावृतं मम स्वान्तम् ।
आक्रम्यार्थान् गूढान् नागेशोक्तेः प्रकाशयतु ॥ २ ॥
मैथिलभूसुरवर्यश्रीमदुमादत्तशर्मणस्तनुजः ।
खुद्दीशर्मा रचयति नागेशोक्तिप्रकाशमतियत्नात् ॥ ३ ॥
पुरातन्यष्टीका यदपि विलसन्त्येव शतशः,
परं नैताः प्रत्येकमुचितसमस्तोक्तिकुशलाः ।
निबन्धुं ताः श्रीमद्गुरुवचनसूत्रैरहमतः,
प्रवृत्तः संयाचे बुधजनकृपादृष्टिमसकृत ॥ ४ ॥

प्रारिप्सितकृतिप्रतिबन्धकदुरितचयविघातायादौ श्रीपतञ्जलिनाम कीर्त्तयन् लोकप्रवृत्तये स्वस्य ग्रन्थरचनापरीयस्त्वं सूचयंश्च निबध्नाति· *पातञ्जल इत्यादि*। पतञ्जलिना प्रोक्ते योगशास्त्रे महाभाष्ये चेत्यर्थः । विनाऽपि च गामश्वं पुरुषं पशुमित्यादौ समुच्चयस्य प्रतीतेः । एतेन "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्रमादाय वक्ष्यमाणं मार्त्तण्ड इत्येतद्व्याख्यानावसरे वस्तुत इत्यादिना सिद्धान्तार्थकथनमसङ्गतं; पातञ्जलसूत्रार्थानवबोधादिति शङ्काया नावकाश इति सूचितम् ।

अन्ये तु महाभाष्य इत्येतावदुक्तौ शारीरके पातञ्जल इत्येतावदुक्तौ च चरकेऽतिव्याप्तिरत उभयमुपात्तमित्याहुः ।

एतेन व्याकरणभाष्यस्यैव पतञ्जलिप्रोक्तत्वात्सर्वतो महत्त्वाच्चैकतरोपादानेनैव विवक्षितार्थलाभसम्भवे उभयोपादानं विफलमित्याक्षिपन्तः परास्ताः ।

शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ॥ १ ॥

यत्त्वेतदाक्षेपनिरासाय 'पातमि'ति 'अकृते'ति च पृथक् पदं छित्वा भूरिपरिश्रमो यो नागेशः महाभाष्ये जले जलवद् दुरवगाहे पातमकृत सततुत इत्येवं व्याचख्युः । तदसत्; जलपातस्यामङ्गलस्य प्रतीतेः ।

*कृतभूरिपरिश्रम इति* । एतेन निर्वक्ष्यमाणसिद्धान्तेषु क्वानुत्प्रेक्षितत्वेनानुपेक्षणीयतां व्यनक्ति ।

ननु बोधाभावे भूयसाऽपि परिश्रमेण तत्प्रतिपादितार्थतत्त्वधीर्न सम्भवतीत्यतो विशिनष्टि-*धीमानिति* ऊहापोहकुशल इत्यर्थः ।

ननु सत्यपि भूरि परिश्रमे सत्यपि च भाष्यतत्त्वार्थधीनैपुण्ये मातापित्रोर्दुष्टत्वे तद्दोषस्य पुत्रेऽपि संक्रमेण सम्प्रमोहेन तत्त्वार्थविवेचनन्न सम्भवतीत्यतो मातापितरौ कीर्तयन्नाह-*शिवभट्टसुत इति* । *सतीदेव्यास्तुगर्भज इति च* तथा च यस्य पितरौ सतीशिवात्मकौ कथन्तस्य दोषलेशोऽपीति सूचयति । सती चासौ देवीति विग्रहः । न च "ङ्यापोः" इति ह्रस्वः कृतह्रस्वेन संज्ञाप्रतीतावेव तत्प्रवृत्तेः । अत्र योगरूढः सच्छब्दः साधुकार्यकारित्वसमानाधिकरणतद्व्यक्तित्वप्रवृत्तिनिमित्तकः पुंसि च साधुकार्यकारित्वमात्रप्रवृत्तिनिमित्तको यौगिकः । तथा च प्रवृत्तिनिमित्तभेदान्न पुंवत्कर्मधारयेत्यस्य प्रसक्तिः । यत्तु "संज्ञापूरण्योश्च" इति सूत्रे संज्ञाग्रहणसामर्थ्याद्योगार्थमात्रेणापि यत्र प्रवृत्तिनिमित्तैक्यं तत्रापि पुंवद्भावः प्रवर्त्तते । अत एव दत्ताभार्य इत्यत्र दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्तीति कौमुदीग्रन्थोऽपि सङ्गच्छते । एवञ्च पुंवद्भावप्रसङ्गादिह कर्मधारयो न युक्तः । "संज्ञापूरण्योः" इति निषेधस्तु नेह प्रवर्त्तते कर्मधारये बाधकबाधनाय विशिष्य तद्विधानादिति वदन्ति, तन्न । योगार्थमात्रेण प्रवृत्तिनिमित्तैक्ये प्रवृत्तौ प्रमाणाभावात् । संज्ञाग्रहणन्तु दत्ताभार्य इत्यत्रैव चरितार्थम् ।

न च तत्र प्रवृत्तिनिमित्तभेदः उपपुत्रप्रकरणे दत्तशब्दस्य दानक्रियाकर्मत्वविशिष्टापत्यकार्यकारित्वप्रवृत्तिनिमित्तकस्य स्त्रीपुंसयोः प्रवृत्तिप्रतिपादनात् । एवञ्च कौमुदीग्रन्थोऽप्येतत्पर एव बोध्यः । नचैवं संज्ञात्वाभावः, कुरुषु प्रवर्त्तमानस्योत्तरशब्दस्येवाधुनिकसङ्केतकल्पनात् ।

केचित्तु सती पार्वती दीव्यति स्तौति सतीः पतिव्रताः पातिव्रत्येन विजिगीषतेवेति विग्रहे कर्मण्यणि योगरूढोऽयमिति न पुंवत्त्वप्रसक्तिरित्याहुः । शुद्धरूढोऽयमित्यन्ये ।

याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गिवेरपुराधीशाद् रामतो लब्धजीविकः ॥ २ ॥
नत्वा फणीशं नागेशस्तनुतेऽर्थप्रकाशकम् ।

---

ननु सत्स्वपि भूरिपरिश्रमबुद्धिवैशद्यमातापित्रानुगुण्येषु दुष्टान्नभक्षणे बुद्धिमान्द्याद्वृत्त्यभावेऽस्थैर्याच्च सिद्धान्तार्थप्रतिपादनं दुर्घटमित्यत आह-*रामतो लब्धजीविक इति* । तथा च रामतुल्याल्लब्धजीविकस्य बुद्धिमान्द्यमस्थैर्यञ्च न सम्भवतीति तात्पर्यम् ।

सत्यामपि जीविकायामस्य कार्पण्येन वितरणयोग्यद्रविणालाभादस्थैर्यं सम्भाव्य विशिनष्टि-*याचकानां कल्पतरोरिति* । तस्याल्पधनत्वात्कदाचिद्वृत्तिहानिमुद्भाव्याह-*शृङ्गिवेरपुराधीशादिति* । कदाचिदरिभी राज्यभ्रंशमाशङ्क्याह-*अरिकक्षहुताशनादिति* । कक्षेषु शुष्ककाननेषु हुताशनः कक्षहुताशनः अरिषु कक्षहुताशनः, अरिकक्षहुताशनः, हुताशनो यथाऽतिप्रज्वलन् कक्षान् दहति तथा प्रतापेनातिप्रज्वलन्नरिसङ्घविघातकस्तथाभूतादित्यर्थः । "कक्षस्तु दोर्मूले शुष्ककानने" इति त्रिकाण्डशेषः ।

अरय एव कक्षाः शुष्ककाननं तत्र हुताशन इति भैरवमिश्रादयः । तदरिषु कक्षत्वारोपेण दौर्बल्यादेः प्रतीत्या तेषां हनने प्रतीयमानेऽपि सबलारिपराजयशङ्काया अनुच्छेदाद्धेयमेव । आदौ पतञ्जलिनामकीर्त्तनात्मकमङ्गले सत्यपि "आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम्" इत्यभियुक्तोक्तेर्नत्यात्मकमङ्गलमपि प्रतिपादयति-*नत्वेति* । फणीशं फणिनां सर्पाणामीशं पतञ्जलिं तस्य शेषांशत्वात् ।

*नागेश इति* । स्वनामग्रहणस्य युक्तत्वायुक्तत्वविचारो नम्धात्वर्थश्चान्यतोऽवसेयः । ननु मनोरमयैव मूलोक्तार्थस्य सुग्रहत्वात्प्रयासवैयर्थ्यमत आह-*मनोरमोमार्द्धदेहमिति* । मनोरमैवोमाऽर्द्धंदेहो यस्य तमित्यर्थः । एतेन तदुक्तानामर्थानां प्रायः कथनाभावो ध्वनितः ।

यद्वा मनोरमोमाया योऽर्द्धस्तं देहयति व्याख्यानेन वर्द्धयति यस्तम् । 'दिह उपचये' ततो णिजन्तात्कर्मण्यण् ।

यद्वा मनोरमोमाया अर्द्धं द्यति खण्डयतीति मनोरमोमार्द्धदा "आतोऽनुपसर्गे कः" इति कः, तथाभूता ईहा चेष्टा यस्य तमित्यर्थः । पुमांसो हि स्त्रीणामल्पज्ञत्वात्तदुक्तं सम्मतं गृह्णन्ति असम्मतं खण्डयन्ति चेति लौकिकम् ।

*अर्थप्रकाशकमिति* । मनोरमापेक्षयाऽधिकार्थप्रकाशकमित्यर्थः ।

मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम् ॥ ३ ॥

ग्रन्थसमाप्तिग्रन्थप्रचारादिप्रतिबन्धकदुरितप्रशमाय समुचितऋषित्रयनमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतृणामनुषङ्गतो मङ्गलाय च निबध्नाति-मुनित्रयमिति। कारकविभक्तेर्बलवत्त्वाद् द्वितीया। परिभाव्येति। तच्छब्दस्य बुद्धि-

---

*लघुशब्देन्दुशेखरमिति*। लघवो ये शब्दास्त एवेन्दुः प्रकाशकत्वेन स शेखरः प्रधानं यस्मिन् तमित्यर्थः। एतेनात्र ग्रन्थे प्रायो लघव एव शब्दा बहूनर्थान् प्रकाशयन्ति क्वचिदेव शब्दगौरवमिति सूचयति। फणीशादिपदैः शिवस्य नतिकर्मत्वमपि बोधयति।

तथाहि-फणिनः वासुकेरीशं मनोरमणकारकोमार्द्धदेहं शब्द इवेन्दुः प्रकाशकत्वेन लघुर्द्वितीयातिथिसमुद्भूतः स शेखरो मस्तकालङ्कारो यस्य तथाभूतम्। अर्थानां घटादीनां ज्ञानद्वारा प्रकाशकं "ज्ञानमिच्छेच्च शङ्करात्" इत्यभिधानात्। एतादृशमेतच्छास्त्रप्रवर्त्तकाचार्यवर्यं शिवं पतञ्जलिञ्च नत्वा विशेषणविशिष्टं लघुशब्देन्दुशेखरं तनुते विस्तारयत इति तन्त्रादिना सम्पन्नः समुदितार्थः। अनुबन्धचतुष्टयं स्वयमूहनीयम्।

*समुचितेति*। समुचितत्वमेतच्छास्त्रप्रवर्त्तकसम्बन्धित्वेन बोध्यम्। *व्याख्यातृश्रोतृणामिति*। आनङ् तु नात्र शङ्क्यः-पूर्वोत्तरपदयोर्विद्यायोनिसम्बन्धवाचित्व एव तत्प्रवृत्तेः, श्रोतुश्चातथात्वात्।

यद्वा व्याख्यातृभ्यः श्रोतार इत्यस्तु योगविभागसाध्यः पञ्चमीसमासः। *अनुषङ्ग इति*। फलान्तरेच्छया प्रवृत्तस्यानायासेन फलान्तरसम्बन्धोऽनुषङ्गः। *निबध्नाति*-ग्रन्थघटकीकरोति। नमस्कृत्येत्यत्र नमःपदस्याकाङ्क्षानिर्वाहकतया नमःपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वप्रकारकतात्पर्यविषयान्मुनित्रयपदाच्चतुर्थीमाशङ्क्याह-*कारकविभक्तेरिति*। *बलवत्त्वादिति*। ननु बलवतीशब्दस्य गुणवाचकत्वाभावेन त्वतलोरित्यस्याप्राप्त्या निर्देशोऽनुपपन्न इति चेद्, न। 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेन' इत्यभियुक्तोक्तेर्बलवच्छब्दादपि त्वप्रत्यये बलसम्बन्धस्यैव प्रतीत्या तस्य स्त्रीपुंससाधारण्येन स्त्रीलिङ्गशब्दप्रतिपाद्यकारकविभक्तावन्वयस्य निर्बाधत्वात्। अत एव पृथिव्या गन्धवत्त्वं लक्षणमित्यादयः प्रयोगा अपि सङ्गच्छन्ते।

स्थपरामर्शकत्वात् प्राचामुक्तीस्तिरस्कृत्येत्यर्थः, मुनित्रयोक्तीर्विचार्येत्यर्थो वा । "परिभावस्तिरस्क्रिया" इति कोशात्तिरस्कारार्थकस्य धातोर्विचारार्थकत्वेऽपि न बाधकम् । धातूनामनेकार्थ-

---

भट्टास्तु कुक्कुटाण्डसमासवत्स्त्रीप्रत्ययोत्पत्तेः पूर्वं तद्धितः ततस्तु न सः, "एकार्थीभावेन वृत्तस्य च विशेषणयोगो न" इति प्रतिषेधात् 'शरदः कृतार्थता' इतिवत्सामान्ये नपुंसकमिति वेति समाधानद्वयमाहुः ।

ननु कृधात्वर्थफलान्वयविवक्षायां द्वितीयाया नमःशब्दार्थान्वयविवक्षायां चतुर्थ्याश्च प्रवृत्तेर्विभिन्नविषयत्वाद्बलवत्त्व प्रतिपादनं विफलमिति चेद्, न । नमःशब्दस्य निपातत्वेन द्योतकतया द्योतकवाचकसमभिव्याहारे विषयताया विनिगमनाविरहेणोभयप्रयोज्यत्वमिति सिद्धान्तेन द्वितीयाचतुर्थ्योः समानविषयकत्वात् । न च नमस्कृत्येत्यस्य समस्तत्वेन जहत्स्वार्थायां नमःपदपर्याप्तप्रयोजकताकविषयताया अभावेन कथं चतुर्थीप्रसक्तिरिति वाच्यम् । "जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी" इत्युक्ते रूढयोगार्थविरोधित्व एव तदुपगमात् ।

यत्तु स्वस्त्यादिसाहचर्येण वाचकस्य स्वरादिपठितनमःशब्दस्य योग एव चतुर्थी विधीयते, न तु साक्षात्प्रभृतिपठितस्य द्योतकस्य नमःशब्दस्य योग इति न्यायानुसरणं विफलमिति माधवानुयायिनः, तन्न । स्वस्त्यादिसाहचर्यस्य विनिगमनाविरहेणाक्षरसमाम्नायिकान्तत्वेनाजन्तत्वेन वा ग्रहणापत्तौ देवेभ्यो नमोऽत्रेत्यादावेव चतुर्थी स्यान्नतु देवेभ्यो नम इत्यत्रेति साहचर्यानाश्रयणस्यैवात्र युक्तत्वात् । *बुद्धिस्थपरामर्शकत्वादिति* । बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तत्वादित्यर्थः । *तिरस्कृत्येत्यर्थ इति* । यद्यपि परिसमभिव्याहारे भुवस्तिरस्कारार्थत्वं तदुत्तरणिचा तु प्रयोजकव्यापारोऽभिहित इति तिरस्कार्येति वक्तुमुचितम्, तथाऽपि घञन्तपरिभावशब्दात् "तत्करोति" इति णिचि तिरस्कारं कृत्वेत्यस्य फलितार्थप्रदर्शनपरमिदमिति ज्योत्स्नाकारः ।

केचित्तु परिभवतेस्तिरोभवनं ण्यन्तस्य तिरस्करणमर्थ इति तिरस्कृत्येति विवरणं सम्यगेवेत्याहुः, तन्न । अनुपदवक्ष्यमाणकोशाच्छुद्धधातोरेव तिरस्कारार्थताऽवगतेः । आचारिणस्तु निवृत्तप्रेषणाद्धातोर्हेतुमति णिजिति समादधुः । *विचार्येत्यर्थो वेति* । एतच्चार्थद्वयमावृत्त्या बोध्यम् । तथा च न 'सकृदुच्चरित'न्यायविरोध इति । *तिरस्कारार्थक-

स्य धातोरिति*। ननूक्तकोशस्य नामलिङ्गानुशासनत्वेन ततो धात्वर्थ-निर्णयोऽनुचितः । अत एव कोशेऽपि परिभवपरीभावयोरबन्तघञन्त-योरुभयोरुपादानं सङ्गच्छते । अन्यथा एकतरोपादानेनैव सर्वेषां शक्ति-निर्णये तदुपादानवैयर्थ्यं स्पष्टमेवेति चेद्, न । तिरस्कारार्थस्य तिर-स्कारार्थत्वेन विवक्षितस्य धातोर्विचारार्थकत्वेऽपि न बाधकं तत्र हेतुद्व-यम्-'परीभावस्तिरस्क्रिया'इति कोशादिति, 'धातूनामनेकार्थत्वात्'इति च, तथा च कोशे उभयोरेवोपादानात्तद्भिन्नस्य विचारार्थकत्वेऽपि न बाधकमिति तात्पर्यात् ।

केचित्तु योगार्थेऽबाधितेऽवयवार्थोपस्थितिसहकृततया एव समु-दायोपस्थितेः शाब्दबोधौपयिकत्वेन कोशस्य धातुशक्तिनिर्णयेऽपि तात्पर्येण यथाश्रुतमेव सम्यगित्याहुः, तन्न । अत्र कल्पे 'धातूनामने-कार्थत्वात्' इति हेतोरसङ्गत्यापत्तेः । तथा हि—कस्य शब्दस्य कस्मि-न्नर्थे शक्तिरित्यनियमप्रसङ्गे नियमार्थमेव कोशस्य प्रणयनात्प्रकृते परि-भवतेर्धातूनामनेकार्थत्वाश्रयणेऽबाधितयावदर्थनिरूपितशक्तिस्वीकारे ऽनियमस्य दुर्वारतया कोशप्रणयनवैयर्थ्यमिति घञन्ताबन्तयोः शक्ति-निर्णय एव कोशतात्पर्यस्यावधारणादित्येके ।

ज्योत्स्नाऽनुयायिनस्तु—"परीभावस्तिरस्क्रिया" इति कोशात्तिर-स्कारार्थस्य परिभावशब्दस्य धातोः परिभाव्येत्यत्र णिलोपे धातुत्व-वतः धातोरित्युक्तिस्तु अनेकार्थकत्वे साधकस्य धातुत्वरूपस्य सम्प-त्तिसूचनायेति व्याचख्युः, तन्मते घञन्ताण्णिचि परिभाव्येत्यस्योप-पादितत्वात् ।

भट्टास्तु—तिरस्कारार्थस्य परिभावशब्दस्यावयवो यो धातुस्त-स्येति वैयधिकरण्येन व्याख्येयम् । अन्यथा तु न सम्भवः, उपसर्ग-समानाकारत्वेन परेः पृथक्करणाद्विशिष्टस्य धातुत्वाभावादित्याहुः ।

नन्वेवमपि तिरस्कारार्थस्य धातोर्विचारार्थकत्वेऽपीत्यनुपपन्नम् ; कोशेन परिभवतेस्तिरस्कारार्थकत्वं विचारार्थकत्वन्तु णिजन्तस्येति चेद् , न । कोशात्तिरस्कारार्थस्य परिभवतेर्धातोर्विचारार्थकत्वे विष-यत्वापत्त्यर्थकत्वे तदुत्तरणिचा तदनुकूलकृत्यभिधानाद्विषयत्वापादनरू-पविचारार्थकत्वं परिभावयतेरिति तात्पर्यात् ।

यद्वा वैयधिकरण्यान्वयेन कोशात्तिरस्कारार्थो यो धातुस्तत्सम्ब-न्धिनो ण्यन्तधातोरित्यर्थः । ज्योत्स्नाकृतस्तु इदञ्च णिज्द्योतक इति पक्षाभिप्रायेणेति समादधुः । अत एव धातूनामनेकार्थकत्वादेव तन्मा-त्रार्थकत्वे तु व्यावर्त्याभावेनावश्याम इति विफलमेव स्यादिति भावः ।

त्वात् । अत एव "परौ भुवोऽवज्ञाने" ( पा० ३-३-५५ ) इति सङ्गच्छते । एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता समूलत्वञ्च ध्वनितम् । भाविनोऽपि बुद्ध्या विषयीकरणादियमिति निर्देशः । सिद्धान्तप्रकाशकत्वेनातिदुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च कौमुदीसादृश्यम् । अने-

---

परे तु इदं मन्दं धातूनामनेकार्थकत्वे सति तात्पर्येऽबाधितया-वज्ञार्थप्रतीतेरिष्टापत्त्यावर्थनिर्देशस्य वैयर्थ्यापत्तेः । अवज्ञानग्रहणस्य तु न वैयर्थ्यम्, परिशब्दस्य प्रायः सर्वत्र इत्यर्थकत्वेन प्रसिद्धेरिहापि तथैवेति भ्रमनिरासेन कृतार्थत्वादित्याहुः । *एतेन*-आवश्यार्थद्वय-करणेन । नन्विदमः प्रत्यक्षगतमित्यभियुक्तोक्तेरियमिति निर्देशोऽनुपपन्न इत्यत आह—*भाविनोऽपीति* । ग्रन्थस्येति शेषः । स्त्रीलिङ्गनिर्देशस्तूपमानगतलिङ्गारोपाद्बोध्यः । नन्विह कौमुदीशब्दप्रयोगः सादृश्यमूलकतत्त्वाध्यवसायेनैवेति तत्र सादृश्यप्रयोजको धर्मः क इत्याकाङ्क्षायामाह-*सिद्धान्तप्रकाशकत्वेनेत्यादि* । *शामकत्वेनेति* । ननु शाम्यतेर्ण्वुलि "नोदात्तोपदेश" इति वृद्धिनिषेधाण्णिचि वृद्धावपि मित्त्वेन ह्रस्वस्य दुर्वारत्वाच्च निर्देशोऽनुपपन्न इति चेद्, न । ण्वुलन्तात्प्रज्ञाद्याणि निशामयेति वत् चौरादिकण्यन्तात् ण्वुलि वा तत्सम्भवात् । क्वचित्तु शमकत्वेनेत्येव पाठः । अथ 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति न्यायेन ग्रन्थरचनाप्रवृत्तौ कीर्त्तिः प्रयोजनं वाच्यम्, सा हि लोकानां ग्रन्थाध्ययनप्रवृत्त्यधीना प्रवृत्तिमात्रं प्रति चेष्टसाधनत्वप्रकारकं कृतिसाध्यत्वप्रकारकं च ज्ञानं हेतुः अत एव न कोऽपि जलताडने सुमेरुशिखरानयने वा प्रवर्त्तते निरुक्तज्ञानद्वयञ्चेहानुबन्धज्ञानं विनाऽसम्भवि । अनुबन्धाश्च—सम्बन्धश्चाधिकारी च विषयश्च प्रयोजनमित्युक्तेश्चतुर्विधाः । ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वञ्चानुबन्धसामान्यलक्षणम् । तत्र विषय इष्टसाधनत्वप्रकारके कृतिसाध्यत्वप्रकारके च ज्ञाने भासते । अधिकारी कृतिसाध्यत्वप्रकारकज्ञाने भासते । प्रयोजनमिष्टसाधनत्वज्ञाने भासते । सम्बन्धश्च ज्ञानद्वये भासते इति तद्भासनार्थमावश्यकानुबन्धचतुष्टयज्ञानाय तन्निरूपणमावश्यकमित्याह—*अनेनेति* । अत एव "विनाऽनुबन्धं ग्रन्थादौ प्रबन्धो नैव शस्यते'

न वैयाकरणसिद्धान्ता विषयाः, तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुर- धिकारीत्यादि सूचितम् ।

अइउण् ( मा० सू० १ )। एषां क्रमबोधकत्वेऽपि "आ- दिरन्त्येन" ( पा० सू० १-१-७१ ) इत्यनेनैकवाक्यतया वृत्ति- परिच्छेदकत्वेन संज्ञासूत्रत्वम् । क्रमस्य संज्ञाद्वारैवोपयोगात् । एकवाक्यता चादिरकारादिरन्त्येनेता तत्सदृशेन णकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां संज्ञेति । "स्वौजस्" ( पा० सू० ४-१-२) इत्यादीनामप्येतदेकवाक्यतया सुबादिसंज्ञासूत्रत्वं

---

इति वृद्धा अपि प्रचक्षते । *वैयाकरणसिद्धान्ता विषया इति* । इदञ्चिन्त्यम्, प्रवृत्तौ सिद्धान्तज्ञानस्योद्देश्यत्वेन प्रवृत्त्युद्देश्यस्यैव विषयरूपानुबन्धत्वौचित्यात् । *तज्ज्ञानं प्रयोजनमिति* । इदमपि चिन्त्यमेव, वैयाकरणसिद्धान्तज्ञानस्य तदध्ययनरूपत्वेन तस्य कौमु दीप्रणयनप्रयोजनत्वेन ग्रन्थाध्ययनप्रवृत्तौ प्रयोजनत्वासम्भवात् । अन्यप्रयोजनज्ञानेनान्यत्र प्रवृत्तेरयुक्तत्वात् । तस्मात् "रक्षोहादीनि" भाष्योक्तानि प्रयोजनान्येव वक्तुमर्हाणि । *तज्जिज्ञासुरिति* । वैयाक- रणसिद्धान्तजिज्ञासुरित्यर्थः । इदमपि मन्दमेव अत्यन्तमूर्खाणां चाण्डा- लादीनाञ्च तज्जिज्ञासुत्वेऽधिकारितापत्तेः । तस्मादधीतकाव्यकोशा- दिर्द्विजोऽधिकारीति वक्तव्यम् । *इत्यादीति* । आदिना प्रतिपाद्यप्र- तिपादकभावादिः सम्बन्धोऽनुसन्धेयः ।

ननु—

"संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥"

इत्युक्तेः सूत्रषाड्विध्यलाभान्माहेश्वरसूत्राणां क्वान्तर्भाव इत्यत आह-*एषामिति* । *क्रमबोधकत्वेऽपीति* । इदं चिन्त्यम्, क्रमे शक्त्यभावेन तद्बोधकत्वासम्भवात् । न च क्रमो नामानुपूर्वी, तथा च आनुपूर्व्यवच्छिन्नविषयताकप्रत्यक्षजनकत्वेऽपीत्येवार्थ इति वाच्यम् ? सर्वेषामपि सूत्राणान्तथाभूतत्वेनोपादानवैयर्थ्यात् । अथ क्रमवैशिष्ट्येन ज्ञायमानानामेवैषां प्रत्याहारबोधकपदघटितसूत्रजन्यबोधधर्मिकाप्रामाण्य ज्ञानानास्कन्दितत्वोपयोगित्वेऽपीत्यर्थः । यथा-"अइउण्" इत्यादेः "इको- यणाचि" इत्यादिशास्त्रजबोधधर्मिकाप्रामाण्यज्ञानानास्कन्दितत्वोपयोगि-

स्वादिविधायकत्वञ्चेति बोध्यम् । एषु संहिताया अविवक्षया न

---

ताक्रमवैशिष्ट्येन ज्ञायमानस्यैव, न तु "उइअण्" इत्यादिव्युत्क्रमवैशिष्ट्येन ज्ञायमानस्य एतदेवाभिप्रेत्य, अन्यथा इणादिप्रत्याहारे उकारादीनामग्रहणमकारादीनाञ्च ग्रहणं प्रसज्येतेति भावमाविष्कुर्य्योत्तनाकाराः । न तथाऽन्येषां, तेषाम् "आदैज्वृद्धिः" इति व्युत्क्रमेण ज्ञायमानत्वेऽपि वाक्यार्थबोधोपयोगितासम्भवात् तेषामपि व्युत्क्रमे पारायणादावदृष्टहानिरिति त्वन्यदिति चेत् ? एतावता कथञ्चिद्योजनासम्भवेऽप्युपादानस्य प्रयोजनविरहादेव हेयत्वात् । *वृत्तिपरिच्छेदकत्वेनेति* । शक्तिग्राहकत्वेनेत्यर्थः । ननु शक्तिग्राहकत्वं संज्ञासूत्रत्वे मूलञ्चेत्तदा "तस्यापत्यम्" "कर्त्तरि कृत्" इत्यादीनामप्यणादिनिष्ठशक्तिग्राहकत्वेन तत्त्वं स्यादिति चेत् ? अत्र भट्टाः-संज्ञाशब्दनिष्ठवृत्तिपरिच्छेदकत्वेनेत्यर्थः । "कर्त्तरि कृत्" इत्यादीनान्तु अणादिजातिशब्दनिष्ठशक्तिग्राहकत्वेन न दोष इति प्रोचुः ।

अन्ये तु शक्तीयधर्मितावच्छेदकावच्छिन्नपरिचायकत्वेनेत्यर्थः । यथा इगादिपदनिष्ठाया "आदिरन्त्येन" इत्यनेन बोधिता शक्तिः सा इकारादिककारान्तघटकइक्पदाद्बोद्धव्य इत्याद्याकारिका तदीयधर्मितावच्छेदकावच्छिन्ना इकारादयः "अइउण्" इत्यादिभिः परिचीयन्त इति ते तत्परिचायका इति वदन्ति ।

नन्वेकत्र क्रमबोधकत्वं वृत्तिपरिच्छेदकत्वञ्च युगपत्कथमत आह—*क्रमस्य संज्ञाङ्गत्वेनेति* । *आदिरिति* । तत्सदृश इत्यर्थः । सादृश्यमूलकाभेदे तु यथाश्रुतमपि । प्रसङ्गादाह-*स्वौजसिति* । *स्वादिविधायकत्वञ्चेति* । परे तु इदं चिन्त्यम्—यदि संज्ञासूत्रेणैकवाक्यतामात्रेण संज्ञासूत्रत्वं स्यात्, तर्हि सर्वेषामेव गुणशास्त्राणामन्ततो विधिसूत्रेणैकवाक्यत्वात्तत्त्वेन व्यवहारः स्यात्, तस्मात् साक्षाच्छक्तिग्राहकशास्त्रत्वं संज्ञाशास्त्रत्वम्, साक्षाच्छास्त्रतात्पर्यग्राहकत्वं परिभाषात्वम्, साक्षादितरव्यावर्त्तकत्वं नियमत्वम्, साक्षात्साधुत्वसंपादकत्वं विधित्वम्, साक्षात्सादृश्यग्राहकत्वमतिदेशत्वम्, साक्षादेकवाक्यतामात्रेण बोधोपयोगित्वमधिकारत्वमित्येव तत्तल्लक्षणं वक्तव्यम् । एषाञ्चैवं संज्ञासूत्रत्वासम्भव एव । किञ्चैकवाक्यताऽपि न सम्भवति "आदिरन्त्येन" इत्येतत्सूत्रीयाद्यन्तपदयोराक्षरसमाम्नायिकाकारणकारादौ शक्तेरभ्युपगमेन बोधनिर्वाहे पदतदर्थयोरेकवाक्यताव्यवहारस्य क्वाप्यदृष्टत्वात् । त्रिविधास्वप्येकवाक्यतासु कस्याश्चिदप्यत्राप्रसक्तेश्च । एवं

"स्वौजस्" इत्यत्रोभयविधसूत्रत्वव्यवस्थापनमपि चिन्त्यमेव । एवं सति सूत्रषड्विधत्वव्याघातापत्तेः । घटपृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि दशविधानि द्रव्याणीति व्यवहारवारणाय स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यामिथोविरुद्धयावद्धर्मबोधनस्यैव विभागपदार्थत्वाभ्युपगमेन प्रकृते सूत्रत्वव्याप्यसंज्ञात्वविधित्वयोरेकत्र समावेशे मिथोऽविरुद्धत्वात् । किन्तु "अइउण्" इत्यादीनामकारादिवर्णसाधुत्वविधायकत्वेन विधिसूत्रत्वमेव । अत एव "ऋलृक्" सूत्रस्थलृकारोपदेशसार्थक्यप्रतिपादनपरः "ऋलृवर्णयोः" इति वार्तिकव्याख्यानावसरीयः शेखरोऽपि सङ्गच्छते । अत एव च वार्णकार्याणामपि सार्थक्यम् । अन्यथा साधूनामेवैतच्छास्त्रसंस्कार्यत्वसिद्धान्तेन तद्वैयर्थ्यं स्पष्टमेव । "स्वौजस्" इत्यादीनान्तु विधित्वं सुघटमेवेत्याहुः ।

*संहितायां अविवक्षयेति* । नन्वग्रे "इको यणचि" इत्यत्र कुमुद्सौत्रत्वात्कथं परिहृतः, संहिताऽविवक्षयैव परिहारसम्भवात् । कुमुद्सूत्रे संहिताऽधिकारो नास्तीति तु न वाच्यम्, "तयोर्य्वावचि" इत्यारभ्याऽऽध्यायसमाप्तेरधिकारस्य सत्त्वादिति चेद्, न । तत्र संहितायां अविवक्षायां सूत्रभेदापत्तेः । पूर्वसंहितापाठेन दण्डकीकृतायामष्टाध्याय्यां संहिताविवक्षयैव सूत्रविभागस्य वार्तिककृता कृतत्वात् । "अइउण्" इत्यादौ प्रतिवर्णं सूत्रत्वस्य प्रतिवर्णं साधुत्वविधायकत्वेनेष्टापत्तिग्रस्तत्वाक्ष क्षतिः । चतुर्दशसूत्रीयव्यवहारस्त्वनुबन्धचतुर्दशत्वप्रयुक्तो गौणो बोध्यः ।

ननु 'संहितैकपदे नित्या' इत्युक्तेः सुप्तिङ्चयरूपवाक्य एव संहितायां विवक्षाधीनताप्रतीतेः प्रकृते तदभावेन कथमविवक्षेति चेद् ?

अत्रोदयङ्करभैरवमिश्रौ—यत्र कारकान्विता क्रिया प्रतीयते तत्रैव तादृशवाक्यत्वाङ्गीकारः । प्रकृते तु शक्तपदसमुदायस्य वाक्यपदेन ग्रहणम् । यथा-'गवित्ययमाह' इत्यस्य वाक्यत्वात्समासग्रहणनिवर्त्यत्वोपपत्तिः । नचैतादृशवाक्यत्वस्यात्रग्रहणे 'चक्रतुः' इत्यत्र कदाचिद्यण्रहितप्रयोगोऽपि स्यादिति वाच्यम् । 'संहितैकपदे' इत्यनेन विशिष्य संहिताया नित्यत्वबोधनादित्याहतुः ।

श्रीधरस्तु-'वाक्ये तु' इत्यत्र वाक्यपदस्यैकपदधातूपसर्गसमासान्योपलक्षणत्वेन न दोष इत्यप्याह । न चैवमपि "अइउण्" इत्यादीनां विशिष्टानां पदत्वेन संहिताया नित्यत्वं स्यादिति वाच्यम् ? सौत्वादेश्रवाबि-

संहिताकार्यम् । अनुकरणत्वेन सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः । कारप्रत्ययोऽपि न, बाहुलकात् ।

---

शिष्टेभ्यः सुबनुत्पत्तेः। अत एव न तकारादीनां जश्त्वादिशङ्काऽपि। *अनुकरणत्वेनेति*। अनुकार्यानुकरणयोरभेदविवक्षायामर्थवत्त्वाभावेनाप्रातिपदिकत्वादिति भावः। स्वमते भेदविवक्षापक्षस्य सिद्धान्तितत्वात्समाध्यन्तरमाह—*सौत्रत्वाच्चेति*। ननु 'एवमानुपूर्वीका श्रुतिरेवैषा' इति ग्रन्थेन वास्तविकश्रुतित्वस्य स्वयमेव वक्ष्यमाणत्वेन छन्दस्त्वादित्येव वक्तव्ये छन्दोवत्सूत्रेत्यतिदेशप्रवर्त्तकं सौत्रत्वादित्युक्तमयुक्तमिति चेद्, न। सूत्राणामिदं सौत्रं पाणिनिसूत्रमूलभूतं तदुपकारकं वा तत्त्वात् सौत्रत्वात्, छन्दस्त्वादिति यावत्। अत एव अणपि सफलः, अन्यथा सूत्रत्वादित्येव वदेदिति भट्टाः। *न विभक्त्युत्पत्तिरिति*। सौत्रत्वमप्यनुकरणत्ववत् प्रातिपदिकत्वप्रतिबन्धद्वारैव विभक्त्युत्पत्तिप्रतिबन्धकं "गुणे त्वन्याय्यकल्पना" इति न्यायात्।

श्रीधरस्तु—सौत्रत्वात् "सुपां सुलुक्" इति लुक् न विभक्त्युत्पत्तिरित्यस्य लुकाऽनुत्पत्तेरेवान्वाख्यानेन तदर्थत्वलाभादिति भावमाविश्चकार। तज्ज्ञातलुक्यनुत्पत्त्यन्वाख्यानेऽपि शास्त्रद्वयानुसन्धानलाघ्यत्वेन गुरुभूतमिति बोध्यम्। *कारप्रत्यय इति*। "वर्णात्कारः" इत्यनेनेति भावः। *बाहुलकादिति*। "रोगाख्यायाम्" इत्यतो बहुलग्रहणानुवृत्तेरिति भावः। अथ "वर्णात्कारः" इत्यस्य कोऽर्थः? यदि वर्णशब्दात्कारप्रत्यय इत्यर्थः, तर्हि वर्णशब्दादतिव्याप्तिः, आदिभ्योऽव्याप्तिश्च। यदा वर्णबोधकादित्यर्थस्तदाऽपि वर्णशब्दात्प्रमेयादिशब्दाच्चातिव्याप्तिः। यदि लोके वर्णशब्देन व्यवहृतो यस्तस्मादित्यर्थस्तदोच्चारणार्थाकारविशिष्ट'ह'इत्यादिभ्यस्तदनापत्तिः। यदि वर्णमात्रबोधकादित्यर्थस्तदाऽपि वर्णशब्दादतिव्याप्तिः। यदि तु वर्णत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकादित्यर्थः। भेदगर्भाया व्याप्तेश्च प्रवेशान्न स्वव्याप्यत्वं स्वभिन्नत्वादाच वर्णशब्दात्तदापत्तिरिति मन्यते, तदाऽपि अनुस्वारविसर्गादिशब्देभ्यस्तदापत्तिः। न च यतः कारप्रत्ययश्चिकीर्षितस्तद्वृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चरितादित्यर्थ इति वाच्यम्। अनुनासिकपदस्य स्वघटकनकारवृत्त्यनुनासिकत्वरूपवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चरितत्वात्ततोऽतिव्याप्तेः। न च यतः कारश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्य-

जात्यवच्छिन्नविषयताप्रयोजकत्वप्रकारकतात्पर्येणोच्चारितादित्यर्थः, अनुनासिकत्वस्य च गुणत्वेन न दोष इति वाच्यम् । गुणपदादेः स्वघटकाकारादिवृत्त्यत्वादिजात्यवच्छिन्नविषयताप्रयोजकत्वप्रकारकतात्पर्येणोच्चारितत्वेनातिव्याप्तेः । वर्णत्वव्याप्यजात्या साक्षादवच्छिन्नाया विषयताया निवेशेन गुणादिपदस्यान्यतमत्वेन साक्षादवच्छिन्नविषयताप्रयोजकत्वेन तत्रापत्तिवारणेऽपि तत्त्वाद्यवच्छिन्नविषयताकबोधतात्पर्येणोच्चारितात्तच्छब्दादतिव्याप्तेस्तादवस्थ्याच्चेति चेद् ? अत्र केचित्-वर्णत्वव्याप्यधर्मविशिष्टात्कारप्रत्यय इत्यर्थः । वैशिष्ट्यञ्च स्वावच्छिन्नविषयताकबोधतात्पर्यकत्व, स्वानाश्रयीभूतो य उच्चारणार्थकाजितरो वर्णस्तदघटितत्वैतदुभयसम्बन्धेन । वासुदेवबोधतात्पर्यकादशब्दादतिव्याप्तिवारणाय प्रथमः सम्बन्धः । अनुस्वारविसर्गानुनासिकगुणतच्छब्दादिभ्योऽतिव्याप्तिवारणाय द्वितीयः सम्बन्धः । तेषां यादृशयादृशवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्यकत्वं तत्तदनाश्रयीभूतोच्चारणार्थकाजितरवर्णघटितत्वात्, "दिव उत्" "अच्च घेः" इत्यादौ 'उत्' इत्यादिभ्यस्तद्वारणायाजिति । उच्चारणार्थाकारघटित'ह्'इत्यादिभ्यस्तदुत्पत्तये च स्वानाश्रये उच्चारणार्थाजितरत्वं विशेषणम् । न चैवमपि कादिबोधतात्पर्यकादुच्चारणार्थकेकारघटितात्किशब्दादतिव्याप्तिर्दुर्वारा । "हयवरट्" इत्यादौ पुनः पुनरकारोच्चारणसामर्थ्यादुच्चारणार्थं इकारादिरज् नास्त्येवेति तु न युक्तम् , यीवर्णयोरित्यादाविकारस्यापि तथाभूतस्योपलब्धेरिति वाच्यम् ; ककारादिवत्किकारादेरपीष्टत्वात् । यदि तु लक्ष्यैकचक्षुष्कतामाश्रित्य नेष्यत इत्युच्यते, तदा द्वितीयसम्बन्धे भेदप्रतियोगितयाऽच्सामान्यमप्रवेश्याकारमात्रप्रवेशेनादोष इति वदन्ति ।

अन्ये तु वर्णत्वव्याप्यधर्मविशिष्टात्कारप्रत्यय इत्यर्थः । वैशिष्ट्यञ्च—स्वावच्छिन्नविषयताकप्रत्यक्षजनकघटितत्व स्वावच्छिन्नविषयताकशाब्दबोधजनकत्वप्रकारकतात्पर्येणोच्चरितत्व स्वावच्छिन्ननिरूपितशक्त्यधिकरणसमभिव्याहृतं यत्स्वावच्छिन्ननिरूपितशक्त्यनधिकरणेतरतदघटितत्वैतत्त्रितयसम्बन्धेन । तथा चानुनासिकपदे प्रथमसम्बन्धेन न त्ववैशिष्ट्यस्य द्वितीयसम्बन्धेनानुनासिकत्ववैशिष्ट्यस्य वा सत्त्वेऽपि त्रितयसम्बन्धेन कस्यापि धर्मस्य वैशिष्ट्यविरहान्न दोषः । तकारबोधतात्पर्यकतत्पदे प्रथमसम्बन्धद्वयेन तत्त्ववैशिष्ट्यसत्त्वेऽपि तत्त्वावच्छिन्ननिरूपितशक्त्यधिकरणतकारसमभिव्याहृततत्त्वावच्छिन्ननिरूपितशक्त्यनधिकरणघटादीतराकारादिघटितत्वेन तृतीयसम्बन्धेन

यत्तु "उपजीव्यविरोधात् सन्धिर्न । तथा हि अजादिसंज्ञाग्रहकाले "आद् गुणः" (पा० सू० ६-१-८७) इत्यादीनामनिष्पत्त्या तदप्रवृत्तावविकृतरूपाकारादिषु गृहीताजादिपदशक्तिः पश्चादच्प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुध्येत । न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवति" इति । तन्न । पुनरच्पद-

---

वैशिष्ट्यविरहान्न दोषः । यदि तु उच्चारणार्थककारादिवर्णघटितकिशब्दादिभ्यस्तदापत्तिरिति विभाव्यते, तदा स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चरितत्व, स्वेतरोच्चारणार्थाकारेतरवर्णाघटितत्वोभयसम्बन्धेन वर्णविशिष्टात्कारप्रत्ययो भवतीत्येवार्थोऽस्तु । समन्वयः स्वयमेवोहनीय इत्याहुः ।

अत्रेदं बोध्यम्—हकारादिष्वकार इत्यत्र हकारशब्दाद् व्यञ्जनबोधात्सामीप्यमेव सप्तम्यर्थो, न तु घटकत्वमसम्भवात् । तथा च हकारादिसमीपे योऽकारः स उच्चारणार्थ इत्यर्थः पर्यवसेय इति । नन्वेवमपि 'अन्कारं विशेषयिष्यामः' इति भाष्यप्रयोगः कथं सङ्गच्छते इति चेद् ? न । "अनिनस्मिन्" इति परिभाषयाऽन्नादिषु वर्णत्वबोधनेन तत्सिद्धेरित्येके ।

वृण्ड्यनुसारिणस्तु—"उच्चैस्तरां वा वषट्कारः" इति सूत्रनिर्देशादेवकारोऽपकृष्यत इत्यादिभाष्यप्रयोगाद् बहुलग्रहणानुवृत्तेश्च क्वचिद्वर्णसङ्घातान्निपातादपि भवति । अन्नित्यादेरप्यनुकरणत्वेन निपातत्वान्न दोष इत्याहुः ।

अन्ये तु वषट्कार इत्यादौ 'अन्कारः' इत्यत्र च यजन्तकारशब्देन समास एव, न तु कारप्रत्यय इति वदन्तीत्यलम् ।

स्वरसन्धिस्तु न प्रवर्तते; वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादादिति कैयटोक्तं तु न युक्तम् । तदुपदेशकालेऽजादिसंज्ञानामनिष्पादेऽपि सवर्णसंज्ञादिफलस्य दीर्घादेः "तुल्यास्य"सूत्रादाविव स्वरसन्धेरत्र प्रवृत्तौ बाधकाभावादिति कौस्तुभे दीक्षितोक्तं दूषणमुद्दिधीर्षुणा रत्नकोशकारेण कैयटग्रन्थ उपजीव्यविरोधात्सन्धिर्नेत्यर्थकतया व्याख्यातः । तद्दूषयितुमनुवदति-*यत्त्विति* । *उपजीव्यविरोधादिति* । अविकृताकारादिषु गृहीताजादिपदशक्तिः स्वोपजीव्याविकृतत्वविघा-

स्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात् । न च सन्धौ सन्देहः । व्याख्यानतो निर्णयसम्भवात् ।

---

तकाद् गुणप्रवृत्तिं प्रति निमित्तं न भवतीति भावः । *अर्थान्तर इति* । विकृताकारादावित्यर्थः । किन्तु पूर्वं यत्रैव शक्तिग्रहस्तत्रैवेति कुतो विरोधस्तदेवाह—*विरोधाभावादिति* । अयम्भावः—"आदिरन्त्येन" इति सूत्रेणाविकृताकारादित्वेन वर्णसङ्घातस्यापि संज्ञापत्तेः प्रयोगस्थानां व्यक्तिपक्षे वर्णसमाम्नायघटकभिन्नत्वाच्च मध्यगत्वेन रूपेण वा शक्तिर्न बोध्यते, किन्तु तादृशसमुदायमध्यगबोध्यवर्णत्वेन रूपेणैवेति तस्य सन्ध्युत्तरमपि सौलभ्येन कुतो विरोध इति ।

यत्तु 'अविकृताकारादिषु' इति ग्रन्थस्यायमाशयः—अविकृताकारादिष्विति सत्सप्तमीज्ञायमानेष्वित्यस्याध्याहारः । तथा च—तेषु ज्ञायमानेषु सत्स्वेव गृहीता याऽजादिपदशक्तिरित्यर्थः । अर्थात् अजादिपदशक्तिग्रहं प्रत्यविकृताकारादिश्रावणप्रत्यक्षत्वेन कारणता पश्चात्सन्धौ चाविकृताकारादिश्रवणन्न भविष्यतीत्युपजीव्यविरोधः । एतदेव न चेत्यादिश्रवणम्भवतीत्यन्तेन ध्वनितमित्याचार्यानुयायिनः । तन्न । तन्नेत्यादिखण्डनग्रन्थस्यापि न ह्यजादिपदशक्तिग्रहं प्रत्यविकृताकारादिश्रावणप्रत्यक्षत्वेन कारणता, अपि तु अविकृताकारादिबोधजनकत्वेनाद्यवक्तृतात्पर्यविषयो यः समुदायस्तद्विषयकज्ञानत्वेनैव तस्य च सन्धावप्यविनाशेन विरोधाभावादित्याशयात् । अन्यथा सुप्प्रत्याहारात्प्राक् "इको यणचि" इत्यादेरनिष्पत्त्याऽविकृतस्वादिप्रत्यक्षत्वेन सुबादिशक्तिग्रहं प्रति कारणतया पश्चात्सन्धौ तत्प्रत्यक्षाभावेन विरोधात्सन्ध्यनापत्तेरिति दिक् । नन्वकारादिष्वजादिपदशक्तिग्रहमुपजीव्य प्रवर्त्तमानं सन्धिकार्यमुक्तशक्तिग्रहविरोधिनोऽजादिपदबोध्यो ह्रस्वोऽकारो दीर्घो वेत्यादिसन्देहस्य प्रयोजकतया विरोधान्न प्रवर्त्तत इत्याशङ्क्य निराकरोति—*न चेत्यादिना* । *व्याख्यानत इति* । पाणिनिमारभ्य गुरुशिष्यपरम्परया "अस्य"इत्यादौ गुणे कृतेऽपि त्रिशब्दस्यैव निर्देशो, न तु त्रेशब्दस्येत्यादिनिर्णयवन्निर्णयसम्भवादिति भावः ।

परे तु सन्धिविधायकशास्त्रेण न श्रावणप्रत्यक्षादि निवार्यते, अपि तु तत्प्रसङ्गे एतत्साधु एतदुच्चारणेन पुण्यं भवतीत्येव बोध्यते । तथा च कुत उपजीव्यविरोधलेशोऽपि । किञ्चाजादिपदशक्तिग्रहकाले "आद् गुण"इत्यादेरनिष्पत्त्योपजीव्यविरोधोपपादनमप्ययुक्तमेव । महेश्व-

ननु चतुर्दशसूत्र्यामक्षरसमाम्नाय इतिव्यवहारानुपपत्तिरा-म्नायसमाम्नायशब्दयोर्वेदे एव प्रसिद्धेरित्यत आह-माहेश्वराणीति । महेश्वरादागतानीत्यर्थः । महेश्वरप्रसादलब्धानीति फलितम् । एवञ्चैवमानुपूर्वीका श्रुतिरेवैषा । तत्प्रसादात्पाणिनिना लब्धा । श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम् ।

---

श्वरस्य लक्ष्यैकचक्षुष्कत्वेन "आद् गुण" इति सूत्राख्यानेऽपि तेन कृतसन्धिकस्यैव प्रयोगसम्भवेनाविकृताकारादिधर्मिकस्य शक्तिग्रहस्य कदाचिदप्यसम्भवात् । अत एव लक्ष्यैकचक्षुष्कस्य पाणिनः "अकः सवर्ण" इति सूत्रानिष्पत्तावपि "तुल्यास्य" इत्यादिनिर्देशः सङ्गच्छत इत्याहुः । *आम्नायेति* । एतदुपादानं दृष्टान्तार्थम्, यथाऽऽम्नायशब्दस्य वेद एव प्रसिद्धिस्तथा समाम्नायशब्दस्यापीति तात्पर्यम् । *महेश्वरादागतानीति* । न तु तत्कृतानीति भावः । ऋते प्रसादात्तदागमनमसम्भवात्याह—*तत्प्रसादेति* । गत्यर्थानां प्राप्त्यर्थत्वादाह-*लब्धानीति* । ननु चतुर्दशसूत्र्या ईश्वरकृतत्वमेवास्तु, तावतैव वेदत्वं वेदान्तिनयेऽप्येवमेव । तदुक्तं तत्सूत्रकृता-"शास्त्रयोनित्वादिति" शास्त्रं—वेदः, तद्योनित्वादीश्वरस्येति तदर्थादिति चेद्, न । वैयाकरणस्य मीमांसकानुयायित्वेन तन्मये चेश्वरस्यैवानभ्युपगमेन तत्कृतत्वासम्भवात् । यः कल्पः स कल्पपूर्व इति न्यायेन संसारस्यानादितया ईश्वरस्य च सर्वज्ञत्वेनेश्वरो गतकल्पीयं वेदमेव स्मृत्वोपदिशतीत्येतावतैवोपपत्तौ तत्कृतत्वकल्पनाया अन्याय्यत्वाच्च । *अस्यैव वेदाङ्गत्वमिति* । एवकारेण व्याकरणान्तरस्यैव व्यवच्छेदो न त्वङ्गान्तरस्य विजातीयत्वात् ।

परे तु श्रुतिमूलकत्वमेव, यदि वेदाङ्गत्वे हेतुः स्यात्तर्हि ज्योतिरादेस्तद्विरहे तत्त्वानुपपत्तिरतो यदि श्रुत्युपयोगित्वमपि हेतुर्वाच्यस्तदा व्याकरणान्तरस्यापि प्रयोगसाधुत्वबोधनद्वारा तदुपयोगितायास्तुल्यत्वात्तैत्तरीयशाखायामैन्द्रव्याकरणस्य प्रशंसादर्शनेन तस्यापि वेदमूलकत्वप्रयुक्तवेदाङ्गत्वध्रौव्याच्चैवकारोपादानानुपपत्तिः।

किञ्च श्रुतिमूलकत्वस्य वेदाङ्गताहेतुत्वे मन्वादिस्मृतीनामपि तदापत्तौ वेदस्य षडङ्गत्वानुपपत्तिः ।

किञ्च एतस्यैव व्याकरणस्य वेदाङ्गत्व एतद्व्याकरणप्रणयनात्प्राग्वेदस्य पञ्चाङ्गत्वापत्तिः, तस्मादिदञ्चिन्त्यमेवेत्याहुः ।

केचित्तु एवकारमप्यर्थकत्वेनोपवर्ण्य कथञ्चित्प्रदर्शिता आपत्तीः परि-

अत्र प्रमाणम्—"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तम्" (पा० शि० ५७)

इति शिक्षावचनम् । "लण्सूत्रे णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति-व्याख्यानत इति" इत्यादावाचार्यपदेन महेश्वरः । अनुबन्धाश्च महेश्वरकृता एवेत्यनुपदं स्फुटीभविष्यति । "ञमङणनम्" (मा०सू०७) इत्यत्र मकारप्रत्याख्यानपरं भाष्यं तु किमदृष्टार्थमेव तदुच्चारणमुत दृष्टार्थमपीत्येवं विचारपरम् । सर्वत्र प्रत्याख्यानमेवम्परमेव । अन्यथाऽङ्गानामपि पारायणे धर्मश्रवणेन तत्र तत्र पाणिनिन्यासप्रत्याख्यानस्याऽसङ्गतिः स्यात् । तदुक्तम् "इको यणचि" (पा०सू० ६-१-७७) इति सूत्रे-

"सामार्थ्ययोगान्न हि किञ्चिदत्र,

---

जहुः । *अत्रेति* । चतुर्दशसूत्र्या वेदत्वे महेश्वरात्पाणिनेर्लाभे चेत्यर्थः ।

पाखण्डास्तु—'येनाक्षरे'त्यादि प्रमाणं न सम्यक्, शिक्षायाः पाणिनिशिष्यकृतत्वेन शिष्येण गुरोराधिक्येन वर्णनस्य गुरुवाक्यस्य वेदवत्परिरक्षणस्य च लोकप्रसिद्धत्वेन समाम्नायपदोपादानस्य प्रशंसापरत्वादित्याहुः ।

नन्वेषां महेश्वरप्रसादलब्धत्वे "लण्"सूत्रभाष्ये आचार्यप्रवृत्तिरित्यत्राचार्येत्यप्रसङ्गतम्, आचार्यपदेन तत्र तत्र पाणिनेर्व्यवहारादत आह—*लणसूत्रे णकारविषयेति* । अस्या आचार्यप्रवृत्तिरित्यनेन सहाभेदान्वयः । नन्वनुबन्धानां महेश्वरकृतत्वे तेषां पारायणादावदृष्टार्थतया "ञमङणनम्" इत्यत्र मकारप्रत्याख्यानपरभाष्यविरोध इत्यत आह--*ञमङणनमित्यत्रेति* । फलं द्विविधं दृष्टमदृष्टञ्च तत्र दृष्टफलकत्वाभावबोधनस्यैव प्रत्याख्यानपदार्थत्वेन न कर्त्तव्य इत्यस्य दृष्टफलकत्वाभाववदर्थकत्वेन न विरोध इत्येवोपपादयन्नाह-*किमित्यादि*। *एवं विचारपरमिति *। एवं विचारार्थदृष्टार्थमेवेत्येवंपरमित्यर्थः । *अन्यथा*—सर्वत्र प्रत्याख्यानस्यैवंपरत्वाभावे । *सामर्थ्ययोगादिति* । सम्यगर्थः समर्थः सम्यक्प्रयोजनं, स्वार्थे ष्यञ्, तस्य योगात् । सर्वत्रादृष्टरूपस्य सम्यक्फलस्य सम्बन्धादिति यावत् । अयमेवार्थो भट्टसम्मतोऽपि । यद्वा-योगस्य सामर्थ्यं सामर्थ्ययोगः, राजदन्तादिः । मम (पतञ्जलेः) पाणिनेर्वा योगबलादित्यर्थः ।

पश्यामि शास्त्रे यदनर्थकं स्यात्" इति ।

किञ्चिद् दृष्टादृष्टार्थवत्, किञ्चिच्छुद्धादृष्टार्थवत्, सर्वथाऽनर्थकं न किञ्चिदिति तदर्थः । वृद्धिसूत्रस्थे-"वर्णेनाप्यनर्थकेन न भवितव्यम्" इति भाष्यग्रन्थेऽनर्थकत्वं बोध्यार्थराहित्यरूपमिति न निष्प्रयोजनत्वरूपानर्थक्येन तत्र तत्र प्रत्याख्यानपरभाष्यासङ्गतिः । अत एव "सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः" इति भाष्यमुपादायोक्तं भर्तृहरिणा-"यथैवेदमव्युच्छिन्नं चन्द्रतारकादि एवमस्याक्षरसमाम्नायस्य न कश्चिद् आधुनिकः कर्ताऽस्ति एवमेव वेदपारम्पर्येण स्मर्यमाणः" इति । आधुनिकः शरीरी । पुष्पितत्वं तन्मूलकशब्दशास्त्रद्वारेण । शब्दप्रयोगेण च फलितत्वम् । उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृतकाशिकायाम्—

---

प्रत्याख्यानभाष्यस्य दृष्टार्थकत्वखण्डनपरत्वे "वृद्धि"सूत्रस्थभाष्यविरोधमाशङ्क्य समाधत्ते—*वृद्धिसूत्रस्थ इति* । तत्र हि—संज्ञासंज्ञिनोरानिर्णयात्सूत्रानर्थक्यस्येष्टत्वमप्रतिपादयन्तम्प्रति सिद्धान्तिनोक्तम्—"अशक्यं वर्णेनाप्यनर्थकेन भवितुम्"इत्यादि । *बोध्यार्थराहित्यरूपमिति* । प्रत्याख्यानस्थलेऽपि बोध्यार्थराहित्यं नास्ति, बोधस्तु भवत्येव केवलं दृष्टफलकत्वं नास्तीत्येवेति न तद्विरोध इति भावः । *अत एव*—चतुर्दशसूत्र्या वेदत्वादेव । *प्रतिमण्डितः*-शोभितः । *अव्युच्छिन्नम्*-अनश्वरम् । *वेदपारम्पर्येणेति* । परम्परैव पारम्पर्यं वेदसम्बन्धिनी गुरुशिष्यपरम्परा तया स्मर्यमाणं वेदस्याध्येत्रध्यापकाभ्यामधीयमानाध्याप्यमानत्वाभ्यामस्यौपचारिकं वेदत्वमिति भावः । न कश्चिदाधुनिकः कर्ताऽस्तीत्युक्त्या अचिरंतनः कर्ताऽस्तीति प्रतीतिं निवारयति—*आधुनिकः शरीरीति* ।

वस्तुतस्तु नैतद्वेदत्वसाधकम् । तथा हि—महाप्रलये चन्द्रादेरपि नाशात्तद्दृष्टान्तेनाव्युच्छिन्नमित्यस्यानश्वरमित्यर्थो न युक्तः, किन्तु चिरस्थायीत्येव । एवमाधुनिक इत्यस्य योगार्थम्परित्यज्य शरीर्यर्थकत्वे प्रमाणाभावेन चिरन्तनः कर्ताऽस्तीत्येव प्रतीयते । किञ्च शरीर्यर्थकत्वेऽपि अशरीरिणः कर्तुः प्रतीतिर्दुष्परिहरैवेति बोध्यम् ।

"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥
अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥" इति ।

धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् । अत एव "अनुबन्धकरणार्थश्च वर्णानामुपदेशः" इत्युक्तं भाष्ये । अत्र करणशब्दप्रयोगेणानुबन्धानां सादित्वं सूचितम् । तत्करणश्चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेः । तेन तद्व्यतिरिक्तस्य सर्वस्यानादित्वं

---

*ननादेति* । अन्तर्भावितण्यर्थतया नादयामासेत्यर्थः । *नवेति* नवाधिकाः पञ्च नवपञ्च, नवपञ्चानां वाराणां समाहारो नवपञ्चवारम् । एतद् ढक्कानादरूपं वस्तु विमर्शे विचारे कृते सति शिवसूत्रजालं जातं, प्रतीम इति शेषः ।

केचित्तु-एतद् ढक्कानादरूपं वस्तु शिवसूत्रजालं बभूवेति विमर्शे विचारयामीति व्याचख्युः । तन्मृशतेः परस्मैपदित्वाच्छप्रत्यये परे गुणनिषेधाच्चागतिकगतिभूतस्यार्षत्वस्याश्रयणे गौरवाच्च हेयमेव । *अन्त्यवर्णचतुर्दशमिति* । चतुरधिका दश चतुर्दश अन्त्यवर्णाश्च चतुर्दश अन्त्यवर्णचतुर्दश, ते सन्ति यस्मिन् कदम्बे तदन्त्यवर्णचतुर्दशम् , अर्शआद्यच् । यद्वा, अन्त्या वर्णाश्चतुर्दश यस्मिन्निति बहुव्रीहिः । तद् णादिलान्तानुबन्धसमुदायरूपम्, अजिति योगविभागादच् । 'अन्त्यं वर्णचतुर्दशम्' इति पाठे चतुर्दशानां पूरणं चतुर्दशं डट् , वर्णानां चतुर्दशं वर्णचतुर्दशम् । 'अन्त्यवर्णाश्चतुर्दश धात्वर्थं समुपादिष्टा' इति पाठ इत्युदयङ्करः । *समुपादिष्टम्*—सम्यग् यथोचितम् , उप समीपे, आदिष्टं समन्ताद्भावेनोच्चारितम् । *अत एव*—अनुबन्धानां महेश्वरकृतत्वादेव । *वर्णानामुपदेश इति* । अत्रोपदेश शब्दो बोधनपरः । *अनादित्वं सूचितमिति* । वस्तुतस्तु अनादित्वे न मानम् । अनुबन्धकरणार्थश्चोपदेश इति भाष्य उपदेशशब्द "आदेच उपदेश" इत्यादाविवोच्चारणार्थक एवेत्यनुबन्धातिरिक्तानामपि तत्कृतत्वमेव । नृत्तावसान इत्यादितोऽपि सनकादीष्टसिद्धये प्रथममन्त्यवर्णरहितानां पश्चात्पाणिन्यादीष्टसिद्धयेऽन्त्यवर्णानाञ्च करणमेव स्वरसत उपपद्यत इति

सूचितम् । अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मोपदेशरूपत्वं सूचितम् । तच्च श्रुतित्वाभावे न सङ्गच्छते । "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्युक्तेः । ऋक्तन्त्रव्याकरणे शाकटायनोऽपि—"इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः" इति । ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः । तत्त्वञ्च नन्दिकेश्वरकृतकाशिकायां स्पष्टम् । अत एव "वृत्तिसमवायार्थो वर्णानामुपदेशः कर्तव्यः" इति भाष्ये उक्तम् । पाणिनेर्लाघवेन शास्त्रप्रवृत्तिफलको यः समवायो वर्णानां क्रमेण सन्निवेशस्तदर्थं इति तदर्थः । स चाणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः । एवञ्चायमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम् । मन्त्रोपदेश इतिवच्चात्रोपदेशपदप्रयोगः ।

---

दिक् । *तच्च श्रुतित्वाभावे न सङ्गच्छत इति* । इदमपि मन्दम्, श्रुतित्वाभाववता गीतादिना वेदान्तशास्त्रादिना च ब्रह्मोपदेशानुपपत्तेः । न च 'श्रोतव्यः श्रुतिवाक्येभ्यः' इति स्मृतिविरोध इति वाच्यम् ? तत्र श्रुतिवाक्येभ्य इत्यस्य श्रुतिप्रतिपाद्यार्थप्रतिपादकवाक्येभ्य इत्यर्थात् । एषां श्रुतित्वे प्रमाणान्तरमाह—*ऋक्तन्त्रेति* । *अक्षरच्छन्द इति* । अक्षरबोधको वेद इत्यर्थः । *वर्णश इति* । वीप्सायां शस् । समनुक्रान्तं सम्यगनुक्रमेण दर्शितं, मयेति शेषः । पूर्वोक्तं छन्दस्त्वं दृष्टान्तप्रदर्शनेन द्रढयति-*यथेति* । *अक्षरसमाम्नायमित्याचक्षत इति* । नन्विह इतिना कर्मण उक्तत्वात्कथं द्वितीयेति चेदत्र भट्टाः—तं खल्विममक्षरसमाम्नायं ब्रह्मराशिरिति हेतोर्न भुक्त्वा न नक्तं प्रब्रूयादिति ऋषयो ब्राह्मणेभ्य आचक्षत इति शाकटायनोऽप्याहेत्यन्वयमाहुः । उदयङ्करस्त्वन्यथैव समादधौ । *अत एव*—चतुर्दशसूत्र्या अन्योपदिष्टत्वादेव, वेदत्वादेव वा । ननूपदिशेः "आदेच उपदेशे" इत्यादौ पाणिनीयापूर्वोच्चारणार्थकत्वस्येवेह महेश्वरापूर्वोच्चारणार्थकत्वं युक्तं, तथा च तन्निर्मितत्वं प्राप्तमित्यत आह—*मन्त्रोपदेशवदिति* । न हि मन्त्र उपदेष्टृनिर्मित इति भावः ।

अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यं फलमिति भाष्ये उक्तम् । व्याकरणमुपक्रम्य "वेदानां वेदः" इति छन्दोगश्रुतिरप्येतत्परैवेति दिक् ।

तत्प्रयोजनमाह-सञ्ज्ञाऽर्थानीति । एतच्चोपपादितम् । सञ्ज्ञाप्रणयनञ्च लाघवेन शास्त्रप्रवृत्त्यर्थमिति बोध्यम् ।

संज्ञाऽर्थत्वोपपत्तये आह-एषामिति ।

अकारश्चेति । तेन रप्रत्याहारसिद्धिः । अनन्त्यत्वात्पृथगुक्तिः । इदं "तुल्यास्य" ( पा० सू० १-१-९ ) सूत्रस्थकैयटानुरोधेन ।

परे त्वस्यानुनासिकत्वे "अतो ल्रा"(पा०सू० ७-२-२) इति सूत्रे पाणिनिर्लकारं नोच्चारयेत् । प्रत्याहारेणैव निर्वाहात् । किञ्चा-

---

अन्ये तु वृत्तिः--आदिरन्त्येनेति बोधिता शक्तिः, तस्याः समवायः सम्यग् ज्ञानं, तदर्थः-उपदेशः, पाणिनेरपूर्वमुच्चारणमित्येव तद्भाष्यार्थ इति नैतन्महेश्वरोपदिष्टत्वे वेदत्वे वा प्रमाणम्भवितुमर्हति । किञ्च मन्त्रोपदेशवदिहोपदेशपदप्रयोगेऽपि न किञ्चिद्बलवत्साधकमुपलभ्यत इत्याहुः । *अत एवेति* । महेश्वरकर्त्तृकत्वाभावादेवेत्यर्थः । इदञ्चित्यम्--बादरायणकर्त्तृकस्यापि भारतादेः सर्ववेदपारायणजपुण्यफलत्वोक्तेः ।

*एतच्चोपपादितमिति* । एषां क्रमबोधकत्वेऽपीत्यादिनेति शेषः । *रप्रत्याहारेति* । "उरण् रपर"इति सूत्रनिर्दिष्टेत्यर्थः । *कैयटानुरोधेनेति* । तत्र हि ऋऌवर्णयोः सावर्ण्यस्वीकारे ऌकारस्थाने रपरत्वं स्यादित्याशङ्कायां "लपरत्वं वक्ष्यामि" इति वार्त्तिककृतोक्तम् । तद्रप्रत्याहाररूपेण व्याख्यास्यामीति कैयटो व्याख्यत् । *लकारन्नोच्चारयेदिति* । यत्त्वत्रोदयङ्करभैरवश्रीधराः--लकारोच्चारणसामर्थ्याद्रप्रत्याहारोऽनित्यस्तेन "रदाभ्यां" "वनोरच" "रात्सस्य" इत्यादौ न प्रत्याहारग्रहणमिति फलान्यभिधायातोऽरुचेराह--*किञ्चास्येत्यादि*इत्याहुः, तच्चिन्त्यम् । रप्रत्याहारोऽनित्य इत्यस्य यदि रेफलकारोभयनिरूपिता रेफनिष्ठाशक्तिरनित्येत्यर्थः । स चासम्भवी, शक्ततावच्छेदकसत्त्वे शक्त्यसत्त्वस्य वचनसहस्रेणापि सम्पादयितुमशक्यत्वात् । अतिप्रसक्तत्वेन शब्दत्वस्येव रत्वस्य शक्ततावच्छेदकत्वानुपपत्तेश्च ।

स्येत्सञ्ज्ञकत्वे बहुषु यण्पदघटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन यप्रत्याहारेणैव व्यवहरेत् । किञ्चानुबन्धानामच्प्रत्याहारे ग्रह-

---

न च रप्रत्याहारजन्योभयबोधोऽनित्य इत्यर्थः, सामग्रीसत्त्वे बोधस्यावश्यम्भावात् । न च रपदं सर्वत्र रलतात्पर्येण नोच्चरितमित्येवानित्यत्वमिति वाच्यम् । क्वोभयतात्पर्येणोच्चरितं, क्व नेत्यस्य व्याख्यानतो निर्णेयत्वेन "उरण्रपरः" इत्यत्रेव "अतोॡ" इत्यत्रापि लक्ष्यानुरोधेनोभयतात्पर्येणोच्चरितमिति व्याख्यातुं शक्यत्वेन लकारस्य स्वांशेऽचारितार्थ्यप्रसङ्गात् ।

अथ लोके यथा नानार्थस्थले देवदत्तोच्चरितहरिपदधर्मिकतादृशतद्व्यक्तित्वधर्मितावच्छेदकाविष्णुत्वावच्छिन्नविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानाद्विष्णुत्वावच्छिन्नविषयको बोधः । एवं यज्ञदत्तोच्चरितहरिपदधर्मिकतद्व्यक्तित्वधर्मितावच्छेदकेन्द्रत्वावच्छिन्नविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानादिन्द्रविषयको बोधः, न तु सर्वत्र हरित्वरूपसामान्यधर्मितावच्छेदकतात्पर्यधीः शाब्दधियं प्रयोजयति । तथा सत्यन्यतात्पर्येणोच्चरितादप्यन्यबोधप्रसङ्गात् , न तथा शास्त्रे । तत्र तु अष्टाध्यायीस्थवृद्धिपदत्वावच्छेदेन आदैज्विषयकबोधजनकत्वप्रकारकतात्पर्यं ग्राहयति "वृद्धिरादैच्" इति सूत्रम् । एवमष्टाध्यायीस्थरपदत्वावच्छेदेन प्राप्तो य "आदिरन्त्येन" इत्यनेन तात्पर्यग्रहस्तत्र लकारोच्चारणेन "उरण्रपरः" इत्येतद्घटकरपदधर्मिकतद्व्यक्तित्वावच्छेदेनैव तात्पर्यं बोध्यते । तावतैवानित्यत्वकथनपरिरक्षणमिति चेद्, न । ज्ञापनस्य फलाभावात् । "रदाभ्याम्" इत्यादौ तादृशतात्पर्यनिश्चयस्य व्याख्यानतोऽपि सम्भवात् । "रदाभ्याम्" इत्यादौ प्रत्याहाराभावस्याकारेऽनुनासिकत्वाकरणेनाप्युपपत्तेश्चेत्यलम् । *बहुष्विति* । "इको यणचि" "इणो यण्" इत्यादिषु यत्र लाघवसम्भवस्तेष्वेव; न तु सर्वत्र । तथा सति "यणो मय" इत्यादौ याद्यस्येत्युभयकरणे गौरवात् । *यप्रत्याहारेणैव व्यवहरेदिति* । ननु पर्यायशब्दानां लाघवगौरवचर्चाऽनादरादिदमयुक्तमिति चेद्, न । "पर्यायशब्दानाम्" इति न्यायस्य गृहीतशक्तिकपदविषयकत्वेन प्रकृतेऽणादिपदशक्तिग्राहक"आदिरन्त्येन" इतिशास्त्रबोधितसङ्केततावच्छेदकत्वं यणत्वमपेक्ष्य लाघवाद्यत्व एव पाणिनिना कुतो न स्वीकृतमिति शङ्कायाः सम्भवात् । एतेनैतामरुचिमुपादाय द्वितीयकिञ्चेत्यस्यावतरणं भट्टोक्तमन्दमिति प्रतिभाति ।

नन्वेवमपि संज्ञाशब्दानामर्द्धमात्रिकत्वेन क्व लाघवावकाश इति चेद्,

णाभावे "आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" इति भाष्योक्तस्य तृतीयहेतोरव्यापकत्वापत्तिः । तत्र लोपस्य बलवत्त्वेऽपि

---

न । लाघवेन "लण्" सूत्र एव णकारमोच्चारयेदिति तात्पर्यात् । ननु णकारोच्चारणमकारेण सह रप्रत्याहार एव भवतीति ज्ञापनार्थं, तेन "ङेर्यः" "योऽचि" इत्यादौ न प्रत्याहार इति फलञ्च । किञ्च यवरलिति वर्णचतुष्टयबोधनाय क्वचिण्णकारेण क्वचिदकारेण प्रत्याहाराश्रयणेऽर्द्धजरतीयत्वम् । किञ्च यप्रत्याहाराश्रयणे "यस्य हलः" "योऽचि" इत्यादौ प्रत्याहाराश्रयणवारणाय कृत्रिमाकृत्रिमन्यायबाधनाय व्याख्यानाश्रयणे गौरवम् । किञ्च लक्ष्यानुसारिव्याख्यानेन कृत्रिमाकृत्रिमन्यायबाधे सर्वत्रोभयोर्ग्रहणवारणाय पुनर्लक्ष्यानुसारिव्याख्यानाश्रयणे च गौरवमित्यरुचेराह द्वितीयं-*किञ्चेति* । *अनुबन्धानामच्प्रत्याहार इति* । अत्राच्प्रत्याहार इत्यज्घटितः पाठः 'प्रत्याहारेऽनुबन्धानाम्'इत्यस्य सूत्रचतुष्टयानन्तरं पाठेन भाष्यकृतोपन्यासात्कृतः । वस्तुतस्त्वेतत्प्रत्याहारमात्रोपलक्षणम्, हल्प्रत्याहारे ग्रहणाभावस्येह विवक्षितत्वात् । *आचारादिति* । अनुनासिकादौ ककारादौ परतो यणाद्यकरणात्मकाचार्यव्यवहारादित्यर्थः । अप्रधानत्वन्त्वग्रे स्वयमेव वक्ष्यते । *लोपश्च बलवत्तर इति* । चो हेतौ बलवत्तरलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादित्यर्थः । *तृतीयहेतोरव्यापकत्वापत्तिरिति* । ननु नेदमनुमितिदूषणमपि तु गुणः । अत एव साध्यव्यापकहेतोरनैकान्तिकहेत्वाभासत्वेन न वह्न्यादिहेतुना धूमादेरनुमितिः । तथा च नेदं युक्तमिति चेदत्र केचित्-"तस्य लोपः" इत्यनेनान्यसूत्रैरिवोच्चारणाभावात्मकलोपस्य विधाने तत्तत्सूत्रेष्वनुबन्धानामुच्चारणानुपपत्त्याऽगत्या सूत्रघटकपदप्रयोज्यविषयत्वाभावस्यैव विधानेन प्रत्याहारजन्यबोधविषयत्वाभावरूपकार्यं प्रति लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वस्य हेतुत्वेन हेतोश्च कारणतावच्छेदकसम्बन्धेन कार्यव्यापकत्वनियमेन प्रकृते लण्घटकाकारस्यानुनासिकत्वेऽपि हशव्याद्यकारवत्पुनःपुनरुच्चारणादेव हलादिप्रत्याहारजन्यबोधविषयत्वाभावे सम्भवति तत्र लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोर्विरहेण भाष्योक्तहेतोरव्यापकत्वापत्तिरित्याशयः । यद्यप्यभावस्य नित्यत्वेन न तेन सह कार्यकारणभावो युक्तः,तथाऽपि प्रयोज्यप्रयोजकभावस्य सम्भवेन हेतुपदस्य प्रयोजकपरत्वेनोक्तरीत्या व्याख्यानं युज्यत एव । न च 'तस्य लोपः"इति सूत्रस्थलोपपदस्य तदर्थकत्वेऽनुबन्धेष्वित्पदप्रयोज्याविषयताऽपि न ग-

मिष्यतीति वाच्यम् ? "आदिरन्त्येन" इति सूत्रसामर्थ्यादित्वधर्मनिमित्तककार्यविधायकानेकसूत्रसामर्थ्याच्चान्त्यपदप्रयोज्याया इत्पदप्रयोज्यायाश्च विषयतायास्तत्राप्यभ्युपगमादित्याहुः ।

परे तु—हेतोरव्यापकत्वापत्तिरित्यनेन न साध्याव्यापकत्वमापाद्यते; किन्तु पक्षतावच्छेदकाव्यापकत्वम्, तच्च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ दूषणमेव । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ पक्षतावच्छेदकसामानाधिकरण्येन हेत्वसिद्धेर्भागासिद्ध्याख्यदोषत्वात् । अत एव न पर्वतत्वसामानाधिकरण्येन हेत्वनिश्चये पर्वतत्वावच्छेदेनानुमितिः । प्रकृते चानुबन्धत्वसामानाधिकरणतत्तद्व्यक्तित्वावच्छेदेनानुमितौ गौरवाल्लाघवाच्चतुर्दशसूत्रीयघटकानुबन्धत्वावच्छेदेनैवानुमितेरुपगन्तव्यतया "लण्" सूत्राकारस्यापि इत्संज्ञायोग्यत्वात्तत्कानुबन्धत्वरूपपक्षतावच्छेदकाक्रान्तत्वात्तत्र हेतोरसत्त्वेन भागासिद्ध्याऽनुमित्यनुपपत्तिरित्याशयः । तदेवोपपादयति-*तवेत्यादिना* । मत इति शेषः । एतदुपपादनमित्संज्ञालोपयोरभावेनेत्यन्तेन बोध्यम् । तथा चेत्थं प्रयोगः-चतुर्दशसूत्रीयघटका अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः, लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादिति वदन्ति ।

नन्वनुबन्धानामच्प्रत्याहारे ग्रहणाभाव इत्यत्राच्पदस्य प्रत्याहारमात्रोपलक्षणत्वमुपेत्य सामान्यतोऽनुमितिस्वीकारे "अइउण्"इत्यादिघटकणकारादौ "हलन्त्यम्" इत्येतत्प्रवृत्तये हल्प्रत्याहारजन्यबोधविषयत्वस्यैव सत्त्वेन व्यभिचारः । न च स्वघटितसमुदायावच्छिन्नबोध्यतानिरूपितबोधकतावत् प्रत्याहारजन्यबोधाविषयत्वाभावस्य साध्यत्वेन णकारादौ स्वघटितसमुदायनिष्ठघटकत्वसम्बन्धावच्छिन्नावच्छेदकताकबोध्यतानिरूपितबोधकतावद् अजादिप्रत्याहारजन्यबोधविषयत्वाभावस्य सत्त्वेन हल्प्रत्याहारजन्यबोधाविषयत्वे सत्यपि न व्यभिचार इति वाच्यम् । एवमपि लण्घटकणकारे स्वघटितहकारादिलान्तसमुदायावच्छिन्नबोध्यतानिरूपितबोधकतावद् हल्प्रत्याहारजन्यबोधविषयत्वसत्त्वेन व्यभिचारस्य दुर्वारत्वात् । स्वाघटितसमुदायावच्छिन्नबोधकप्रत्याहारजन्यबोधविषयत्वाभावस्य साध्यत्वे लणो णकारे हल्प्रत्याहारजन्यबोधविषयत्ववद् यण्प्रत्याहारजन्यबोधविषयत्वापत्तिः । अइउण्घटकणकारे पूर्ववद्व्यभिचारश्चेति चेत् ?

अत्र केचित्-स्वविशिष्टो यो वर्णः तद्घटितसमुदायावच्छिन्न-

बोधकप्रत्याहारजन्यबोधविषयत्वाभाव एव साध्यः । वैशिष्ट्यञ्च-स्वेतरत्व स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वोभयसम्बन्धेन। तथा च अइउण्घटकणकारे लण्घटकणकारे च निरुक्तोभयसम्बन्धेन स्वविशिष्टञमङणनम्घटकणकारघटितसमुदायावच्छिन्नबोधकहल्प्रत्याहारजन्यबोधविषयत्वेऽपि न व्यभिचारः । पूर्वणकारे पूर्वणकारनिष्पन्नाणप्रत्याहारजन्यबोधविषयत्वापत्तिवारणाय वैशिष्ट्य नियामकः प्रथमः सम्बन्धः। न चैवमपि इण्प्रत्याहारजन्यबोधविषयत्वं लणघटकणकारे दुर्वारमेव, इणप्रत्याहारस्य निरुक्तोभयसम्बन्धेन लणघटकणकारविशिष्टाइउणघटकणकारघटितसमुदायावच्छिन्नबोधकत्वादिति वाच्यम् ; स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मसमानाधिकरणानुबन्धत्वानाश्रयत्वस्य वैशिष्ट्यनियामकद्वितीयसम्बन्धतया विवक्षणेन "अइउण्"घटकणकारेऽनुबन्धत्वाश्रयत्वेन लणघटकणकारवैशिष्ट्याभावेन तद्घटितसमुदायावच्छिन्नबोधकत्वाप्रसङ्गात्। एवञ्च वैशिष्ट्यनियामकः प्रथमसम्बन्धोऽप्यनादेय एवेत्यपरमनुकूलम्। न चैवमपि लणो णकारे अश्-अम्-अल्-ययादिप्रत्याहारजन्यबोधविषयत्वापत्तिः, तेषां निरुक्तसम्बन्धेन हल्प्रत्याहारस्येवानुबन्धणकारविशिष्टञमङणनम्घटकणकारघटितसमुदायावच्छिन्नबोधकत्वादिति वाच्यम् ? णकारे तत्तत्प्रत्याहारप्रयुक्तकार्याणामिष्टत्वेन लक्ष्यदोषविरहात्। न चानुमित्याऽनुबन्धानां तत्तत्प्रत्याहारजन्यबोधविषयत्वाभावे साधितेऽपि लक्ष्यस्थणादीनां तत्तत्प्रत्याहारजन्यबोधविषयत्वापत्तिर्दुर्वारेति वाच्यम् ? प्रत्याहारे जातिपक्षस्यानुपदमेव वक्ष्यमाणत्वेनानुबन्धत्वसमानाधिकरणश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवतां सर्वेषामेव पक्षत्वात्, लोपशास्त्रीयोद्देश्यतावच्छेदकधर्मसमानाधिकरणश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वस्य हेतुत्वाञ्चेत्याहुः ।

अन्ये तु-प्रत्याहारजन्यबोधीयघटकत्वावच्छिन्नविषयत्वाभाव एव साध्यः। लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वमेव हेतुः । तथा च अइउणघटकणाद्यनुबन्धेषु प्रत्याहारजन्यबोधीयघटकत्वावच्छिन्नविषयत्वाभावे साधिते अकारादिचान्तसमुदायघटकबोध्यत्वादीनां लक्ष्यस्थणकारादावसत्त्वेन न ग्रहणापत्तिः, न वा अनुबन्धणकारादौ हल्प्रत्याहारबोध्यत्वेन व्यभिचारादिशङ्कापङ्कप्रक्षालनायासोऽपि, ञमङणनम्घटकणकारस्य हल्प्रत्याहारजन्यबोधीयहादिलान्तसमुदायघट-

कत्वावच्छिन्नविषयताश्रयत्वेन तद्बोध्यानां सर्वेषामनुबन्धानुबन्धसाधारणानां हल्प्रत्याहारजन्यबोधविषयत्वसिद्धिरित्याहुः ।

ननु लणघटकाकारस्यानुबन्धत्वेऽपि हल्प्रत्याहारसिद्ध्युत्तर"ऐऔच्"सूत्रघटकचकारधर्मिकहल्त्वज्ञानोत्तरकालिकेत्त्वज्ञानोत्तरकालिकाच्प्रत्याहारसिद्ध्युत्तरकाले लणघटकाकारस्येत्संज्ञकत्वेन "तस्य लोपः" इत्यस्य प्राप्त्या लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वेन कथं हेतोरव्यापकत्वमिति चेद्, न । शास्त्राणां प्रवृत्तौ निवृत्तौ वा वस्तुसत्ताया अनपेक्षणेन ज्ञानस्यापेक्षणेन च वस्तुतो लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वस्य हेतुत्वासम्भवेन लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वस्य हेतुत्वेन प्रत्याहारसिद्धेः प्राक् तादृशज्ञानाभावेनाकारे तद्विषयत्वाभावात् । न चाजादिप्रत्याहारसिद्ध्युत्तरकालिकं यल्लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकं ज्ञानं तद्विषयतायाः स्वरूपसम्बन्धविशेषात्मिकाया अकारे प्रत्याहारसिद्धिप्राक्कालेऽपि सत्त्वेन कथमव्यापकत्वं हेतोरिति वाच्यम् ? प्रत्यासत्त्या यदनुबन्धेषु यत्प्रत्याहारजन्यबोध्यत्वाभावादि विवक्षितं तत्प्रत्याहारसिद्धिसमानकालिकस्य लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानस्यैव हेतुतावच्छेदककुक्षौ प्रवेशेनादोषात् ।

नन्वेवमपि ईश्वरज्ञानस्य केवलान्वयित्वेन नित्यत्वेन च देवदत्तसमवेतहल्प्रत्याहारसिद्धिसमानकालिकस्य "लण्"सूत्रघटकाकारधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकस्यापि तस्य सत्त्वेन तद्विषयत्वेन न व्यापकत्वहानिः । न च स्वसमानकालिकत्व स्वसामानाधिकरण्योभयसम्बन्धेन तत्तत्प्रत्याहारज्ञानविशिष्टं यल्लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकं ज्ञानं तद्विषयत्वस्य हेतुत्वेनेश्वरज्ञाने देवदत्तसमवेतहल्प्रत्याहारविषयकज्ञानस्योभयसम्बन्धेन वैशिष्ट्याभावान्न व्यापकत्वमिति वाच्यम् ? ईश्वरे प्रत्याहारज्ञानस्यापि सत्त्वेन तद्वैशिष्ट्यमादाय व्यापकत्वोपपत्तेरिति चेद्, न । पाणिनेरस्मदाद्युद्देशेन प्रवृत्तेरीश्वरज्ञानमादाय व्यापकत्वोपपत्तेरकिञ्चित्करत्वात्; मीमांसकानुयायिनां शाब्दिकानां नये ईश्वरानभ्युपगमाच्च ।

अथ "लण्"सूत्राकारेऽनुनासिकत्वमस्वीकुर्वतामेषामपि नये तृतीयहेतोरव्यापकत्वं दुर्वारमेव । प्रथमेन "हलन्त्यम्" इति सूत्रेण लकारे इत्त्वज्ञानानन्तरहल्प्रत्याहारसिद्ध्युत्तरकालिकं यद् झभञादिघटकञकारादावित्त्वज्ञानं भावि तावत्पर्यन्तं झल्प्रत्याहारज्ञानाविलम्बे कारणाभावेन झभञादिघटकञकारादौ झल्प्रत्याहारज्ञानसमानकालिकलोपशा-

स्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वामकहेतोरभावादिति चेद्; मैवम् । यदनुबन्धाः यादृशप्रत्याहाराबोध्यत्वेन विवक्षितास्तादृशप्रत्याहारज्ञानविशिष्टलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वस्य हेतुत्वात् । ज्ञाने ज्ञानवैशिष्ट्यञ्च—स्वप्रयोजकज्ञान प्रयोज्यत्व; स्वप्रयोज्यज्ञानप्रयोज्यत्वाभाववत्त्वैतदुभयसम्बन्धेन । तथा च—झल्प्रत्याहारविषयकं यज्ज्ञानं तादृशज्ञानप्रयोजकं यल्लकारधर्मिकेत्वप्रकारकं ज्ञानम् "आदिरन्त्येन" इत्येतद्वाक्यार्थज्ञानञ्च तत्प्रयोज्यत्वस्य झलादिप्रत्याहारज्ञानप्रयोज्यलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानप्रयोज्यत्वाभाववत्त्वस्य च अकारधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञाने सत्त्वेन तद्विषयत्वहेतोः सत्त्वेन न तत्र व्यापकत्वहानिः । लण्घटकाकारधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञाने हल्प्रत्याहारज्ञानप्रयोजकलकारधर्मिकेत्वप्रकारकज्ञान प्रयोज्यत्वस्य परम्परया सत्त्वेऽपि हल्प्रत्याहारज्ञानप्रयोज्यं यच्चकारधर्मिकेत्वज्ञानद्वारकमच्प्रत्याहारज्ञानं तत्प्रयोज्यत्वस्यैव सत्त्वेनोभयसम्बन्धेन वैशिष्ट्याभावेनाव्यापकत्वकथनोपपत्तिश्च ।

केचित्तु-अव्यापकत्वापत्तिरित्यस्यानिष्टसाधकाव्यापकत्वापत्तिरित्यर्थः । एवञ्च निरुक्तरीत्या झल्प्रत्याहारज्ञानसमानकालिकझभञादिघटकअकारादिधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानाभावेन हेतोरव्यापकत्वेऽपि नानिष्टसाधनम् । न च अकारादौ झल्प्रत्याहारबोध्यत्वज्ञानेनानिष्टसाधकत्वमस्तीति वाच्यम् ? पूर्वं अकारादौ झल्प्रत्याहारबोध्यत्वज्ञानेऽपि हल्प्रत्याहारासिद्ध्युत्तरकालिकअकारादिधर्मिकहल्त्वप्रकारकज्ञानेन "हलन्त्यम्" इतीत्संज्ञया "तस्य लोपः" इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानेन तत्र भ्रमत्वबोधनेन अकारादौ झल्त्वव्यवहाराभावेनानिष्टसाधकत्वाभावात् । न चैवं रीत्या लण्घटकाकारेऽपि पूर्वं हेतोरसत्त्वेन हल्प्रत्याहारबोध्यत्वज्ञानेऽपि हल्प्रत्याहारासिद्ध्युत्तरचकारधर्मिकेत्वज्ञानोत्तराच्प्रत्याहारज्ञानोत्तरमकारधर्मिकेत्वज्ञानेन लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वज्ञानेन पूर्वज्ञाने भ्रमत्वबोधनेन कुतोऽनिष्टसाधकाव्यापकत्वापत्तिरिति वाच्यम् ? चकारधर्मिकहल्त्वज्ञानमुपजीव्य जायमानं चकारधर्मिकेत्वज्ञानमुपजीव्य जायमानेनाच्प्रत्याहारज्ञानेन जायमानाया इत्संज्ञाया हल्त्वविघातकलोपेऽनिमित्तत्वेन पश्चादपि लण्घटकाकारे लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वज्ञानाभावेन भूतपूर्वाकारधर्मिकहल्त्वज्ञाने भ्रमत्वापादकस्याभावेनानिष्टसाधकाव्यापकत्वापत्तेर्दुर्वारत्वात् । भ्रम-

हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्परत्यभावेन "उपदेशेऽजू" (पा० सू० १-३-२ ) इत्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्सञ्ज्ञालोपयोरभावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन हल्प्रत्याहारे लणित्यकारप्रवेशे 'मामाँस्त्रायस्व' इत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा, 'सोऽस्ति' इत्यादौ सुलोपा-

---

आदिघटकअकारादिधर्मिकझलादिप्रत्याहारबोध्यत्वज्ञाने तु पश्चाद्भ्रमत्वं भवत्येव । न हि झलादिप्रत्याहारोपजीव्यत्वमस्ति, येन झलादिप्रत्याहारमुपजीव्य जायमानहल्प्रत्याहारज्ञानप्रयोज्यअकारधर्मिकहल्त्वप्रकारकज्ञानेन जायमानाया इत्संज्ञाया लोपेऽनिमित्तत्वेन लोपशास्त्रीयोद्देश्यतावच्छेदकानाक्रान्तत्वं स्यादिति वदन्ति; तदसत् । चकारधर्मिकहल्त्वज्ञानमुपजीव्य जायमानाया इत्संज्ञाया उपजीव्यविरोधाद्धकारलोपेऽनिमित्तत्वेऽपि चकारधर्मिकहल्त्वज्ञानोत्तरेत्वज्ञानाधीनाच्प्रत्याहारज्ञानाधीना या अकारेत्संज्ञा तस्या अकारवृत्तिहल्त्वविघातकलोपेऽनिमित्तत्वे विरोधाभावात् । ईदृशविरोधमाश्रित्यैतद्ग्रन्थसौष्ठवेऽप्यनुपदवक्ष्यमाणस्याकारे हल्त्वापादकस्य ग्रन्थस्योपजीव्यविरोधेनासङ्गतेर्दुर्वारत्वाच्चेत्यलम् ।

नन्वस्तु रप्रत्याहारः, अस्तु च "लपरत्वं वक्ष्यामि" इति भाष्यप्रामाण्येनानुबन्धत्वसमानाधिकरणतद्व्यक्तित्वावच्छेदेन गुरुभूताऽप्यनुमितिः, दोषः क इत्यत आह—*प्रत्याहारेष्वित्यादि* । तव लोपस्येत्यादितृतीयान्तस्य हेतुग्रन्थस्य मध्यमणिन्यायेनेहापि सम्बन्धः । ननु हल्प्रत्याहारसिद्धेः प्राग् "उपदेशेऽज्"इत्यस्य वाक्यार्थबोधाभावेऽप्यण्प्रत्याहारकाले "लण्"इत्यकारस्येत्संज्ञालोपाभ्यामपहारसम्भवेनाक्षरसमाम्नायिकानामेव ग्राहकशास्त्रे ग्रहणेन सानुनासिकाकारस्यानण्त्वात्तेन दीर्घसानुनासिकग्रहणं न सम्भवति । किञ्च लण्घटकाकारस्य यथाकथञ्चिद्हल्त्वेऽपि लक्ष्यस्थाकारस्य ततो भिन्नत्वेन हल्त्वाभावाद्दोषोऽपि न सम्भवतीत्यत आह—*जातिग्रहणपक्षस्यैवेति* । अत एव अवात्तामित्यत्र "झलो झलि"इति सलोपः सिद्ध्यति । नन्वनुनासिकत्वसमानाधिकरणजातिनिर्देशः ह्रस्वत्वसमानाधिकरणजातिनिर्देशो वा तत्राह्य आह—*मामित्यादि* । अनितेः क्विपि "अनुनासिकस्य" इति दीर्घे सम्बुद्धौ आनितिरूपम् । *अनुस्वारापत्तिरिति* । "मोऽनुस्वारः" इत्यनेनेति भावः । अन्यत्र आह-*सोऽस्तीति* । *सुलोपेति* । हत्वस्या-

द्यापत्तिश्च । अत एव—

"प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।"

इत्यनेन प्रत्याहारे वर्णसमाम्नाये य एतेऽक्षु अज्बोधकसूत्रेषु प्रत्याहारार्था अनुबन्धाः क्रियन्ते तेषामज्ग्रहणेन ग्रहणं कस्मान्नेत्यर्थकेनाच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे । भाष्ये च "अइउण्" ( मा० सू० १ ) इत्यादिसूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शिता । तत्र प्राधान्यं प्रत्याहारेषु ग्रहणार्थत्वरूपं, हल्षु च तथोपदेशस्तेषाम्, अक्षु तु स्वराणामेव तथोपदेश इति प्राधा-

सिद्धत्वादित्यादिः । न च "पतत्तदोः" इतिसूत्रसामर्थ्यादकारस्य हल्त्वं नेति कल्प्यते । अन्यथा सर्वत्रान्तरङ्गत्वाद् हल्ङ्यादिलोपे तद्वैयर्थ्यादिति वाच्यम् ? तत्सामर्थ्येन लाघवात् "लण्"सूत्रस्थाकारस्यानुनासिकत्वाभावकल्पनाया एव युक्तत्वात् । अनुनासिकत्वसमानाधिकरणह्रस्वत्वजातितात्पर्येणाह-*आदीति* । तेन मामँस्त्रायस्वेत्यस्य सङ्ग्रहः । अन्ततः क्विपि सम्बुद्धौ संयोगान्तलोपे अनितेर्विचि सम्बुद्धौ वा अन्नितिरूपम् ।

वस्तुतस्तु गुणाभेदकत्वस्य व्यापकजातिनिर्देशस्य च भगवदभिमतत्वेन सर्वत्र दोष इति बहवः । अथ "प्रत्याहारेऽनुबन्धानाम्" इत्यत्र प्रत्याहारपदेनाच्प्रत्याहारस्यैव ग्रहणं; न तु प्रत्याहारसामान्यस्येति पक्षेऽपि स्वप्रत्याहारवादिमते भाष्यविरोधं मनासिकृत्य फलमुखेनाह—*अत एवेति* । "लण्"सूत्राकारस्याननुनासिकत्वादेवेत्यर्थः । प्रसङ्गाद्वितीयहेतुं विवृणोति-*तत्रेति* । हेतुकुक्षावित्यर्थः । *ग्रहणार्थत्वमिति* । बोध्यत्वप्रयोजनत्वरूपमित्यर्थः ।

वस्तुतस्तु प्राधान्यं श्रुतिघटकत्वमेव स्वमते वक्तुं युक्तम् । अनुबन्धानां महेश्वरकृतत्वस्य तदतिरिक्तानां श्रुतित्वस्य च प्राक् प्रतिपादितत्वेन श्रुत्यपेक्षया महेश्वरकृतेऽप्राधान्यस्य युक्तत्वात् । अत एव "हयवरट्" इत्यादौ टकारादेर्न प्राधान्यम् । अन्यथा हल्षु च तथोपदेशस्तेषामित्यादितष्टकारादेरपि प्राधान्यापत्तौ द्वितीयहेतोरव्यापकत्वापत्तेः । न चैवमस्य हेतोः "स्वौजस्" इत्यत्रास्त्वात्तेनानुबन्धानामपि सुबादिबोध्यत्वं स्यादिति वाच्यम् ? अनुबन्धघटिते तस्येष्टत्वात् । ननु भवन्मतेऽच्प्रत्याहारेऽनुबन्धग्रहणापत्तिपरभाष्यवार्तिकविरोधो दुर्वारः; इग्यादिषु टकारादिग्रहणानापाद-

न्यात्तेषामेव सञ्ज्ञित्वमिति भाष्ये स्पष्टम् । न च हशादिप्रत्याहारे टग्रहणस्यापत्तिरिति वाच्यम् । हकारादिषु पुनःपुनरकारोच्चारणेन उच्चारणार्थवर्णरहितहलां तद्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् तद्विषयप्रयोगाणामनभिधानाच्च । तस्मादस्यानुनासिकत्वमप्रामाणिकम् । "उरण् रपरः" (पा० सू० १-१-५१) इत्यत्र लग्रहणं कर्तव्यमेव । ऋलृवर्णयोः सावर्ण्यवदित्याहुः ।

ननु "हय" ( मा०सू० ५ ) इत्यादावकारोच्चारणेन तस्य

---

नादित्याशङ्क्य निराकुरुते-*न चत्यादिना*। *पुनःपुनरिति* । न च "नाचं विना" इत्यादिवक्ष्यमाणभाष्यरीत्याऽकारोच्चारणस्य सार्थक्येन कथं ज्ञापकतेति वाच्यम्? व्यञ्जनद्वयमध्य एकैकाकारोच्चारणेनापि तद्भाष्यसंरक्षणात्प्रतिव्यञ्जनमकारोच्चारणरूपयत्नाधिक्यस्य तदर्थत्वात् । *शक्यत्वादिति* । प्रत्येकमकारोच्चारणेनोच्चारणार्थवर्णराहित्यमेवाप्राधान्यं हल्षु ज्ञाप्यते इति भावः ।

आचारिणस्तु-हशप्रत्याहारे तु न टकारग्रहणं "यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति" इति भाष्यस्य अन्तःस्थानामन्तःस्थासु पञ्चमानां पञ्चमेषु चतुर्थानाञ्चतुर्थेषु तृतीयानां तृतीयेषु द्वितीयानां द्वितीयेषु प्रथमानां प्रथमेषूष्मणामूष्मसूपदेशस्य ग्रहणार्थत्वम्; नेतरेषामितरेष्वित्यर्थत्वात् "अचोऽक्षु, हलो हल्षु" इति भाष्यस्योपलक्षणत्वान्न दोष इत्याहुः ।

अन्ये तु-हशादौ श्रुतिघटकत्वरूपधर्मेण प्रत्याहारादिहकारादिसजातीयानामेव ग्रहणेन न टकारग्रहणमिति वदन्ति । *तद्विषयप्रयोगाणामिति* । हशादिप्रत्याहारे टकारग्रहणेन हशनिमित्तककार्यघटितरामो टीकत इत्यादीनामित्यर्थः । एतेन तद्विषयेत्यादेर्हशत्वावच्छिन्नोद्देश्यताश्रयटकारघटितानामित्यर्थं मनसि निधाय इदञ्चिन्त्यम्, 'कोयष्टिकष्टीकते' इतिमालतीमाधवोक्तमहाकविप्रयोगदर्शनादिति वदन्तावुदयङ्कराचारिणौ समाहितौ । प्राचीनमतं निराकृत्य स्वमतमुपसंहरति-*तस्मादित्यादिना* । *आहुरिति* ।

केचित्तु-रप्रत्याहारकरणमेव सम्यक्, "उरण् रपरः" इति सूत्रे लकाराकरणजलाघवात् । अत एव भाष्यकृता "लपरत्वं वक्ष्यामि" इत्युक्त्वाऽपि पुनर्नोक्तम् । तृतीयहेतोरव्यापकत्वापत्तिस्तु नास्त्येव इत्संज्ञावत्त्वस्यैवानुबन्धत्वेन हल्प्रत्याहारासिद्धेः प्राग् लणोऽकारे तदभावे

हल्त्वप्रसङ्गोऽत आह-हकारादिष्विति । "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इति "उच्चैरुदात्तः" ( पा०सू० १-२-२९ ) इतिसूत्रस्थभाष्याद् "एषा ह्याचार्यस्य शैली लक्ष्यते,

पक्षतावच्छेदकानाक्रान्तत्वात् । किञ्च उच्चारणार्थानामपि स्वनये इत्संज्ञालोपाभ्यामेवापहारस्य "दिव औत्" सूत्रे वक्ष्यमाणत्वेन "हयवर" इत्यादिघटकसकलोच्चारणार्थकाकारेषु हल्प्रत्याहारासिद्धेः प्राग् लोपशास्त्रीयेत्यादिनिरुक्तहेतोरभावेनाव्यापकत्वापत्तिः । हल्पदेनाकारग्रहणे मामांस्त्रायस्वेतिदोषापत्तिश्चैतन्मतेऽपि दुर्वारेति द्वयोर्द्वयोर्व्यं अनयोर्मध्य एकैकाकारोच्चारणे कर्त्तव्ये प्रतिव्यञ्जनमकारोच्चारणसामर्थ्यात्तुल्यजातीयानित्यादिभाष्याच्च प्रत्याहाराणामाद्यशब्दसजातीयमध्यपातिबोध्यबोधकत्वं स्वीकार्यम् । साजात्यञ्च-बोधकत्वप्रकारकाचार्यतात्पर्यविषयत्वेनैव । अत एव सुबादिपदैर्ध्यामेकदेशादेः हलादिपदैर्मध्यपातिवर्णसङ्घातस्य चाग्रहणं सिद्धम् । अच्त्वहल्त्वादिना तु न साजात्यं सुबादावसम्भवात् । अलादिभिर्हकारादेरग्रहणप्रसङ्गाच्च । एवञ्च "हयवरट्" इत्यादिघटकाकारेष्विव लण्घटकाकारेऽपि बोधकत्वेनाचार्यतात्पर्यविषयत्वाभावेनैव मामांस्त्रायस्वेत्यादौ दोषवारणमुभयमतेऽपि तुल्यमेव । इत्संज्ञायोग्यत्वात्मकानुबन्धत्वाभ्युपगमात्तृतीयहेतोरव्यापकत्वापत्तिसहनं परमेतन्मते विपरीतमतिरिच्यते ।

यत्तु श्रीधरेण-उच्चारणार्थानामित्संज्ञालोपाभ्यामपहारो विधेयविषय एवेति न हकारोत्तराकारादिष्वव्यापकत्वापत्तिरित्याशयकमुक्तम्; तद् हइत्यादीनामपि साधुत्वविधायकत्वस्योक्तत्वेनैव पराकरणीयम् । किञ्च 'मामांस्त्रायस्व' इत्याद्यापत्तिप्रतिपादनमयुक्तमेव, "हलन्त्यम्" इत्यत्र हलपदेन सानुनासिकाकारस्य ग्रहणसम्भवेऽपि "मोऽनुस्वारः" इत्यादौ न तस्य ग्रहणम् । ततः पूर्वमुपदेशेऽजित्यस्य वाक्यार्थधीसम्भवेनेत्संज्ञालोपाभ्यां तदग्रहणबोधनात् । "नाज्झलावणुदित्" इत्यनयोः सूत्रयोरजण्पदाभ्यामाक्षरसमाम्नायिकानामेव ग्रहणेऽप्यन्यत्र दीर्घादीनामपि ग्रहणवत् । एवमच्प्रत्याहारमात्रविषयकशङ्कासमाधानपरभाष्यविरोधोऽप्युपलक्षणतया व्याख्याय निरोद्धव्यः; उक्तरीत्या नव्यैरपि तस्यावश्यशरणीकरणीयत्वादित्याहुः ।

ननु हकारादिष्वकारोच्चारणस्य किं प्रयोजनमत आह—*न पुनरिति* । नन्वेवमप्युच्चारणार्थं कृतस्याप्यकारस्य मध्यगत्वेन हल्संज्ञाकुतो नेत्यत आह-*एषा हीति* । ननु तुल्यजातीयत्वं केन धर्मेण

यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति, अचोऽक्षु, हलो हल्षु" इति प्रत्याहारेऽनुबन्धानामित्यत्र भाष्याच्चेति भावः ।

स्यादेतत् । "न विभक्तौ" ( पा०सू० १-३-४ ) इत्यादेः सार्थक्याय "हलन्त्यम्" ( पा०सू०१-३-३ ) इत्यस्योपदेशेऽन्त्यं हल् इदित्यर्थस्यावश्यकत्वेन "हलन्त्यम्" ( पा०सू०१-३-३ ) "आदिरन्त्येन" ( पा०सू० १-१-७१ ) इत्यनयोः परस्परापेक्षत्वेनान्योन्याश्रयाल्लकारे इत्सञ्ज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं पाणिनेरयुक्तम् । न च "हयवर" ( मा०सू० ५ ) इत्यादेरावृत्त्या "शषसर्" ( मा०सू० १३ ) इत्यन्तं समुदायमुद्दिश्य "हल्"

विवक्षितम् ? अच्त्वहल्त्वान्यतरेणेति तु न युक्तम् । साजात्ये निश्चिते सति ते संज्ञे तयोश्च ज्ञातयोः साजात्यनिश्चय इत्यन्योन्याश्रयापत्तेरिति चेत् ? शृणु । औकारावृत्त्यच्त्वाव्याप्यधर्मानवच्छिन्नत्वेनाचि साजात्यम् । अच्त्वाव्याप्येणत्वादिमादायासम्भववारणायौकारावृत्तीति तद्वृत्त्यक्त्वादिमादायासम्भववारणायाच्त्वाव्याप्येति । हकारावृत्तिहल्त्वाव्याप्यधर्मानवच्छिन्नत्वेन हलि तत् तदव्याप्याट्त्वादिमादाय तदवृत्तियण्त्वादिमादाय वाऽसम्भववारणायोभयम् । अथवा स्वरत्वेनाचि; व्यञ्जनत्वेन हलि, साजात्यम् । तयोर्लोके प्रसिद्धत्वेन हल्संज्ञाग्रहात्प्रागपि सुग्रहत्वादिति बोध्यम् ।

अथ हल्सूत्रान्त्यमिदित्यर्थे नान्योन्याश्रयशङ्केत्याक्षिपन्तं प्रत्याह—*न विभक्ताविस्यादेरिति* । *परस्परापेक्षत्वेनेति* । परस्परत्वञ्च—सम्बन्धविशिष्टसम्बन्धसम्बन्धित्वमिति तुल्यास्यसूत्रे वक्ष्यते । प्रकृते च स्ववाक्यार्थाधीनकिञ्चित्पदशक्तिग्रहप्रयोज्यवाक्यार्थधीप्रयोजकत्वमेव सूत्रयोः सम्बन्धः । *अन्योन्याश्रयादिति* । स्वज्ञप्त्यधीनज्ञप्तिकत्वमन्योन्याश्रयत्वम् । "हलन्त्यम्"इत्येतद्वाक्यार्थबोधप्रयोज्येत्पदार्थज्ञप्त्यधीनज्ञप्तिकत्वं हल्पदार्थस्य हल्पदार्थज्ञप्त्यधीनज्ञप्तिकत्वमित्पदार्थस्येति बोध्यम् । *आवृत्त्येति* । हालित्यनेनोद्देश्यविधेयभावेन हल्संज्ञाविधानार्थमेकम् "आदिरन्त्येन" इत्यनेनैकवाक्यतया यरादिप्रत्याहारार्थमपरमिति भावः । न च "हयवर" इत्यादिनवसूत्रीमावर्त्य तत्समुदायघटकानां हल्संज्ञायामपि आवर्त्तमानहल्सूत्रघटकलकारस्य तदभावादित्त्वानापत्तौ वलादिप्रत्याहारानुपपत्तिरिति वाच्यम् ? लणो

(पा०सू० १.४) इत्यनेन हल्सञ्ज्ञाऽपि विधेयेति वाच्यम् । दशसूत्र्याऽऽवृत्तौ गौरवात् ।

ननु "उपदेशे इदन्त्यम्, अच्, अनुनासिकः" इति सूत्रत्रयमस्तु, अजित्यनन्त्यार्थम्, तृतीयेऽजित्यनुवृत्तिसामर्थ्यादचेदिद्भवति तर्ह्यनुनासिक एवेति नियमाश्रयणाद्रुप्रभृतौ न दोषः, योगविभागसामर्थ्याच्चानन्तरस्येति न्यायं बाधित्वा व्यवाहितस्यापि तेन नियमः, "मिदचोन्त्यात्" ( पा० सू० १-१-४७ ) इति ज्ञापकाच्च न विपरीतनियमः, एवञ्च हल्ग्रहणमपि व्यर्थमन्योन्याश्रयश्च न । न च पाणिनिसूत्रभेदे पारायणादावदृष्टहानिः । तथा च तत्र तत्र भाष्यम्-"अपाणिनीयन्तु भवति"-इति वाच्यम् । कल्प्यमानन्यासस्य लघुत्वेऽस्यादोषत्वात् । "सूत्रभेदं तमुपाचरन्ति यत्र तदेवाऽन्यत् सूत्रं क्रियते भूयो वा, यदि तदेवोपसंहृत्य क्रियते नासौ

---

लकारस्य तत्समुदायघटकत्वेन तज्जात्याश्रयसकललकाराणां हल्पदबोध्यत्वसम्भवात् ।

वस्तुतस्तु 'न चेत्यादिरूढौ तु न मानम्' इत्यन्तग्रन्थस्यात्र लेखोऽनुचितः। गौरवस्य सापेक्षत्वेन लघुभूतोपायान्तरस्याधुनाऽदर्शितत्वेन तत्समाधानस्यासङ्गतेः । तस्मात् पाणिनेरयुक्तमित्यस्यानन्तरमतः सूत्रावृत्त्या तं परिहरति-हलन्त्यमितीति लिखित्वाऽसौ लेख्य इति बोध्यम् । *अजित्यनुवृत्तिसामर्थ्यादिति* । तदननुवृत्तौ तु मिनादौ मकारादेरित्वार्थं विधिरेव स्यादिति भावः । *अच्चेदिद् भवतीति* । अयं विधिमुखप्रवृत्तिसम्पादकनियमोऽयुक्तः। तथा सति अजितियोगस्य वैयर्थ्यापत्तेः । किन्तु गुरुभूताऽपि अनुनासिकेतरोऽजिन्न भवतीति निषेधमुखेनैव नियमप्रवृत्तिर्वक्तव्येति बोध्यम् । *रुप्रभृताविति* । 'रु शब्दे' इतिनिर्दिष्टधातुष्वित्यर्थः । अशोकवनिकान्यायेनैतदुक्तिः । ननु रुप्रभृतावाजातियोगप्राप्तत्संज्ञाया नियमेन वारणेऽपि पूर्वयोगेन तदापात्तर्दुर्वारेत्यत आह-*योगविभागेति* । *विपरीतनियम इति* । अनुनासिकश्चेदिद्भवति, तर्ह्यजेवेत्याकारक इति भाव । *अदोषत्वादिति* । अपाणिनीयत्वस्यादोषत्वादित्यर्थः । अत्रैव भाष्यसम्मतिमाह-*सूत्रभेदमिति*।*उपाचरन्ति*-वर्णयन्ति।*तदेव*-तत्फलकमेव।*भूयः*-तदपेक्षयाऽधिकम्।*उपसंहृत्य*-संक्षिप्य, लघुं स्वीकृ-

सूत्रभेदः" इति "अच उपसर्गात्तः" ( पा० सू० ७-४-४७ ) इति सूत्रभाष्यात् । नासौ सूत्रभेद इत्यस्य दोषाय इति शेषः । सति सम्भवे दृष्टद्वारैवाज्ञानामदृष्टार्थत्वमिति तदाशयः । अत एव तत्र तत्र ज्ञापकपरसकलभाष्योच्छेदो नेति चेत् । न, योगविभाग-नियमज्ञापकाश्रयणेऽतिगौरवात् । न हि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्त्तव्यं, न तु ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञाऽस्ति । न च सह आसमन्तादू एति गच्छतीति सहेता मध्यमो वर्ण इत्यर्थ इति, अतो नान्योन्याश्रय इति वाच्यम् । अन्योन्याश्रयतत्परिहारादीन् वदता भाष्यकारेण "कटी" ( भ्वा० धा० ३२१ ) "वी" ( भ्वा० धा० ११२२ ) इत्यत्र प्रश्लिष्टाद् "ईङ् गतौ" ( दि० धा० ११२८ ) इत्यतश्च सह-आङ्-पूर्वात्तृजभावबोधनात् । किञ्च योगमर्यादया तत उक्तार्थालाभः । आसमन्तादित्यस्यानन्वितार्थत्वं व्यर्थत्वञ्च । रूढौ तु न

---

स्येति यावत् । ननु साक्षाद्दृष्टस्य सूत्रभेदस्य कथम्भवदुक्तिमात्रेणापह्नव इत्यत आह—*दोषायेति* । तथा च सूत्रभेदो दोषाय न भवतीत्यर्थः । *तदाशय इति* । लाघवादेवमेव न्यासः पाणिनिना कुतो न कृत इति पूर्वपक्ष्याशय इत्यर्थः । एतेन 'सामर्थ्ययोगान्न हि' इत्यादिभाष्यात्पूर्वं केषाञ्चिच्छुद्धादृष्टार्थत्वं प्रतिपादितम् । अत्र तु सूत्रभेदमित्यादिभाष्याद् दृष्टद्वारैवादृष्टार्थत्वं प्रतिपाद्यत इति परस्परं विरुद्धमित्यपास्तम् । "नासौ सूत्रभेद"इतिभाष्यस्य दृष्टप्रयोजनकोऽसौ न भवति, केवलादृष्टप्रयोजनकः सूत्रभेदो भवत्येवेति श्रीधरोक्तव्याख्यानरीत्या विरोधलेशाभावाच्च । *इणगताविर्त्यतश्चेति* । अयमपपाठः । आ एतेति स्थितावेत्येधतीतिवृद्ध्यापत्तेः । "संज्ञापूर्वको विधिरनित्यः" इति तु अगतिकगतिभूतं स्वमते प्रत्याख्यातञ्च । धातूपसर्गयोः कार्यस्यान्तरङ्गत्वात्तृचः प्राग् "आद्गुणः"इत्यपि न, वृद्धेरनवकाशत्वापत्तेः । 'पूर्वं धातुः साधनेन युज्यते' इत्यस्य सिद्धान्तितत्वाच्च । *व्यर्थत्वञ्चेति* । यत्तु येन अमङ्णोतिणकारादिभिरणादिप्रत्याहारापात्तिर्बोध्ये त्याचारिणः । तन्न, व्याख्यानतो निर्णयसम्भवात् । तदाश्रयणे गौरवन्तु सर्वेषाङ्कुले पतितमेवेति न तद्दोषायालम् ।

मानमतः सूत्रावृत्त्या तं परिहरति-हलन्त्यमिति ।

भाष्येऽप्यन्योन्याश्रयमाशङ्क्य "हलन्त्यमित्सञ्ज्ञं भवति लकारश्चेद्भवतीति वक्तव्यम्" इत्युक्त्वा "एकशेषनिर्देशाद्वा सिद्धम्-हल् च हल् च हल्, हलन्त्यमित्" इत्युक्तम् । तस्यायं भावः—कृतैकशेषेण हल्पदेन सम्बन्धसामान्यषष्ठ्या समासोऽन्त्यशब्दस्य द्वन्द्वान्ते श्रूयमाणस्येवोभयत्रान्वयः । एवञ्च हल्सूत्रान्त्यं हल्रूपान्त्यं चेति बोधः । अन्त्ये "राहोः शिरः" इतिवत् षष्ठीति । अत्रोच्चारयितुरेकशेषनिर्देशो बोद्धुस्त्वावृत्त्या बोधः । हसमीपो लकार इद् हल्रूपान्त्यश्चेति कैयटोक्तव्याख्यायां तु हल् इत्सञ्ज्ञं भवति हलन्त्यश्चेदिति वदेदित्यूह्यम् ।

नन्वेवमपि "न विभक्तौ" ( पा० सू० १-३-४ ) इति विभक्तिपदबोध्यसुप्तिङ्बोधो "हलन्त्यम्" ( पा० सू० १-३-३ ) इति वाक्यार्थबोधोत्तरं, तद्बोधश्चापवादवाक्यार्थबोधोत्तरमित्य-

---

परे तु-"तस्यादित"इतिसूत्रे ह्रस्वग्रहणवदितेत्यस्यातन्त्रत्वमस्तु, इति नान्योन्याश्रयशङ्कासमाधानादिक्लेशलेशोऽपीति वदन्ति । *सूत्रावृत्त्या तं परिहरतीति*। अत्र हल्पदमावर्त्यैकत्र हस्य लिति विग्रहेण हसमीपो लकार इदिति उपदेशेऽन्त्यं हलिदिति च वाक्यार्थद्वयमिति कैयटमतम् । सामीप्यन्न षष्ठ्यर्थः सम्भवतीति सम्पूर्णसूत्रावृत्तिरेवेति दीक्षितमतम् । सम्पूर्णसूत्रावृत्तौ गौरवात्कैयटोक्ते भाष्याक्षराननुगुण्याच्च स्वाभिप्रेतं भाष्योक्तिलब्धं परिहारमाह—*भाष्येऽपीत्यादिना* । *सम्बन्धसामान्येति* । अवयवावयविभावस्यैकत्वेऽप्येकत्र तस्य मुख्यत्वमपरत्र तस्यारोपितत्वमित्येतावता भेदमाश्रित्यैवमुक्तमिति बोध्यम् । *हल्सूत्रान्त्यमिति* । द्वन्द्वान्ते श्रूयमाणवदेकशेषान्ते श्रूयमाणस्यापि साहित्यानुरोधेन प्रत्येकमन्वयादिति भावः । कैयटोक्तं खण्डयितुमाह—*हसमीप इत्यादि* । *हलित्संज्ञमिति* । हकारसमीपो लकार इत्संज्ञ इत्यर्थः । *हलन्त्यश्चेति* । हल्रूपान्त्यश्चेत्यर्थः । *वदेदिति*। भाष्यकार इति शेषः ।

परे तु—एतदसद् एकहल्पदार्थस्यान्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेऽपि द्वितीयहल्पदार्थस्याधुना निष्प्रत्ययभाव-

न्योन्याश्रयस्तदवस्थ एवेति चेत् । न, अपवादवाक्यार्थबोधात्पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावात् । न ह्य-

---

नान्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतयोर्युगपदसम्भवेन साहित्याभावेनैकशेषानुपपत्तेः । न चैकत्र हलपदार्थे प्रकारतामाश्रित्य बोधे जाते पश्चादपरहलपदार्थे ज्ञाते द्वितीयो बोध इति वाच्यम् ? वाक्यार्थबोधद्वयस्यान्त्यपदावृत्तिमन्तरेणासम्भवेन प्राचीनमतादवैलक्षण्यापत्तेः । ग्रामकूपो गङ्गातीरमित्यादौ सामीप्यार्थप्रतीतेरानुभविकत्वेन कैयटोक्तपरिरक्षणपरमुदयङ्करोक्तमपि न युक्तम् । एकस्य हलपदार्थस्यान्त्यपदार्थेऽनन्वयेन साहित्यराहित्येनैकशेषानुपपत्तेर्दुर्वारत्वाद् भाष्यप्रामाण्यात्सौत्रत्वाद्वाऽसाहित्येऽप्येकशेषकल्पनापेक्षया तु सूत्रावृत्तिरेव युक्तेति वदन्ति ।

*उत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावादिति* । अथानेकस्थले शाब्दबोधधर्मिकाप्रामाण्यज्ञानस्य निषेधापवादशास्त्राभ्यां बोधनवत्प्रकृतेऽप्यव्यवहितोत्तरसूत्रे निषेधार्थकनकारश्रवणेनानन्तरस्यैव निषेध्यत्वेनानुसन्धानान्निरुक्तशाब्दबोधधर्मिकप्रामाण्यसंशयः स्यादिति चेत् । का क्षतिः, न हि नैयायिकवत्संशयात्मकं शाब्दबोधं तिरस्कुर्वन्ति शाब्दिका अपीति, ज्ञानसंशये विषयसंशयेऽपि संशयात्मकशक्तिग्रहेणैव "आदिरन्त्येन" इत्यादिसूत्रस्थेत्पदेन पादीनामुपस्थितौ सुबादिप्रत्याहारसिद्धौ विभक्तिज्ञाने "न विभक्तौ" इत्येतद्बोधानन्तरं तवर्गसकारमकारत्वावच्छेदेनेत्पदवत्त्वप्रकारकज्ञानस्याप्रामाण्यबोधनेन तदितरहल्त्वावच्छेदेन प्रामाण्यनिश्चयेऽपि दोषविरहादिति बोध्यम् । *न ह्यभावज्ञाने प्रतियोगिज्ञानस्यैवेति* । नन्विदमनुपपन्नम् ; अभावश्चतुर्विध इत्यादिज्ञाने प्रतियोगिज्ञानस्यानपेक्षणात् । न च प्रतियोगिविशेषिताभावज्ञाने प्रतियोगिज्ञानमपेक्ष्यते इति तात्पर्यमिति वाच्यम् ? विशिष्टबुद्धिमात्रे विशेषणज्ञानस्यापेक्षानियमेन विशिष्योपादानस्यानुपयोगादिति चेद् , न । नञ्पदवाच्यतावच्छेदकं यत्किञ्चिदन्वयितावच्छेदकं विलक्षणं रूपन्तेन रूपेणाभावज्ञानम्प्रति प्रतियोगिज्ञानस्य नियमेनापेक्षेति तात्पर्यात् । अत एव न भवतीत्युक्ते किमितिप्रतियोगिजिज्ञासा नियमेनोत्पद्यते ।

केचित्तु-अभावज्ञाने प्रतियोगिज्ञानस्य कारणता यथा नियमेन न कस्यापि सम्मता, तथा प्रतियोगिज्ञानेऽभावज्ञानस्य कारणताऽपि न

भावज्ञाने प्रतियोगिज्ञानस्येव प्रतियोगिज्ञानेऽभावज्ञानस्य कारणता कस्यापि सम्मता। प्रतियोगिज्ञानं विना निषेधवाक्यार्थासम्भवाच्च।

"पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः" इत्यस्य स्वयं भावः—लक्षणैकचक्षुष्कस्य उद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्स-

---

कस्यापि सम्मतेति व्यतिरेकिदृष्टान्तदार्ष्टान्तिकतया व्याचख्युः; तदसत्। प्रतियोगिज्ञानं विनेत्यनुपदवक्ष्यमाणग्रन्थस्यासङ्गत्यापत्तेः। प्रत्युत निषेध्यशास्त्रजवाक्यार्थबोधं विना निषेधशास्त्रजबोध एव न सम्भवतीत्याह—*प्रतियोगिज्ञानं विनेति*। *निषेधवाक्यार्थासम्भवाच्चेति*। सङ्केतसम्बन्धेनेत्पदस्याप्रसिद्धप्रतियोगिकाभावज्ञानस्यास्वीकारादिति भावः। न च "हलन्त्यम्" इत्येतद्वाक्यार्थबोधाभावेऽपि "उपदेशेऽच्" इत्येतद्वाक्यार्थबोधमात्रेणानुनासिकाकारादौ प्रसिद्धस्य सङ्केतसम्बन्धेनेत्पदस्याभावबोधनमेवास्त्विति वाच्यम्? "हलन्त्य"सूत्रवाक्यार्थबोधात्प्रागच्प्रत्याहारज्ञानाभावेन "उपदेशेऽच्" इत्यस्यापि बोधासम्भवात्। न च "न विभक्तौ" इत्यत्रेत्पदस्यानुवृत्त्या श्रवणेन्द्रियेणैव प्रतियोगिज्ञानस्य जायमानत्वे घटकतासम्बन्धेन प्रसिद्धत्वेन च वाक्यार्थबोधः सुलभ इति वाच्यम्? यत्सम्बन्धेन यदभावः प्रत्यायस्तेन सम्बन्धेन तस्य प्रसिद्धत्वापेक्षणात्। अथ नैयायिकनयेऽप्रसिद्धप्रतियोगिकाभावास्वीकारेऽपि शाब्दिकनये तत्स्वीकारादेतदुक्तमयुक्तमिति चेद्? न। प्रतियोगिज्ञानं विना निषेधस्य निषेधशास्त्रजबोधस्य योऽर्थः फलं तदसम्भवादित्यर्थेन निषेधशास्त्रीयवाक्यार्थधर्मिकसाफल्यज्ञाने निषेध्यशास्त्रजवाक्यार्थबोधस्य कारणतायां तात्पर्यात्। न हि निषेध्यशास्त्रीयवाक्यार्थबोधं विना निषेधशास्त्रीयवाक्यार्थधर्मिकसाफल्यज्ञानम्भवितुमर्हतीति दिक्।

नन्वेवमपवादबोधात्पूर्वमुत्सर्गवाक्यस्य लक्ष्यसंस्कारकत्वोपपत्तावुदासीनविषय इवापवादविषयेऽपि प्रवृत्त्यापत्तौ पश्चात् "स्थानेऽन्तरतम"सूत्रभाष्योक्त'भुक्तवन्तम्' इति न्यायबोधितापवादशास्त्रवैयर्थ्यापत्तिमूलकेन प्रातिपदिकार्थसूत्रपठितेन 'पूर्वं ह्यपवादा' इतिन्यायेनोत्सर्गवाक्यार्थबोधात्पूर्वमपवादवाक्यार्थबोधस्यावश्यकत्वसूचनेन प्रागुक्तरीत्या सुप्तिङ्निष्पत्त्यभावेनान्योन्याश्रयस्तदवस्थ एवेत्यत आह—*पूर्वं ह्यपवादेत्यादि*। *लक्षणैकचक्षुष्कस्येति*। लक्षणमेवैकं चक्षुर्यस्य तस्येत्यर्थः। ऋषयो लक्ष्यैकचक्षुष्काः, वयन्तु लक्षणैकचक्षुष्का इति वृद्धाः।

र्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्विषयव्यवस्थानापत्त्या भुक्तवन्तं प्रति 'मा भुक्था' इति वाक्यस्येवापवादशास्त्रवैयर्थ्यापत्त्या चापवादशास्त्रपर्यालोचनेन तद्विषयलक्ष्यसंस्कारं निर्णीय तदविषयं

---

केचित्तु-अयं प्रयोगः साधुः उत अन्धपरम्परयैव प्रयुक्त इति संशये सूत्रेणैव यैर्निर्णीयते ते लक्षणैकचक्षुष्काः। यत्र च तैरेव सूत्रजबोधधर्मिकतात्पर्यसंशये लक्ष्याणि निरीक्ष्य तात्पर्यं निर्णीयते तत्र त एव लक्ष्यैकचक्षुष्का इति वदन्ति ।

ननु लक्षणैकचक्षुष्काणां मते राम ङे इत्यस्य प्रसङ्गे "ङेर्यः" इत्यनेन रामाय इत्यस्य "सुपि च" इत्यनेन रामायेत्यस्य च साधुत्वबोधनेन परस्परविरोधादप्रामाण्यापत्तिरिति चेद्, न। 'उपायाः शिक्षमाणानाम्' इति न्यायेन पञ्चकोशवत्परशास्त्रैः पूर्वपूर्वशास्त्रबोधितसाधुत्वेऽप्रामाण्यस्य पूर्वपूर्वशास्त्रेण मत्प्रवृत्त्युत्तरं प्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोधिष्यते तदेव साधु इत्यभ्यनुज्ञाया वा कल्पनेनाविरोधात् । *उद्देश्यतावच्छेदकावच्छिन्न इति* । असति बाधक उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसम्बन्धे वा भासत इति सिद्धान्तादिति भावः । उद्देश्यतावच्छेदकावच्छिन्न इत्यादिबुद्धावित्यन्तं वैयर्थ्यापत्त्येत्यत्रान्वयि । उत्सर्गापवादयोर्विषयव्यवस्थानापत्त्येति पृथक्कोटिः ।

तस्या अयं भावः-यदि उत्सर्गशास्त्रं सात्त्विकभावमाश्रित्यापवादशास्त्रसम्भावनया उद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयं स्वीकृत्य केषुचित्स्वसंस्कार्येषु केषुचिदपवादसंस्कार्येषु च लक्ष्येषु प्रवर्त्तेत; पश्चादपवादशास्त्रमपि स्ववाक्यार्थबोधोत्तरमवशिष्टेषु स्वसंस्कार्येषु लक्ष्येषु प्रवर्तेत; तदा कानिचिदसंस्कृतानि कानिचिदपवादसंस्कार्याण्यप्युत्सर्गसंस्कृतानि चापद्येरन्निति विषयव्यवस्थानापत्तिरिति । *वैयर्थ्यापत्त्येति* । लिङादिघटितवाक्यानां प्रवृत्तिनिवृत्त्यन्तरोपधायकत्वनियमेन पूर्वमुत्सर्गप्रवृत्तावपवादस्य तदभावेन वैयर्थ्यापत्तिरिति भावः । उक्तापत्तिद्वयपरिहाराय 'पूर्वं ह्यपवादा' इत्यस्य कर्त्तव्यमाह—*तत्पूर्वमित्यादिना* । *तत्पूर्वम्*—उत्सर्गशास्त्रप्रवृत्तेः पूर्वम् । *तदविषयम्*-अपवादशास्त्राविषयम् । उत्सर्गशास्त्रबोधे पूर्वं जातेऽपि अपवादशास्त्रबोधोत्तरमपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेनोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नं सङ्को-

तत्तल्लक्ष्यं तत्तद्विषयवाक्योपप्लवद्वारोत्सर्गेण संस्करोति, अन्यथा विकल्पापत्तिरिति । यद्यपि "भुक्तवन्तं प्रति" इति न्यायो लुगादिना जातनिवृत्तेर्व्यभिचरितस्तथाऽपि तत्राप्यनुत्पत्तिरेवेति न

---

क्योत्सर्गशास्त्रं प्रवर्त्तनीयमिति यावत् । *तत्तद्विषयवाक्योपप्लवेति* । उपप्लवश्चैतन्मते व्यक्तिपक्षमात्रे । परेषां मते तु जातिपक्षेऽपीति वक्ष्यते । *अन्यथा*-भुक्तवन्तमित्यस्यानङ्गीकारे । *विकल्पापत्तिरिति* । उद्देश्यतावच्छेदकावच्छेदेनोत्सर्गप्रवृत्तावपवादशास्त्रवैयर्थ्यापत्त्या उत्सर्गप्रवृत्तावप्रामाण्यबोधनपूर्वकमपवादशास्त्रीयोद्देश्यतावच्छेदकव्यापकतावच्छेदकतामुत्सर्गापवादशास्त्रीयविधेयगतान्यतरत्वे स्वीकृत्य ण्वुल्तृजादिवदपवादसंस्कार्येषु विकल्पापत्तिरित्यर्थः । *तत्राप्यनुत्पत्तिरेवेति* । ननु लुकीव लोपेऽपि तुल्यन्यायेनानुत्पत्तेरेवाङ्गीकर्तव्यतया हल्ङ्यादिसूत्रेण"स्वौजस्"इत्यत्र प्रातिपदिकपदे हलन्ताद्यतिरिक्तत्वेन सङ्कोचस्यैव फलिततया पन्था इत्यादावपि सोरनुत्पत्त्यापत्तिरिति चेद्, न । हल्ङ्यादिसूत्रेण परिनिष्ठितप्रयोगकालिकहलन्तातिरिक्तत्वेन सङ्कोचस्याश्रयणात् । न चैवं राजन्नित्यादेरपि परिनिष्ठिते हलन्तत्वाभावेन तत्रापि सोः श्रवणापत्तिरिति वाच्यम् ? अगत्या सुब्विधिशब्दे तन्त्रेण सुप्कर्मकविधावपि नलोपस्यासिद्धत्वाश्रयणेन "स्वौजस्" इतिसूत्रदृष्ट्या नलोपस्यासिद्धत्वेन परिनिष्ठितप्रयोगकालिकहलन्तत्वबुद्धिसम्भवात् "पथिमथि"इतिसूत्रादाव नुवर्त्तमानसुपदे विषयसप्तम्याश्रयणेन पूर्वमात्वादिषु सत्सु प्रक्रियाकालिकहलन्तातिरिक्तत्वेन सङ्कोचेऽपि क्षतिविरहेण प्रकृतेऽदोषाच्च । अथैवमपि प्रसक्तकर्मकानुत्पत्तेरेव लोपसंज्ञायां "प्रत्ययलोप" इत्यस्य प्रत्ययाभिन्नप्रसक्तकर्मकानुत्पत्तौ प्रत्ययलक्षणं भवतीत्यर्थाद्राजेत्यादौ नलोपवत् "कर्मण्यण्"इत्यस्यापवादभूतेन "आतोऽनुपसर्गे"इत्यनेन विहितकान्ताङ्गोदादिशब्दादणन्तलक्षणङीबापत्तिः । "कर्मण्यण्"इत्यनेन प्रसक्तस्याणोऽपवादशास्त्रजसङ्कोचेनानुत्पत्त्या प्रत्ययलक्षणप्राप्तेरिति चेद् ? न । "आतोऽनुपसर्गे"इत्येतच्छास्त्रीयोद्देश्यतावच्छेदककुक्षावणोऽप्रवेशेनाणुत्वेन रूपेणाणः प्रसक्तेरनपेक्षणेन "कर्मण्यण्" इत्यत्र सङ्कोचमात्रस्य तेन करणात् । राजेत्यादौ तु हल्ङ्यादिसूत्रे सुतिसीनामुपादानेन सुत्वादिरूपोद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धेरपेक्षणेनास्ति तत्प्रसक्तिरिति बोध्यम् । अण् योऽकार इतिव्याख्यानेन वर्णाश्रयत्वाच्च ।

दोषः, न्यायानङ्गीकारेऽपि विकल्पापत्तेः सत्त्वाच्च । 'अभिनिविशन्ते' इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनाऽपि अपवादविषयं पारत्यज्योत्सर्गेण ल-

---

न चैवमपि "न षट्स्वस्रादिभ्य" इत्यादिशास्त्रीयोद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धये ङीबादेः प्रसक्तेरावश्यकतया षट्संज्ञकादौ प्रत्ययलक्षणेन ङीबादिप्रयुक्तकार्यापत्तिरिति वाच्यम् ? तैर्ङीबाद्यभावस्यैव विधानेन ङीबादेः प्रतियोगितया विधेयकोटौ प्रवेशेन विधानात्प्राक् तेषां प्रसक्तेरनपेक्षणेन प्रत्ययलक्षणाप्राप्तेः । न च लुकाऽनुत्पत्तेरन्वाख्याने "सेर्ह्यपिच्च"इतिशास्त्रीयसिपदार्थे अदन्ताव्यवहितोत्तरत्वाभाववत्त्वेन सङ्कोचस्यैव फलितत्वेन भवेत्यादौ हेरनुत्पत्तावपि सेः श्रवणं दुर्वारम्, किं बहुना आदेशलुक्मात्रे स्थानिनां श्रवणापत्तिरिति वाच्यम्? "अतो हेः"इत्यादेस्तात्पर्यग्राहकत्वेन लोट्स्थानिकसेः प्रसङ्गेऽभावस्यादन्ताव्यवहितोत्तरत्वभाववतो हेश्च साधुत्वबोधनेनादोषात् । न चैवम् उद्देश्यतावच्छेदकलोट्स्थानिकसित्वव्यापकत्वस्य द्वितीये विधेये हानिरिति वाच्यम् ? जातिपक्षाश्रयणेन लोट्स्थानिकसित्वमुद्दिश्योभयोर्विधानेनोद्देश्यतावच्छेदकसित्वत्वाधिकरणे सित्वे स्वप्रतियोगिवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावस्य स्वस्थानिवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्यादन्ताव्यवहितोत्तरत्वाभावविशिष्टहेरभावस्य च तत्रासत्त्वेन व्यापकत्वोपपत्तेः प्रदर्शितश्चैवं स्थान्यादेशभावो "हलादिः शेष" इत्यत्र कैयटे । तत्र हि आट आटतुरित्यादौ "हलादिश्शेष" इत्यस्य प्रवृत्त्यर्थमभ्यासत्वमुद्दिश्यादीतरहल्निवृत्तिमादिहल्शेषश्च विधायोद्देश्यतावच्छेदकाभ्यासत्वत्वव्यापकत्वं विधेययोः साधितम्; भाष्योक्तमुपादश्रयं व्यक्तिपक्षाभिप्रायेणेति चोक्तम् ।

वस्तुतस्तु 'लुकाऽनुत्पत्तेरन्वाख्यानम्' इति चिन्त्यमेव अन्यादेशेष्विव स्थानिघटितबुद्धिप्रसक्तावादेशघटितं साध्विति बोधनेन जातनिवृत्तेरभावेन 'भुक्तवन्तम्'इतिन्यायस्य विषयाभावात् । भावरूपादेशविषयेऽन्यादेशस्याभावविषये चान्यादेशस्य स्थान्यादेशभावस्य ग्रहणे प्रमाणाभावादिति दिक् ।

*न्यायानङ्गीकारेऽपीति* । 'भुक्तवन्तम्'इतिन्यायानङ्गीकारेऽपीत्यर्थः । *विकल्पापत्तेरिति* । इदमुपलक्षणं विषयव्यवस्थानापत्तेरपि । *बुद्ध्यारूढा इति* । प्रवर्त्तनीयत्वप्रकारकज्ञानविषया इत्यर्थः । प्रवृत्ति-

क्षयसंस्कारआनीते, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोगे एव धर्मोत्पत्तेः। तदुक्तम्—"प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तते" इति। प्रकल्प्य-परित्यज्य।

यत्तु प्रकल्प्य चेत्यस्यायमर्थः—यथा 'न संप्रसारणे" (पा० सू० ६-१-३७) इति वचनात् परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध इति अभ्यस्तसञ्ज्ञासूत्रे कैयटः। तन्न, "न सम्प्रसारणे" (पा० सू० ६-१ ३७) इति सूत्रस्थ· भाष्यविरोधात्। तत्र हि "एतदेव ज्ञापयति परस्य न पूर्वस्येति। यद्वा, सम्प्रसारणाश्रयस्य प्रतिषेध" इत्याद्युक्तम्। न हि न्यायेन

विषयकाग्रहवन्त इत्यर्थ इति केचित्। *प्रकल्प्येति*। 'तत' इति दि· ग्योगलक्षणपञ्चम्याऽपवादशास्त्रप्रवृत्तेः पूर्वमेवोत्सर्गः प्रवर्त्तत इत्यर्थः। *अयमर्थ इति*। यथा यथा "न सम्प्रसारण"इत्यादिना लभ्यते तथाऽर्थ इत्यर्थः। *यथा न सम्प्रसारण इति*। अयं भावः-युवन् असित्यवस्थायां सम्प्रसारणपरत्वाभावान्निषेधाप्रवृत्तावन्तरङ्गत्वात्पूर्वयणः सम्प्रसारणे तत उत्तरस्यापि सम्प्रसारणेऽनिष्टापत्तिरतः पूर्वयणि स्वप्रवृत्त्यभावं परयणि स्वप्रवृत्तिं च सम्भाव्य पूर्वयण्यपवादशास्त्राविषयत्वं सम्भाव्य सम्परित्यज्य परयणि उत्सर्गः प्रवर्त्तत इति तन्मते प्रकल्प्येत्यस्य स· म्भाव्येत्यर्थः, तत इत्यस्य ल्यब्लोपपञ्चम्या तं परित्यज्येत्यर्थः।

ननु "न सम्प्रसारण" इति सूत्रं 'प्रकल्प्य' इतिन्यायज्ञापकमेव; परस्य यणः पूर्वं सम्प्रसारणमित्यादि तु फलितार्थकथनपरमेवेत्यभिस न्धाय भाष्यान्तरविरोधमाह—*यद्वेति*। *सम्प्रसारणाश्रयस्येति*। सम्प्रसारणनिमित्तकस्य पूर्वरूपस्येत्यर्थः। अयं भावः—"न सम्प्रसा· रण" इतिसूत्रं परित्यज्य "सम्प्रसारणाच्च" इत्यत्रैव 'सम्प्रसारणा· दसम्प्रसारण' इति न्यासेन सम्प्रसारणे परे पूर्वरूपस्यैव प्रतिषेधेन यणि यून इत्यादिसिद्धिरिति। ननूक्तयोः पक्षयोरेव यूनः पश्येत्यत्र फलभेदादेकशेष्युक्तित्वेन नैतदुक्तार्थे प्रमाणतामर्हति, तथा हि—पूर्वं परयणः सम्प्रसारणमिति ज्ञापनकल्पे हल्परत्वेन "एतत्तदोः" इतिसु· लोपः पूर्वरूपप्रतिषेधकल्पे यणः स्थानिवत्त्वेन हल्परत्वाभावेन तदप्र वृत्तिः, न च "न पदान्त" इति निषेधः; लोपस्य पदानवयवत्वादिति चेद्, न। भाष्यप्रामाण्येनात्र पदसंस्कारपक्षाश्रयणेन सोः स्थानिभूता·

सिद्धे एवमुक्तिरुचिता । तस्माद् न्यायस्य मदुक्त एव विषय इति बोध्यम् । यदपि "अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थः" इति । तदपि न, उक्तयुक्तेः । "न विभक्तौ तुस्माः" ( पा० सू० १-३-४ ) इति शास्त्रं तुस्मपदार्थज्ञानमात्रेण पादीनामेव तद्विषयत्वाभावबुद्ध्या तेषु हलन्त्यसूत्रप्रवृत्त्या सुप्तिङ्रूपवि-

दद्यः पूर्वत्वेनादृष्टत्वेन फलैक्यात् । न च युवन् शब्दाच्छसि बहुयून् इत्यत्र सम्प्रसारणप्रतिषेधकल्पे यणभावात् पूर्वरूपप्रतिषेधकल्पे यणः स्थानिवत्त्वेन यणः प्रवृत्तेश्च फलभेदो दुर्वार इति वाच्यम ? सुबन्ताश्रित इति सिद्धान्तेन यूनः पदत्वेन न पदान्तसूत्रे सप्तमीसमासस्य सिद्धान्तितत्वेन यणि कर्त्तव्ये स्थानिवत्त्वनिषेधेन फलभेदाभावात् । *तदर्थ इति* । 'पूर्वं ह्यपवाद' इतिन्यायार्थ इत्यर्थः । *उक्तयुक्तेरिति*। पदार्थोपस्थित्यादिसामग्रीसमवधाने शाब्दबोधे प्रतिबन्धकाभावरूपयुक्तेरित्यर्थः । नन्वेवमन्योन्याश्रयपरिहारेऽपि चक्रकापत्तिर्दुष्परिहरैव, तथा हि—"न विभक्तौ" इत्येतद्विषयनिर्णयानन्तरं "हलन्त्यम्" इत्यस्य प्रवृत्तिः, तन्निर्णयश्च "न विभक्तौ" इत्येतद्वाक्यार्थबोधानन्तरम्, स च विभक्तिपदार्थनिर्णयानन्तरम्, स च सुप्पदार्थनिर्णयानन्तरम्, स च पकारे हलन्त्यसूत्रप्रवृत्त्यनन्तरम् , तत्प्रवृत्तिश्च "न विभक्तौ" इत्येतद्विषयनिर्णयानन्तरमित्यत आह—*न विभक्तौ तुस्मा इतीति*। *पदार्थज्ञानमात्रेणेति* । नपदार्थतुस्मपदार्थयोर्ज्ञानमात्रेणेत्यर्थः । तथा च तुस्मभिन्ना हल इत इति प्रथमवाक्यार्थेन पादीनामित्त्वं, ततो विभक्तिपदार्थनिश्चये विभक्तिस्थतुस्मभिन्ना हल इत इतिवाक्यार्थेन नविभक्तिस्थतुस्मानामित्त्वमिति भावः । नन्वेव "नाज्झलौ" इत्यत्रापि आक्षरसामाम्नायिका अचो हलश्च मिथो न सवर्णा इति प्रथमवाक्यार्थे जातेऽपि "अणुदित्"सूत्रबोधानन्तरमचस्तद्गृहीताश्च हल्भिर्मिथो न सवर्णा इति द्वितीयो वाक्यार्थः स्यादेव, तथा चाकारप्रश्लेषो व्यर्थः, वाक्यापरिसमाप्तिप्रतिपादकभाष्यासङ्गतिश्चेति चेद् , न । "न विभक्तौ" इत्यत्र विभक्तिग्रहणसामर्थ्याद् द्वितीयवाक्यार्थाङ्गीकारेऽपि अन्यत्र तदङ्गीकारे प्रमाणाभावात् । स्पष्टा चेयं रीतिः प्रकृतसूत्रे शब्दरत्ने—"यथासंख्य" सूत्रसामर्थ्येन तत्र तथाऽङ्गीकारेऽन्यत्र तथाऽङ्गीकारे मानाभावादित्यादिना । नन्वेमपि "हलन्त्यम्" इत्यस्य बोधकाले "उपदेशेऽच्" इत्यस्य "नाज्झलौ" इत्यस्य च बोधानाभावेन "अणुदित्" इत्यस्य

भक्तिपदार्थज्ञानं सुलभमिति दिक् । अत्राप्युपदेश इति सम्बद्ध्यते । तद्बललभ्यमर्थमाह—सूत्रे इति ।

आदिरन्त्येन ( पा० सू० १-१-१७ ) । आदिरिति किम् ? अन्त्यशब्देन पूर्वेषामाक्षेपादिगादिप्रत्याहारेऽकारादिग्रहणं मा भूदिति । एवमादिशब्देन परेषामाक्षेपादिणादिप्रत्याहारेषु आ-

---

च सुतरामभावेनोदितः सवर्णग्राहकत्वाभावाद् "न विभक्तौ" इत्यत्र तुशब्दस्य तवर्गबोधकत्वाभावेन तज्ज्ञानासम्भवाद्विभक्तिस्थनकारस्येत्वापत्तिः पकारस्येव दुर्वारा, तुशब्दस्तु तिथोरित्यत्रेवोच्चारणार्थोकारेण तमात्रबोधक इत्येवं स्यादिति चेद् , न । परस्मिन्नित्यादिनिर्देशैरिहत्यहलपदस्य नकारभिन्नतत्परत्वमिति कल्पनात् । *अत्रापीति* । आवर्त्तित "हलन्त्यम्" इत्यत्रापीत्यर्थः । *सम्बध्यत इति* । अत एव "हल् विलेखने' इतिधातोर्लस्य नेत्त्वम् , उपदेशेऽनन्त्यत्वात् ।

*आदिरन्त्येन* । *आदिरिति किमिति* । अन्त्यशब्देनैव तल्लाभसम्भवादिति भावः । *अन्त्यशब्देन पूर्वेषामाक्षेपादिति* । आदेरेवाक्षेप इत्यत्र मानाभावेन स्वघटितसमुदायस्याक्षेपादन्त्येन सहोच्चार्यमाणो वर्णः अन्त्यपदेनाक्षिप्यमाणस्वनिष्ठचरमावयवतानिरूपकसमुदायघटकस्य तद्घटकबोध्यस्य वा संज्ञा स्यादित्यर्थेनेगादिशब्दैः ककारनिष्ठचरमावयवतानिरूपकाकारघटितसमुदायघटकबोध्यस्याकारस्यापि ग्रहणापत्तिरिति भावः । कृते तु तस्मिन् आद्यन्ताभ्यामिकारककाराभ्यां प्रत्यासत्त्या ककारनिष्ठचरमावयवतानिरूपकत्वविशिष्टेकारनिष्ठप्रथमावयवतानिरूपकसमुदायस्यैवाक्षेपेण नेगादिभिरकारादिग्रहणमिति बोध्यम् । एवमेवान्त्यग्रहणाभावेऽपि रीतिरनुसन्धेया । अथ माऽस्त्वादिग्रहणम् , "ऋलृक्"सूत्रादिघटकककारादिभिरुगाद्येकैकप्रत्याहारकरणेनैव व्याख्यानात् ककारनिष्ठचरमावयवताकस्य क्वचिदकारनिष्ठप्रथमावयवताकस्य क्वचिदिकारनिष्ठप्रथमावयवताकस्य क्वचिदुकारनिष्ठप्रथमावयवताकस्य च समुदायस्याक्षेपेण क्वचिद् 'अइउऋलृ' इत्येतेषां, क्वचिद् 'इउऋलृ' इत्येषां क्वचिद् 'उऋलृ' इत्येषां ग्रहणमित्यादिरूपेण ग्रहणेनेष्टापत्तौ अक् इगित्याद्यनेकप्रत्याहारकरणसामर्थ्येनोच्चार्यमाणादिनिष्ठप्रथमावयवताकसमुदायस्यैवाक्षेपकल्पनेनादोषात् । अथवा अन्त्यग्रहणमेवमास्तु लकारमात्रमनुबन्धं कृत्वा त्रयोदशानुबन्धात् सूत्रभेदञ्च विहाय लकारेणैवाल्इल् उलित्यादिकतिपयप्रत्याहारकरणेनैवाकारादिनिष्ठप्रथमावयवतानिरूप-

दीनां ग्रहणं मा भूदित्यन्त्येनेति । आदिः अन्त्येन इत्युभयोपादाने तु न दोषः । अयमादिरन्त्यो वेत्युक्तेऽत्रशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीतेः । परस्मिन् सति यस्मात्पूर्वो नास्ति स आदिः, पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य इति अकारादिग्रहणे इकारणकारादीनामाद्यन्तत्वस्यैवानापत्तेः । अत्राद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितः समुदाय आक्षिप्तः सञ्ज्ञी । तस्य चैकत्र लक्ष्ये प्रयोगाभावात्प्रत्येकं सञ्ज्ञित्वम् । अन्त्यस्य तु न तत्का-

---

कस्य क्वचिद् 'अइउ' इतिसमुदायस्य क्वचिद् 'अइउऋऌ' इत्यादिसमुदायानाञ्च व्याख्यानादाक्षेपेणेष्टापत्तौ त्रयोदशानामनुबन्धानां सूत्रभेदस्य बहुतरप्रत्याहारस्य च सामर्थ्येनोच्चार्यमाणान्त्यनिष्ठचरमावयवतानिरूपकसमुदायस्यैवाक्षेपेणेष्टापत्तेः । निरुक्तज्ञापकद्वयमाश्रित्य युगपदुभयखण्डनन्तु न सम्भवति, समुदायाक्षेपकपदाभावादिति चेत् ? मैवम् । ज्ञापकस्य व्याख्यानस्य चाश्रयणे गौरवात्, आद्यन्तयोरन्यतरप्रत्याख्याने विनिगमनाविरहाच्चेति दिक् । *अवशिष्टमपीति* । स्वघटितसमुदायरूपमपीत्यर्थः । *यस्मात्पूर्वो नास्तीति* । यत्समुदायनिरूपितमादित्वं वक्तव्यम्; तत्समुदायघटकः पूर्वो नास्तीत्यर्थः । तेन घटपटावित्यादौ पकारात्पूर्वं घटशब्दाकारादौ सत्यपि न पकारादौ पटशब्दाद्यादित्वहानिः । एवमुत्तरत्र परो नास्तीत्यस्यापि तत्समुदायघटकः परो नास्तीत्यर्थः । तेन घटशब्दोत्तराकारानन्तरं पकारादौ सत्यपि नाकारादौ घटशब्दाद्यन्तत्वहानिः । तथा च स्वघटकत्व-स्वघटकावधिकपूर्वत्व-स्वघटकावधिकोत्तरत्वाभाववत्त्वैतत्त्रितयसम्बन्धेन तत्समुदायविशिष्टत्वं तदादित्वम् । एवं स्वघटकत्वं स्वस्वघटकोत्तरत्व स्वघटकावधिकपूर्वत्वाभाववत्त्वैतत्त्रितयसम्बन्धेन तत्समुदायविशिष्टत्वं तदन्त्यत्वं फलतीति बोध्यम् । प्रत्यासत्तिलब्धमेवार्थं स्वरूपतोऽपि निरूपयति—*अकारादिग्रहण इति* । इक्पदेनाकारादिग्रहण इत्यर्थः । एवमण्पदेन अकारान्तग्रहण इत्यपि बोध्यम् । *आद्यन्तत्वस्यैवानापत्तेरिति* । इकारादेः समुदायघटकोत्तरत्वात् णकारादेश्च समुदायघटकपूर्वत्वादिति भावः । *समुदाय आक्षिप्त इति* । अयमर्थाध्याहारवादे, शब्दाध्याहारवादे तु तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानाधीनतदुपस्थितेर्हेतुतया

र्थम् । तस्येत्सञ्ज्ञालोपाभ्यामपहारात् । एतत्फलितकथनमेव भाष्ये मूले च—स्वस्य च रूपस्य इति । स्वमित्यनुवृत्तिपरत्वेन व्याख्यानं तु हेयमेव, अनुवृत्तौ फलाभावात् । इतेति किम् ? "जमङणन" (मा० सू० ७) इति णकारादिभिः प्रत्याहारो मा भूदिति । सहग्रहणाच्च समुदाय एव सञ्ज्ञेति समुदायादेव "इकः" इत्यादौ

---

समुदायबोधकशब्दाक्षेप एव वाक्यैकदेशप्रयोगस्थलवदिति बोध्यम् । *णकारादिभिः प्रत्याहारो मा भूदिति* । ननु तत्करणेऽपि पूर्वेण परेण वा णकारेणाण्प्रत्याहार इतिसन्देहापोहाय व्याख्यानस्यावश्याश्रयणीयतया तदकरणेऽपि तदाश्रयणेनैव सिद्धावितेति व्यर्थमिति चेद्, न । "नासूया तत्र कर्त्तव्या यत्रानुगमः क्रियते" इति भाष्योक्तेरिह व्याख्यानाश्रयणस्य जघन्यत्वात् । *सह ग्रहणाच्चेति* । अन्यथा श्चुनेत्यादिवत्तृतीययैवोपपत्तौ तद्वैयर्थ्यादिति भावः । *समुदाय एवेति* । तादृशसमुदायत्वस्यैव संज्ञात्वपर्याप्त्यनुयोगितावच्छेदकत्वमिति भावः ।

नन्वेतद् "इको यणचि" इत्यत्रत्यशब्दरत्नेन विरुद्धम्, तत्र हि व्यक्तिपक्षमुपक्रम्य "अणुदित्"सूत्रन्तु प्रत्याहाराद्यवर्णे चरितार्थमित्युक्तम्, एतदुक्तिरीत्या तु प्रत्याहाराद्यवर्णानामनर्थकत्वेन ककारादिचिह्नाणत्वेऽपि बोधकत्वासम्भवेन विरुद्धत्वात् । न चाद्यवर्णानामप्यादृशबोधकत्वं समुदायानां प्रत्याहारबोधकत्वञ्चास्तु, को विरोध इति वाच्यम्, अवयववृत्त्युपस्थापितार्थाविषयकबुद्धौ समुदायवृत्त्युपस्थितार्थविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानस्य प्रतिबन्धकत्वेन युगपदुभयबोधासम्भवादिति चेद्, न । ग्रन्थयोः प्रणेतृपुरुषभेदेन विरोधस्याकिञ्चित्करत्वात् । हरिदीक्षितनाम्ना नागेशेनैव सोऽपि प्रणीत इति किम्वदन्तीमवष्टभ्योच्यते चेत् ? अस्तु, तदा प्रत्याहाराद्यकारादीनामेव 'इउऋलृ'इत्यादिवर्णानां स्वसवर्णानाञ्च बोधकत्वम् । सकृदुच्चरितन्यायविरोधस्तु श्लेषस्थल इव तन्त्रादिनैव परिह्रियताम् । न च श्लेषस्थले प्रणेतृपुरुषतात्पर्यस्यान्यथाऽनुपपत्त्या तथाकल्पनेऽपि पाणिनेरर्थद्वयबोधतात्पर्यस्य कल्पकाभाव इति वाच्यम् । इकारादीनां स्वसवर्णमात्रग्राहकत्वे ककारादिसमभिव्याहारवैयर्थ्येन 'इउऋलृ'इत्यादिमात्रबोधकत्वे "अणुदित्"सूत्रेऽण्ग्रहणवैयर्थ्येन चोभयत्र पाणिनितात्पर्यकल्पनात् । न चैवं प्रत्याहाराद्यवर्णेभ्यो विभक्त्यापत्तिरिति वाच्यम् । विभक्तीतरकादिसमभिव्याहारापेक्षयैव लोकेऽर्थबोधजनकत्वेन

विभक्त्युत्पत्तिर्नादिमात्रात् । न चान्त्यस्येत्सञ्ज्ञालोपाभ्यामपहाराद् "आदिरन्त्येन (पा० सू० १-१-७१) इत्यसङ्गतम् । सूत्रेष्वित्सञ्ज्ञायामपि इगादिशब्देषु तदभावात्, अन्त्येनेत्यस्येदन्त्यसदृशेनेत्यर्थात्, व्यक्तिपक्षे एवमेवौचित्यात्, सादृश्यमूलिकैव चात्र तत्त्वप्रत्यभिज्ञेत्याहुः । "अचिश्नुधातु" (पा० सू० ६-४-७७) इति सूत्रे इण इत्येव सिद्धे य्वोरिति निर्देशादिण् परेणैवेति "लण्" (मा० सू० ६) सूत्रे भाष्ये स्पष्टम् ।

हलन्त्यम् (पा० सू० १-३-३) । अत्र पदद्वयं, समासेऽन्त्य-

---

समुदायस्यैव प्रातिपदिकत्वात् । सवर्णरूपार्थमादायापि न संज्ञाऽवसरः । व्यक्तिपक्षे "अणुदित्" सूत्रस्यापि स एवायमिति प्रत्यभिज्ञया ककारादिसमभिव्याहारापेक्षयैव प्रवृत्तेः । तथा च सहग्रहणाच्चेत्यत्र सहशब्दस्य साहित्यमर्थः । गृह्णातेश्च—बोधनम् । *समुदाय एवेति* । सप्तम्यन्तेन कृतसन्धिः, संज्ञाशब्दः—प्रातिपदिकसंज्ञापरः, एवञ्च साहित्यबोधनाच्च समुदाये एव प्रातिपदिकसंज्ञेत्यादिरर्थ इति दिक् । *अपहारादिति*। अपहारश्च प्रकृते बोध्यत्वेन पाणिनितात्पर्यविषयत्वाभाव एवेत्याभिहितम् । *सूत्रेषु*—वर्णसमाम्नायसूत्रेषु । *तदभावादिति* । लोपस्य सामर्थ्यादभावे फलाभावात्संज्ञाऽपि नेत्यर्थः ।

यत्तु—शक्तिग्रहात्पूर्वमर्थवत्त्वाभावेनाप्रातिपदिकत्वाद् व्यवसितान्त्यत्वाभावेन संज्ञाप्राप्तिरेव नेति, तन्न । यत्र सति प्रातिपदिकत्वे परिष्कृतार्थवत्त्वं भावि तत्र संज्ञेत्यर्थात् । अन्यथा राम इत्यादावपि प्रातिपदिकत्वे सत्येवं परिष्कृतार्थवत्त्वेन संज्ञाऽनुपपत्तिर्दुर्वारैव । "आदिरन्त्येन" इतिशक्तिग्राहकप्रवृत्तिस्तु न फलम् । इगादिषु कादेरित्वेऽपि चतुर्दशसूत्रीसम्बन्धिविवक्षितान्त्यत्वाभावेनेदन्त्यसदृशेनेत्यर्थावश्यकत्वेन संज्ञाविरहेऽपि तत्प्रवृत्तेरित्याह—*अन्त्येनेत्यस्येति* । प्रत्याहारनिष्पत्तिकालेऽन्त्यस्यासत्त्वेऽपि तस्य स्मरणमात्रेण तत्सादृश्यज्ञानमिगाद्यघटककादिषु सुलभमित्याशयः । अत्र सादृश्यानुयोगिनः समुदायाघटकत्वेऽपि तत्प्रतियोगिनस्तथात्वात्तेनैव समुदायाक्षेपः सुलभः । *इण् परेणैवेति* । इदं सन्दर्भविरुद्धत्वात्किञ्चिदक्षरव्यत्यस्ताणुदित्सूत्रग्रन्थेन पुनरुक्तत्वाच्च हेयमेव । भट्टानुकृरीत्या कथञ्चित्सन्दर्भसम्भवेऽपि पुनरुक्तता दुर्वारैवेत्याहुः ।

शब्दस्य पूर्वनिपातापत्तेः कर्मधारययोग्यपदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वाच्च। यद्यपि सर्वोऽपि हल् तं तं समुदायं प्रत्यन्त्यो भवति, तथाऽप्यन्त्यपदोपदेशपदाभ्यां प्रत्यासत्त्याऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयसमुदायं प्रत्यन्त्य इह गृह्यते। अत एव प-

---

*अत्र पदद्वयमिति*। समासे प्रत्येकवृत्तिसहकृतायाः समुदायवृत्तेरभ्युपगमेन गौरवात्। स्वयं हेत्वन्तरमाह—*पूर्वनिपातापत्तेरिति*। हल्पदस्य इदं हलित्याद्यनुगतप्रतीतिसिद्धहल्त्वजातिवाचकत्वादन्त्यपदस्य गुणवाचकत्वाच्चेति भावः। "अतो हलादेः" इत्यादौ हल्पदस्य पूर्वनिपातेन हल्पदस्य हकारादिलान्तसमुदायघटकवाचकत्वाभ्युपगमादन्त्यपदवद्गुणवाचकत्वाविशेषात्पूर्वनिपाते कामचारात्तस्य बहुशो व्यभिचाराच्च हेत्वन्तरमाह—*कर्मधारययोग्येति*। *समासाभावस्येति*। तत्पुरुषः समानाधिकरणः पिति कृतीत्यादाविति भावः। अयञ्च प्रायोवादः, तेन एकाल् एकाजित्यादौ समासेऽपि न क्षतिरिति टीकाकाराः।

केचित्तु—कर्मधारययोग्यपदमात्रघटितसूत्र एव समासाभावः। यथा "अक्ष्णोऽदर्शनात्" इत्यादाविति न व्यभिचारशङ्केत्याहुः, तन्न। "निपात एकाच्" इत्यादावेकाचपदे समासेन व्यभिचारात् कर्मधारययोग्यपदद्वयमात्रघटिते सूत्रे तथानियमोपगमेऽपि "गोत्रावयवात्" इत्यत्र व्यभिचाराच्च।

अन्ये तु—यत्र समासे व्यासे वा रूपे न विशेषसम्भवस्तथाभूते कर्मधारययोग्यपदद्वयमात्रघटिते समासाभावः शैलीसिद्ध इत्याहुः।

परे तु—यत्र लाघवादरस्तत्र वाक्यम्, यत्र च तदनादरस्तत्र समासः, इत्येव शैलीसिद्धमित्याचक्षते।

अथ तव्यदादौ यकारादेरपि यत्किञ्चित्समुदायान्त्यत्वेनेत्त्वापत्तिं परिहर्त्तुमाह—*यद्यपीति*। *प्रत्यासत्त्येति*। उपदेशे विद्यमानमन्त्यमित्यर्थोऽर्थादुपादिश्यमानसमुदायान्त्यमित्यर्थ इति भावः। तदेवं स्पष्टयति—*अज्ञातस्वस्वरूपेति*। अज्ञातम्—अपूर्वज्ञानीयविषयतावच्छेदकं विधेयतावच्छेदकं यत् स्वस्य समुदायस्य रूपं प्रत्यक्षविषयतावच्छेदको धर्मस्तज्ज्ञापकं यदुच्चारणं तद्विषयसमुदायान्त्यमित्यर्थः। स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताकबो-

कारेत्सञ्ज्ञापरित्राणार्थस्थमोरुकारश्चरितार्थः । समुदायोपदेश एव सर्वत्र ऋषितात्पर्येणावयवानां नान्तरीयकतया तेषामज्ञातस्वस्व-रूपज्ञापकत्वाभावात् । उपदेशेऽन्त्य इति । तत्र विद्यमानमन्त्य-मित्यर्थः । तेन "अइउण्" (मा० सू० १) इत्यादौ णादीनां हलू-

---

धप्रयोजकोच्चारणकर्मीभूतसमुदायान्त्यमिति यावत् । *चरितार्थ इति* । अन्यथा तदुच्चारणेऽपि थम्रूपसमुदायान्त्यत्वस्य तत्र दुर्वा-रतयेत्त्वापत्त्या तद्वैयर्थ्यापत्तेरिति भावः । नन्वेमपि मकारेत्संज्ञादुष्प-रिहरैव; तादृशोच्चारणकर्मत्वस्य थम्शब्देऽपि सत्त्वादित्यत आह— *समुदायोपदेश एवेति* । तथा च तादृशोच्चारणकर्मत्वेन तात्पर्यवि-षयान्त्यमिदित्यर्थेन थमोऽतथाभूतत्वमिति भावः । नन्वेवमवयवाना-मुच्चारणमेव न स्यात्तत्र तात्पर्याभावादित्याशङ्क्याह—*अवयवाना-मिति* । *नान्तरीयकतयेति* । अन्तराविनाभावोऽन्तरीयः, गहा-दित्वाच्छः, स्वार्थे कः; नशब्देन समासः । भावे तलिति साधनाद्याप-कतयेत्यर्थः । उच्चारणेऽपीति शेषः । तथा चावयवोच्चारणं विनाऽन्त्र-यविन उच्चारणासम्भवादेव तदुच्चारणं न त्वेतावता तत्र तादृशता-त्पर्यविषयतेति तात्पर्यम् । *तेषाम्*—अवयवानाम् । *अज्ञातेति* । तादृशोच्चारणकर्मत्वेन तात्पर्यविषयत्वाभावादित्यर्थः । समुदायगतं तात्पर्यविषयत्वमादायापत्तिस्तु पर्याप्तिशृङ्खलाबन्धनेनैव परिहरणीया। ननु अन्त्यं हलुपदेश इद्भवतीत्यर्थेऽइउणित्यादौ णादीनामित्त्वं न स्यात्तदुपदेशकाले हल्प्रत्याहारासिद्धेरभावादत आह—*तत्र विद्यमा-नमिति* । एवञ्चोपदेशकालिकविद्यमानत्वस्य हल्प्रत्याहारसिद्ध्युत्त-रक्षणेऽपि सत्त्वादित्त्वं सिद्ध्यतीत्यभिप्रेत्याह—*तेनेति* । तथा च अइउणित्यादेः पूर्वमुपदेशः ततो लस्येत्संज्ञा, ततो हल्प्रत्याहारसिद्धिः, ततो णस्येत्संज्ञेति बोध्यम् । नन्वत्र विद्यतिक्रियाध्याहारेऽधिकरण-कारकस्य साक्षादेव क्रियाऽन्वयात् क्रियाऽन्वयोऽप्यस्य कर्तृकर्मद्वारेणै-वेति कारकप्रकरणस्थस्वोक्तिविरोध इति चेन्न । तस्याक्षशौण्डास्तिष्ठ-तीत्यादिविषयत्वात् । यत्र हि कर्तृकर्मविशेष्यतया क्रिया भासते तत्र तद्द्वारैव क्रियाऽन्वयसम्भवे क्रियान्तराध्याहारो न युक्तः। तत्रसाक्षा-दन्वयश्चायुक्तः, अक्षशौण्डादौ समासानापत्तेः। यत्र तु कर्तृकर्मक्रिये तद्वि-शेषेण यथा-कटे शयानो देवदत्तः, स्थाल्यां पक्व ओदन,इत्यादौ तत्र तु साक्षादेव क्रियाऽन्वयः तत्र विद्यमानमित्यत्रापीत्थमेव । एवमक्षेषु शौण्ड-

प्रत्याहारसिद्ध्युत्तरं तत्सिद्धिः। अन्यत्र त्वन्तरङ्गत्वात्प्राय उच्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्सञ्ज्ञा। पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव। "उपदेशोत्तरकाला इत्सञ्ज्ञा" इति "नाज्झलौ" (पा० सू० १-१-१०) इति सूत्रभाष्यात्। 'धुट्' इत्यादौ सानुबन्धाद्विभक्तिस्तु तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा। इत्सञ्ज्ञाकार्यं तु यत्र सञ्ज्ञा तत्रानर्थक्यात् तदुपस्थाप्य एव। स्पष्टञ्चेदं "तित्स्वरितम्" ( पा० सू० ६-१-१८५ ) इत्यत्र कैयटे। वैयाकरणे चित्स्वरस्तु न। तस्येच्चकारसदृशत्वेऽपि तत्त्वा-

स्य धनमित्यादावव्यवधानविघाताक्षयायामेवान्वय इत्यलम्। *अन्यत्र*- "गुप्तिज्किद्भ्यः सन्" इत्यादौ। *अन्तरङ्गत्वादिति*। तेन 'न धातुलोप' इति सूत्रस्थं "धातुग्रहणं किम्? लूञ् लवित।" इति भाष्यं सङ्गच्छते। धातुसञ्ज्ञायाः क्रियावाचकत्वज्ञानाधीनत्वेन बहिरङ्गत्वात्। *प्राय इति*। इत्संज्ञेत्यनेनान्वितम्, तेन मामनादेर्नकारादीनां तवर्गान्तर्गतत्वेन निषेधसम्भावनया "न विभक्तौ" इत्येतद्वाक्यार्थबोधोत्तरमित्संज्ञायामपि न क्षतिः। *तदव्यवधानेनेति*। उच्चारणाव्यवधानेनेत्यर्थः। यद्यपि "नाज्झलौ" इतिसूत्रे उत्तरत्वमात्रमुक्तम्, तथाऽपि तदव्यवहितत्वसहितं ज्ञेयम्, अधिककालव्यवायसाधकाभावात्।

ननु सशब्दः स्वसरूपबोधकबोध्यः, शब्दशास्त्रीयसंज्ञेतरबोधकबोध्यशब्दत्वात्, जराशब्दवदित्यनुमित्या सशब्दे स्वरूपवद्बोधकबोध्यत्वसाधनादनुबन्धसहिते बोधकत्वाभावेनाप्रातिपदिकत्वात्ततो विभक्तिर्दुर्लभेत्यत आह-*विभक्तिस्त्विति*। "तस्यलोप" इत्येतत्सूत्रस्थतकारेण पूर्वोक्तहेतुघटकबोधकपदेऽनुबन्धसमभिव्याहृतवर्णाघटितत्वविशेषणदानेन सशब्दे तादृशहेतोरभावेन साध्यासिद्ध्या विशिष्टस्य बोधकत्वे बाधकाभाव इति भावः। तदेवाह-*तेनैवेति*। *अनुबन्धविनिर्मुक्तोपस्थितेरिति*। अनुबन्धेषु "तस्य लोप" इत्यनेन बोधविषयत्वाभावबोधनादिति भावः। नन्वनुबन्धानां बोधकावयवत्वे बोध्ये तत्तदनुबन्धप्रयुक्तकार्यं न स्यादत आह—*इत्संज्ञाकार्यन्त्विति*। *तदुपस्थाप्य एवेति*। आनर्थक्यद्बोधकवृत्तिधर्माणां बोध्य आरोपादिति भावः। ननु तदुपस्थाप्य एव चेदित्कार्यं तदा वैयाकरण इत्यादौ चिदुपस्थाप्यैकारे चित्कार्यप्रसङ्ग इत्यत आह-*वैयाकरण इति*। *इच्चकारसदृशत्वेऽपी-

भावात् । विभक्त्यादिसञ्ज्ञाऽपि सूत्रान्तर्गतानामेवेति तत्रैव "न विभक्तौ" (पा० सू० १-३-४) इत्यादीनां प्रवृत्तिः । अत एव "इदम इश्" (पा० सू० ५-३-३) इत्यादावणत्वात्सवर्णग्रहणं प्राप्तमप्रत्यय इत्यनेन निषिध्यते" इति भाष्योक्तं सङ्गच्छते ।

यत्तु "अनेकाल्" (पा० सू० १-१-५५) सूत्रे "इशि शिद्ग्रहणाभावेऽपि शित्करणादेव सर्वादेशत्वम्" इति भाष्ये उक्तं, तस्येत्सञ्ज्ञकशकारकरणाद् भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वमित्यर्थ इति न तद्विरोधः ।

---

ति* । ननु सादृश्यमूलकाभेदाध्यवसायस्य प्रागुपपादितत्वात्तत्राध्यारोपितचित्त्वात्तद्बोध्ययोरैकारौकारयोरपि तदारोपो दुर्वार इति चेद्, न । सनादिषु नकारादेः करणान्यथाऽनुपपत्त्या बोध्ये नित्त्वादेरारोपेऽपि ऐच्पदे चकारस्य प्रत्याहारसम्पादनेन चरितार्थस्यारोपितधर्मारोपे सामर्थ्यविरहात् । नन्वनुबन्धविनिर्मुक्तपदार्थस्योपस्थितिस्वीकारे जसादौ जकारादेरित्संज्ञालोपयोरन्तरङ्गत्वात्पूर्वमेव प्रवृत्तेरकारादिमात्रस्य विभक्तिसंज्ञाप्रसङ्गात् "न विभक्तौ" इत्यस्यापद्यमानमानर्थक्यं परिहर्तुमुपजनिष्यमाणन्यायमूलकमर्थमाह—*विभक्त्यादीति* । आदिना प्रत्ययसंज्ञा । यत्र तु "न विभक्तौ" इत्यस्य न प्रसङ्गः, तत्र त्वनुबन्धविनिर्मुक्तस्यैव संज्ञा; पूर्वमित्संज्ञालोपयोरप्रवृत्तौ बीजाभावादिति बोध्यम् । *अत एव*—अनुबन्धविनिर्मुक्तपदार्थोपस्थितेरेव । *अणत्वात्सवर्णग्रहणं प्राप्तमिति*। अणूबोधकं पदं स्वबोध्याणूसवर्णग्राहकं भवतीत्यर्थाद्विति भावः । *सङ्गच्छत इति* । अन्यथा इशो बोध्यत्वे तस्यानणत्वात्सवर्णाप्रसिद्धेश्च ग्रहणाप्राप्तौ तदसङ्गतिः स्पष्टैव ।

"शित्करणादेव सर्वादेशत्वम्" इति भाष्यं शित्करणादनेकाल्त्वादेव सर्वादेशत्वमिति रूपेण प्राचीनैर्व्याख्यातम् । अन्यथा व्याख्यातुमाह—*यत्त्विति*। *भूतपूर्वानेकाल्त्वमादायेति*। अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्य आरोपादनेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयः सर्वस्य भवतीत्यनेकाल्शिदित्यस्यार्थकरणाद्वा बोधकवृत्त्यनेकाल्त्वादेः स्थानिवत्त्वेन लाभाद्वेति भावः । न चानेकाल्त्वस्याल्त्वव्याप्यधर्मघटितत्वेन 'अनल्विधौ' इति निषेधात्तृतीयो हेतुरयुक्त इति वाच्यम् ? "न ल्यपि" इतिज्ञापकेनाल्त्वव्याप्यधर्मघटितधर्मेऽनुबन्धघटितबोधकावृत्तीति विशे-

अत्र केचित्—अनुबन्धा अनेकान्ताः अनवयवाः । यो ह्येकान्तः स कदाचित्तत्रोपलभ्यत एव । अयन्तु न तथा, तदर्थभूते विधेये कदाऽप्यदर्शनात् । "हलन्त्यम्" (पा० सू० १·३·३) इत्यत्रान्त्यशब्दः परसमीपबोधकः, "चुटू" (पा० सू० १·३·७) इत्यादावादिशब्दः पूर्वसमीपबोधकः, "अनेकाल् शित्" (पा० सू० १·१·५५ ) इत्यादौ समीपे सामीप्यमूलकावयवत्वारोपेण बहुव्रीहिः। स्पष्टश्चेदं "उपदेशेऽज्" ( पा० सू० १–३–२ ) इति सूत्रे भाष्ये "मपर्यन्तस्य" ( पा० सू० ७–२–९१ ) इति सूत्रे कैयटे च । तेन डाणलादौ इशादौ च न दोषः । अत एव "उपदेशेऽच्" ( पा० सू० १–३–२ ) इति सूत्रे उपदेशग्रहणं चरितार्थम् । तद्धि 'अभ्र आँ अटितः' इत्यादौ "आदितश्च" ( पा० सू० ७–२–१६ ) इतीट्प्रतिषेधाभावाय। अनेकान्तत्वे हि तत्प्राप्तिरित्याहुः।

परे तु—एकान्ता एव शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते, नैवमयम्। किञ्चानवयवत्वे ण·श·क··प्रत्ययादौ णादेरित्त्वानापत्तिः । प्रत्ययादित्वाभावात् । एवमन्यत्वाभावादिशादेः शास्येत्त्वानापत्तिः । उक्तार्थलाक्षणिकत्वे तु लक्षणैव दोषः । किञ्च दध्नचश्चकारवैयर्थ्यापत्त्याऽवयवत्वमेव न्याय्यम् । अत एव "वुञ्छण्कठच्" ( पा० सू० ४–२–८० ) इतिसूत्रविहितके णित्त्वप्रयुक्तवृद्धिर्न । "तस्य लोपः" ( पा० सू० १–३–९ ) इति भाष्ये "एकान्तत्वमेव न्याय्यम्" इत्युक्तेश्च । "उपदेशेऽज् ( पा० सू० १–३–२ ) इति सूत्रे उपदेशग्रहणन्तु स्पष्टार्थमेवेत्याहुः । सर्वत्रानुबन्धसहितानिर्देशे विधौ "गुप्तिज्किद्भ्यः" ( पा सू० ३–१–५ ) इत्यादौ नकारेत्संज्ञकः सो भवतीत्यादिक्रमेण बोधः । अनुवादे

---

षणादानेनादोषात् । प्रसङ्गादाह-*अत्र केचिदित्यादि आहुरित्यन्तम्*। अत्रत्यं तत्त्वं परिभाषाऽर्थप्रकाशतोऽवसेयम् । उक्तमुपसंहरति—*सर्व·

"सन्यतः" ( पा० सू० ७-४-७९ ) इत्यादौ च नकारेत्सञ्ज्ञके सशब्दे पर इत्यादिक्रमेण बोधः । स्पष्टश्चेदं निष्ठासञ्ज्ञासूत्रे भाष्ये । अत एव "आटश्च" ( पा० सू० ६-१-९० ), इत्यादेर्नासङ्गतिः । अन्यथा यत्राट् सूत्रे तत्र नाच्परो, नेष्यते च तत्र वृद्धिः, यत्र

---

त्येत्यादिना* । *नकारेत्संज्ञके सशब्द इति* । वस्तुतस्तु "सन्यतः" इत्यादावनुवाद एवेदृशार्थप्रयोजनं; न तु विधौ । तेन सत्त्वेन विधानेऽपि "ञिनत्यादिर्नित्यम्" इत्यादौ निदादिपदस्य निद्बोध्यार्थकत्वेन क्षतिविरहात् । लक्षणायां 'न विधौ परः शब्दार्थः' इति न्यायविरोधाच्च, तादृशविधेयतावच्छेदककल्पने गौरवाच्च । *अत एवेति* । अनुवादे तथाव्याख्यानादेवेत्यर्थः । *यत्राडिति* । "आणद्या" इत्यादौ । ननु "आडजादीनाम्" इत्यत्राच्परोऽपि स उपलभ्यत इति तत्रैव वृद्ध्यर्थं सूत्रमस्त्वित्यत आह—*नेष्यते चेति* ।

परे तु-अनुबन्धविनिर्मुक्तपदार्थोपस्थितौ प्रमाणाभावाल्लोपपदस्य "अदर्शनं लोप" इत्येतत्सूत्रसङ्केतितमर्थं विहाय बोधविषयत्वाभावार्थकत्वकल्पनस्यायुक्तत्वाच्चेत्संज्ञालोपौ लक्ष्य एव लुगादिवत्प्रवर्त्तेते, बोध्यावयवत्वमेकान्तत्वं तदनवयवत्वञ्चानेकान्तत्वम् । बोधकेऽनुबन्धप्रयुक्तकार्याणामप्रवृत्तेस्तदवयवत्वानवयवत्वविचारस्य निष्प्रयोजनत्वेन काकदन्तपरीक्षातुल्यत्वात्, "सन्यत" इत्यादौ नकारेत्संज्ञकबोध्ये सादौ लक्षणायां गौरवाच्च विशिष्टाद्विभक्तिदर्शनेन बोधकावयवत्वस्य निश्चयेन सन्देहानुत्थितेश्च । अत एव भाष्येऽपि-"एकान्तः, तत्रोपलब्धेः" इत्यनेन बोध्यावयवत्वमेव सूचितम् । तत्रोपलब्धेरिति हेतुवाक्यस्यावधारणपरतया कैयटोक्तं व्याख्यानमपि निष्प्रयोजनत्वाद्धेयमेव । न च बोध्यावयवत्वे "उपदेशोत्तरकालेत्संज्ञा' इतिभाष्यविरोध इति वाच्यम् ? "हलन्त्यम्" इत्येतद्वाक्यार्थबोधं प्रति अइउणित्यादिवर्णोपदेशज्ञानस्य कारणत्वं प्रतिपादयितुमेव तत्प्रवृत्त्या इत्संज्ञाया वर्णोपदेशाव्यवहितोत्तरकालिकत्वबोधने तात्पर्याभावेन बोधक एवेत्संज्ञालोपयोरेतस्माद्भाष्यादलाभात । न च "इदम इश्, अणत्वात्सवर्णग्रहणं प्राप्नोति" इति भाष्यविरोध इति वाच्यम ? 'उपदेशे किम् ? अभ्र आँ अटित' इत्यादिवदस्याप्यनेकान्तपक्षाभिप्रायकत्वात् । अस्मिन् कल्पे च नानेकान्तैकान्तत्वविचारो निष्प्रयोजनः; शित्वनित्वादिप्रयुक्तकार्याणां बोध्य एव प्रवृत्तेस्तत्रावयवत्वानवयवत्वयोर्लक्षणाद्याश्रयणानाश्रयणादिप्रयुक्तवैलक्षण्य-

प्रयोगे इष्यते वृद्धिस्तत्र नाडिति तदसङ्गतिः स्पष्टैव। अन्त्यसम्भवात्। अस्तु वा बोधकावयवत्वानवयवत्वविचार एव, अस्तु चानुबन्धविनिर्मुक्तपदार्थोपस्थितिरेव; तथाऽपि नकारेत्संज्ञके सशब्द इत्यादिक्रमेणार्थकरणमयुक्तमेव। बोधकवृत्तिनकारेत्संज्ञकत्ववत्सत्त्वस्यापि बोध्य आरोपेणागमनसम्भवे सनादिपदानां स्वं रूपशास्त्रबोधितं सन्त्वाद्यवच्छिन्नबोधकत्वं विहाय नकारेत्संज्ञकसत्वादिरूपगुरुधर्मावच्छिन्नबोधकत्वकल्पनाया व्यर्थत्वाद् गौरवग्रस्तत्वाच्च।

किञ्चैवं णाणोर्णकारेत्संज्ञकात्वावच्छिन्नबोधकत्वापत्तौ णेऽण्कृतस्याणि णकृतस्य च कार्यस्य प्रसङ्गादादित्वावच्छिन्नोद्देश्यताकेत्संज्ञावणूणकारवदकारबोधकत्वस्य णपदे अन्त्यत्वावच्छिन्नोद्देश्यताकेत्संज्ञावण्णकारवदकारबोधकत्वस्य चाण्पदे कल्पनायामतीवगौरवम्। अत एव "विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम" इतिस्थानिवत्सूत्रभाष्यं हल्ङ्यादि सूत्रे 'अतिखट्व' इत्यादौ सुलोपवारणाय दीर्घग्रहणम्, अतिखट्वायेत्यत्र याडागमवारणाय स्थानिवत्त्वप्रतिषेधकं "ङ्याब्ग्रहणेऽदीर्घ" इति वार्तिकम्, आ आबिति प्रश्लिष्य तदुभयप्रत्याख्यानपरं भाष्यं; "नानुबन्धकृतमनेजन्तत्वम्" इतिपरिभाषाऽऽरम्भपरं भाष्यं प्रणिदापयतीत्यत्रादाबिति प्रतिषेधमाशङ्क्य दाधाघ्वदापिदितिन्यासान्तराद्यनुधावनपरं भाष्यञ्च सङ्गच्छते। अन्यथा टकारेत्संज्ञकत्वादिरूपेदृत्वादीनां स्थानिवत्त्वालभ्यत्वेनावदातामित्यत्र दात्वस्य स्वतः सिद्धत्वेन पकारेत्संज्ञकत्वस्य बोधकवृत्तेरारोपेणादाबिति प्रतिषेधासिद्धौ परिभाषाऽऽरम्भवैयर्थ्येन प्रणिदापयतीत्यत्रोक्तरूपदाप्त्वस्यासत्त्वेनादाबिति प्रतिषेधाप्रवृत्तेर्घुसंज्ञासिद्धौ न्यासान्तराद्यनुधावनवैयर्थ्येन च तेषामसङ्गतिः स्पष्टैव। न चैवम् "उञि च" इतिसूत्रस्थस्य भाष्यस्यासङ्गतिः, तत्र हि "पदे किम्? तन्त्रयुतं, नैतदस्ति, लक्षणप्रतिपदोक्तपरिभाषयैव सिद्धम्, एवं तर्हि "ङमो ह्रस्वाद्" इत्युत्तरार्थं पदग्रहणम्" इत्याद्याशयकमुक्तम्, तत्र चोञ्त्वस्यैकान्तपक्षे वास्तविकस्य वेञ्शब्देऽसत्त्वेन बोध्ये तदारोपासम्भवेनोञादिपदस्य स्ववृत्त्यानुपूर्व्यवच्छिन्नबोधकत्वे तद्भाष्यासङ्गतिः स्पष्टैव। उञीत्यादिपदस्य ञकारेत्संज्ञकाकारे इत्यादिक्रमेणार्थेऽङ्गीकृते तु बोधकवेञ्शब्दवृत्तिञकारेत्संज्ञकत्वस्य बोध्य आरोपेणोकारत्वस्य च तत्र स्वतः सिद्धत्वेन श्रुताकारसम्भूतानुबन्धाभ्यामित्युक्तरीत्या तत्र ञकारेत्संज्ञकोकारत्वस्यार्थसमाजग्रस्तत्वेन तद्भाष्यसङ्गतिरिति वाच्यम्? तद्भाष्यस्यानेकान्तपक्षाभिप्राय-

ङ्किम् ? वाचालः । हलिकम् ? 'चिरिणोति' इत्यादौ धातोरन्त्यस्य मा भूत् ।

आद्योच्चारणमिति । आद्यमुच्चारणमित्यर्थः, भावे घ-

---

कत्वात् । तत्र पक्षे चोभूत्वस्य बोधके वास्तविकस्यासत्त्वेनारोपस्याव-श्यकत्वे अकारेत्संज्ञकोकारे इत्यादिक्रमेणैवार्थ इतिश्रुताकारेत्यादिपूर्वोक्तरीत्यैव भाष्यसङ्गतिः । तद्भाष्यस्य परान्तस्य ङमो ङमुडित्यर्थेन सिद्धस्य दण्डिनेत्यादेस्तत्फलत्वेन प्रदर्शनपरेणोत्तरभाष्येणैवैकदेश्युक्तित्वस्य वक्तव्यत्वेन तद्विरोधस्याकिञ्चित्करत्वाच्च । देवरुहीत्यत्र "हशि च" इत्युत्वाभावस्तु सूत्रे रुशब्दे सानुनासिकोकारपाठेनोत्वनिमित्तभूतविलक्षणरुत्वस्य तत्रासत्त्वादेव बोध्यः । "सनाशंस" इतिसूत्रे सन्पदेन धातोर्ग्रहणाभावस्तु प्रत्ययाप्रत्ययग्रहणपरिभाषयैव बोध्यः । इत्थञ्च सर्वत्रानुपूर्व्या पवोद्देश्यताविधेयतयोरवच्छेदकत्वमित्युपपन्नमित्याहुः ।

*वाचाल इति* । न चेत्संज्ञायाः फलाभावः, लित्स्वरार्थत्वात् । न चैवं चित्त्ववैयर्थ्यं, तत्सामर्थ्येन स्वरयोः पर्यायत्वापत्तेः । न च लस्येत्संज्ञालोपयोः स्वरमात्रार्थत्वे लाजित्येव वाच्ये तथाविधानसामर्थ्यान्नेत्वमिति वाच्यम् । तथाविधानस्य तितउशब्दे गुणाभाववदकारयोः सवर्णदीर्घाभावकल्पनेन कृतार्थत्वात् । अथवा वाचाल इत्येतत्स्वसाधकसूत्रसाध्यवाचाटेत्यस्योपलक्षणम् । अत्र हि टस्येत्त्वे ङीबापत्तिः । न च टस्येत्संज्ञालोपयोस्सतोः सवर्णदीर्घेऽदन्तत्वाभावान्ङीपोऽप्राप्तिरिति वाच्यम् । चाटि वक्तव्य आटाज्विधिसामर्थ्येन सवर्णदीर्घाभावकल्पनेनादन्तत्वसम्भवात् । ननु भूजीत्याद्येकाच्सु सामार्थ्यादन्त्यस्येत्वाभावकल्पनसम्भवादाह-*चिरिणोतीति* । *धातोरन्त्यस्येति* । इदित्त्वन्तु नुमर्थं स्यादिति भावः । न च "उपदेशेऽच्" इतिसूत्रसामर्थ्येनाच्चेदिद्भवति तर्ह्यनुनासिक एवेति नियमादिदं व्यर्थमिति वाच्यम् ? एवं हल्ग्रहणप्रत्याख्यानस्य गौरवग्रस्तत्वस्यान्योन्याश्रयपरिहारप्रस्तावेऽभिहितत्वात् ।

*आद्यमुच्चारणमिति*। उच्चारणं नाम-बोधानुकूलः शब्दप्रयोगः, तत्र बोधस्य सविषयकत्वनियमाद्विषयतानिरूपको बोधो विवक्षितः । आद्यत्वञ्च विषयतायां विवक्षितम् । तच्चेह स्वनिरूपकबोधान्तरानिरूपितत्वरूपम् । अपूर्वज्ञाननिरूपितत्वरूपमिति यावत् । तदेवाह—

ञिति भावः । तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्त्तकाचार्याणामेव । आद्यत्वञ्चाज्ञातस्वस्वरूपज्ञापकत्वम् । उपदेश्याद्यर्थत्वादिशेरुच्चारणक्रियत्वात् । अत एव "एकाच उपदेशे" ( पा० सू० ७-२-१० ) इति सूत्रे कैयटेनोक्तम्—"इत्सञ्ज्ञाविधावुच्चारणवचन उपादिशिर्गृह्यते" इति, "आदेच" ( पा० सू० ६-१-४५ ) इति सूत्रेऽपि "येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः" इति। तत्र सूत्रे भाष्येऽपि "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति, प्रकृतसूत्रे भाष्येऽपि "प्रत्यक्षमाख्यानमुपदेशः" इत्युक्तम् । तस्य चोक्त एवार्थः ।

परे तु—"उपदेश इति किमर्थम् ? अभ्र आँ अपः । कः पुन-

---

*आद्यत्वञ्चेत्यादिना* । *अत एव*-भावे घञः सत्त्वादेव । *आदेच इति* । सूत्रेऽपीति कैयटेनोक्तमिति शेषः । *तत्र सूत्र इति*। आदेच इत्यर्थः । भाष्यकारेणोक्तमिति शेषः । *प्रकृतसूत्र एवेति* । व्याख्येयत्वेन प्रक्रान्तोपदेशपदलाभावधिभूतोपदेशोऽजित्यत्रेत्यर्थः। *प्रत्यक्षमाख्यानमिति* । स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वस्वप्रकारकप्रत्यक्षानुकूलत्वोभयसम्बन्धेन धर्मविशिष्टव्यापार इत्यर्थः । यथा लोके यत्र कर्णं गृहीत्वा अयं गौरिति बोधयति; तत्र कर्णग्रहणरूपव्यापारे निरुक्तोभयसम्बन्धेन गोत्ववैशिष्ट्यसत्त्वात्तत्रोपदिष्टो मे गौरिति व्यवहारः । यत्र तु सास्नादिमान् गौरित्युच्चार्य गां बोधयति; तत्रोच्चारणव्यापारे गोत्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वेऽपि तत्प्रकारकप्रत्यक्षाननुकूलत्वान्न तत्रोपदेशव्यवहारः किन्तूद्देशस्यैव । तथा शास्त्रेऽपि "गुप्तिज्" इत्यादौ सनाद्युच्चारणे निरुक्तोभयसम्बन्धेन सन्त्ववैशिष्ट्यसत्त्वात्सन उपदेशे व्यवहार उपपन्नः, तदेतदभिसन्धायाह-*तस्य चेति* । *उक्त एवेति* । अज्ञातस्वस्वरूपेत्यनेनोक्त एवेत्यर्थः ।

उपदेश इत्यत्र भावे घञ् तस्य चोत्तरत्रापि सम्बन्ध इति प्राचीनमतमुपपाद्योपदेशपदे करणे घञ् तस्य चोत्तरत्राननुवृत्तिरिति स्वमतं व्यवस्थापयितुमाह-*परे त्विति* । *उपदेश इति किमिति*। पूर्वसूत्र एवोपदेशग्रहणं किमर्थमिति प्रश्नाशयः । अत एव सूत्रद्वयविषय उपदेशपदस्य प्रत्यक्षाख्यानपरत्वे दूषणदानसङ्गतिः । *अभ्र आँ अप इति* । अभ्र-

रुद्देशोपदेशयोर्विशेषः" इति भाष्ये उक्तम् । यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि "लृटः सद्वा" (पा० सू० ३-३-१४) "निष्ठा" ( पा० सू० ३-२-१०२ ) इति विहितानां शतृ-शानच्-क्त-क्तवतुनामवयवस्येत्सञ्ज्ञानापत्तिः । तथा "राजसूयसूर्य" (पा० सू० ३-१-११४) "चित्याग्निचित्ये" (पा०सू० ३-१-१३२ ) इत्यादिनिपातनानुमितक्यबादीनां पादेरित्त्वानापत्तिः । "वदः सुपि" ( पा० सू० ३-१-१०६ ) इत्यत्रोच्चारितस्तु नैतत्सम्बन्धी । अत एव 'तस्यापत्यमत इञ्' इति न्यासेऽन्यशब्दसम्बद्धापत्यार्थस्यानुक्तरूपशेषत्वमुक्तमाकरे । तस्मादत्र

---

आँ अटित इत्यस्योपलक्षणमिदम् । "कः पुनः"इत्यस्य भाष्योक्तस्य प्रश्नस्याशयं वर्णयति-*यदीति*।*प्रत्यक्षेति*।उक्तोऽर्थः । *गुणैरिति* । प्रत्यक्षविषयतावच्छेदकधर्मापुरस्कारेण बोधकमित्यर्थः । *लृटः सद्वेति* । ननु"तौ सत्"इत्यत्र तच्छब्देनेत्संज्ञकावयवकयोरेव शतृशानचोः परामर्शात्सत्संज्ञायां "लृटः सद्वा"इत्यत्र न दोषोऽत आह-*क्तेति*। नन्विहापि न दोषः "क्तक्तवतू निष्ठा"इत्यस्य परिभाषात्वं स्वीकृत्य यत्र निष्ठापदं तत्र क्तक्तवतू उपतिष्ठेते इत्यर्थस्वीकारात्"निष्ठा"इतिसूत्रे तयोः पदयोरुपस्थितेरित्संज्ञायाः सिद्धेरित्यत आह—*तथा राजसूयेति*। *निपातनानुमितेति*। राजसूयशब्दः किञ्चिद्वचनबोधितसाधुताकः, पाणिन्युच्चरितत्वात् । राजसूयशब्दो राजपूर्वकसुधातोः क्यबिति वचनबोधितसाधुताकः, वचनान्तराबोधितसाधुताकत्वे सति वचनबोधितसाधुताकत्वादिति परिशेषतोऽनुमीयमानवचनबोधितक्यबादीनामित्यर्थः । नन्वनुमीयमानवचनघटकस्य क्यपोऽनुच्चारणेऽपि "वदः सुपि"इत्यत्र तदुच्चारणादित्त्वं सुलभमित्यत आह—*नैतत्सम्बन्धीति*। राजोपपदकसुधातूत्तरत्वविशिष्टक्यब्बोधकत्वाभावादिति भावः । *अत एव*-एकसम्बन्धिनोऽपरसम्बन्धित्वाभावादेव । *आकर इति*। तत्र हि—"तस्यापत्यमत इञ्"इत्येक एव योगोऽदन्तेभ्य इञर्थमस्तु; अन्येभ्यस्तु शैषिकोऽणेवास्त्वित्याशङ्काऽवसरेऽन्यरूपार्थस्योक्तत्वाच्छैषिकोऽण् न स्यादित्याशङ्क्यादन्तशब्दवाच्यार्थसम्बन्ध्यपत्यार्थस्योक्तत्वेऽपि तदन्यशब्दवाच्यार्थसम्बन्धपत्यार्थोऽनुक्त एवेत्युक्त्वा शङ्का स्थिरीकृता 'भानव' इत्यत्र वृद्धाच्छस्य बाधनार्थं योगविभाग

सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम् । एवम् 'अभ्र आँ अपः' इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽस्य व्यावृत्तिर्येन भवति स विशेषः क इति प्रश्नः । तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्यैतद्व्यावृत्तये तत्सङ्ग्रहाय च "उपदेशनेऽनुनासिक इति वक्तव्यम् । किं पुनरुपदेशनं ? शास्त्रम्" इत्युक्तं वार्त्तिककृता । तत्र शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः "हलन्त्यम्"( पा० सू० १-३-३ ) सूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहः

---

इतिसमाहितमिति त्वन्यत् । यदि तु "राजसूय"इतिनिपातनात्पकारककारेत्सञ्ज्ञकक्यप्रत्ययविधायकं वाक्यमेवानुमाय नात्र दोष इति विभाव्यते; तदा "कालेभ्यो भववत्" "चरणेभ्यो धर्मवत्"इत्याद्यतिदिष्टप्रत्ययेष्वित्सञ्ज्ञाऽनुपपत्तिर्दोषो बोध्यः । *तस्मादिति* । उपदेशशब्देन प्रत्यक्षाख्यानमात्रग्रहणे "लृटः सद्वा"इत्यादौ दोषादित्यर्थः । *अत्र सूत्रे*-इत्सञ्ज्ञासूत्रे । *तेषाम्*--शतृशानजादीनाम् । *अस्य*--अभ्र आँ इत्यस्य । *तत्संग्रहार्थमेव*--शत्रादिसङ्ग्रहार्थमेव । *लोकव्यवहारेणापीति* । अनुवाकप्रश्ने 'इषेत्वा' इत्याद्यनुवाकाख्यामुद्दिष्टोमेऽनुवाक इति मार्गप्रश्ने, अमुष्मिन्नवकाशे हस्तदक्षिणो ग्राह्य इत्याख्याने उपदिष्टो मे पन्था इति च व्यवहारेणेत्यर्थः । एतेन सर्वेषूक्तेष्वित्त्वस्य सिद्धिरनिष्टेषु तस्याभावसिद्धिरिति विषयविभागलाभः सूचितः । ननु आँ इत्यस्योच्चारणक्रियायां विषयत्वेन करणत्वादत्र आँ इत्यत्रातिव्याप्तितादवस्थ्यमत आह--*प्रयोगशासनकरणभूता इति* । प्रयोगस्य-प्रयुज्यमानस्य, शासने—परिनिष्ठितत्वशासने, करणभूतास्तु परिनिष्ठिता इत्यर्थः । एवञ्च आँ इत्यस्य परिनिष्ठितत्वमेव, न तु तत्करणत्वमिति भावः । एतेन आँ इत्यस्य प्रातिपदिकत्वादादेशत्वाच्च प्राप्तेत्त्वशङ्काऽप्युदासः । धात्वादिपदेन तत्तद्बोधकानां ग्रहणाच्च । "लृटः सद्वा"इत्यादिषु सञ्ज्ञासञ्ज्ञिभावबोधकेऽनुबन्ध उच्चारित एव "राजसूय"इत्यत्र त्वनुबन्धराहित्यविधायकवचनानुमानमेवेति बोध्यं तदेतदभिसन्धायाह-*एवञ्चेति* । एवम्भावसाधनस्योपदेशपदस्योत्तरत्रानुवृत्तिमभ्युपेत्य पूर्वोत्तरसूत्रसाधारण्येनानुपपत्तिमुपपाद्य भावसाधनस्य यथाकथञ्चिदभ्युपगमेऽप्युपदेशपदस्योत्तरत्रानुवृत्तिः सर्वथाऽनुप-

'अभ्र आँ' इत्येतद्व्याख्यानं च सिद्धा । तस्य च वार्तिकस्य बाहुल-कात्करणे घञा प्रत्याख्यानं भगवता कृतम् ।

किञ्च "हलन्त्यम्" ( पा० सू० १-३-३ ) सूत्रे भावघञ-न्तोपदेशपदानुवृत्तौ "भवतष्ठक्छसौ" ( पा० सू० ४-२-११५ ) इत्यादिविहितेष्वित्सञ्ज्ञाऽनापत्तिः । परस्य सत्त्वेन कादेरन्त्यत्वा-भावात् । यदि तूपदेशे प्रत्ययत्वादिविशिष्टान्त्य इत् इत्यर्थ इत्यु-च्यते तदोपदेश इति व्यर्थम् । अन्त्यपदसामर्थ्येनैव तल्लाभात् । अत एवात्र सूत्रे उपदेशग्रहणस्य 'अनुबन्धा अनेकान्ताः' इत्य-स्थितपक्षे 'अभ्र आँ अटितः' इति प्रयोजनमुक्तं, न तूत्तरार्थमि-त्युक्तम् । न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे "हलन्त्य" ( पा० सू० १-३-३ ) सूत्रे "व्यवसितान्त्यमिति वक्तव्यम् । के पुनर्व्यवसिताः ? धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः" इति

---

पक्षेत्याह—*किञ्चेति* । *भावघञन्तेति* । करणसाधनानुवृत्तौ तु विहितस्यापि प्रयोगशासनकरणत्वेन तत्स्यादपीति भावः । *कादेर-न्त्यत्वाभावादिति* । अयम्भावः—उपदेशे सत्यन्त्यमित्यर्थे किन्नि-रूपितान्त्यत्वमिति जिज्ञासायां प्रत्यासत्त्योपादिश्यमानसमुदायनिरूपि-तमन्त्यत्वं ग्राह्यम् ; तच्च उपदिश्यमानसमुदायघटकत्वे सत्युपदिश्य-मानसमुदायघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वरूपं वाच्यम् ; तथा च ठकः ककारस्योपदिश्यमानठक्समुदायघटकत्वेऽपि उपदिश्य-मानछस्घटकछकारप्रागभावाधिकरणक्षणवृत्तित्वेनान्त्यत्वाभाव इति । यदि तु प्रत्यासत्त्या स्वघटकत्व स्वघटकवर्णप्रागभावाधिकरणक्षणावृ-त्तित्व सम्बन्धाभ्यामुपदिश्यमानसमुदायविशिष्टत्वमेवेहान्त्यत्वं परि-ष्क्रियते; तदेदं दूषणाभिधानं चिन्त्यमेव । न चैवं यत्किञ्चित्समुदाया-न्त्यस्येत्त्वाप्राप्त्या तद्वारणाय व्यवसितान्त्यग्रहणादिपरवार्त्तिकादिवि-रोध इति वाच्यम् । करणसाधनवादिमत इवैतन्मतेऽपि समुदायद्वा-राऽवयवस्यापि कथञ्चिदुपदिश्यमानत्वेन प्राप्तेर्वारणाय वार्त्तिका-दिप्रवृत्तेरिति बोध्यम । करणसाधनस्यापि तस्योत्तरत्र नानुवृत्तिरिति सूचयन् भावसाधनपक्षेऽपि नानुवृत्तिर्युक्तेत्यत्र हेतुव्याजेनाह—*अत एवेति* । उत्तरत्रानुवृत्तौ लोपसञ्ज्ञावादेवेति फलाभावादेवेति चार्थः ।

वार्त्तिकानुत्थानमिति वाच्यम् । समुदायद्वाराऽवयवस्याप्युपदेश- करणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । भाष्यकृता चा- न्त्यग्रहणसामर्थ्येन प्रत्याख्यातम् । तत्रानुबन्धविशिष्टानां धातु- त्वादि तु धातुत्वादियोग्यघटितत्वाद् बोध्यम् । निपातानां द्योत- कत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वादिति कैयटः । एवञ्चोदश्विदादिप्राति-

---

*अनुत्थानमेवेति* । भावे घञ् आद्योच्चारणे विद्यमानमन्त्यमित्या- द्यर्थे कस्यान्त्यमिति जिज्ञासायां प्रत्यासत्त्योच्चारणस्यान्त्यमित्यस्या- सम्भवादाश्रयितुमशक्यत्वेन यत्किञ्चित्समुदायान्त्यस्यापि प्राप्नोती- त्युत्थितिस्सम्भवत्येव । शास्त्रपरत्वे तु प्रत्यासत्त्या शास्त्रान्त्यस्यैव स्यादिति भावः । *समुदायद्वाराऽवयवस्येति* । व्यवसितान्त्यमित्यु- क्तौ तु व्यवसितत्वपर्याप्त्यधिकरणसमुदायान्त्यस्य ग्रहणान्न दोष इति भावः । *अन्त्यग्रहणसामर्थ्येनेति* । आदिरव्यावृत्त्यर्थन्तु न तत् "षः प्रत्ययस्य" इत्यादिसामर्थ्येनादिहलां प्रत्ययादिषादिरूपाणामेव तत्कल्पनेनेतरेषान्तद्व्यावृत्तिसौलभ्यादिति भैरवमिश्राः ।

ननु धातुग्रहणं किम् ? लुक्लवितेति, "न धातुलोप" इति सूत्र- भाष्यादनुबन्धलोपोत्तरमेव धातुसंज्ञेत्यस्य लाभाद्धातुत्वादिना परि- च्छिन्नान्त्यस्येत्त्वमनुपपन्नमिति दीक्षितोक्तदूषणमुद्धर्त्तुमाह—*तत्रा- नुबन्धेति* । *धातुत्वादियोग्यघटितत्वादिति* । तद्बोधकत्वादिति तु वक्तुं युक्तम् । अत एव लोपश्चेत्यत्र प्रश्लिष्टशकारस्यादेशबोधक- त्वात् "ङमो ह्रस्वाद्" इत्यत्र ङम् उडिति पृथक्पदद्वयमितिकल्प उट् आगमबोधकत्वाच्च शकारटकारयोरित्त्वसिद्धिः । ननु कतिपयनिपा- तानां द्योतकत्वेऽपि द्योत्यार्थमादायार्थवत्त्वेनात्यन्तानर्थकनिपातानां "कृत्तद्धित" इति सूत्रे चकारेण च प्रातिपदिकसंज्ञायाः प्रवृत्त्या पृथगु- पन्यासो व्यर्थ एवेत्यत आह-*ब्राह्मणवसिष्ठेति* । *परिच्छिन्नत्वात्*- विशिष्टत्वाद्, बद्धत्वादिति यावत्; व्यवसिनोतेर्बन्धनार्थत्वात् । नन्व- स्थितपक्षे प्रयोजनदातृभाष्यं तवैव प्रतिकूलम्; अनुत्तरार्थत्वे हि तत्रैव क्षोदं कृत्वा न कर्त्तव्यमिति ब्रूयात् । मम तूत्तरार्थमावश्यकतया लाघवाभावेन क्षोदो न कृत इति साधकमेवेत्यतोऽननुवृत्तौ साधकान्त रमाह—*एवञ्चेत्यादिनाऽस्यानुत्थानमेवेत्यन्तेन* । एवञ्चेत्यस्य—भा- वसाधनोपदेशपदाननुवृत्तिपूर्वकव्यवसितान्त्यग्रहणे चेत्यर्थः । *उद-

पदिकान्त्यस्यापि लोपः प्राप्नोतीति "प्रातिपदिकानां प्रतिषेधो

श्विदादीति* । आदिना शकादित्यस्य सङ्ग्रहः । *प्रातिपदिकानां प्रतिषेध इति* । नन्वेवं "चोः कुः" "अइउण्" चित्रङ्, नदट्चोरडित्यादावित्संज्ञानापत्तिरिति चेद् ? अत्राचारिणः--एतच्चात्र युक्तम् , यदित्कार्याभावादित्संज्ञा न स्यात् ; यत्रेत्कार्यं भविष्यति तत्रेत्संज्ञा । तद्यथा—"आगस्त्यकौण्डिन्ययोरगास्तकुण्डिनच्" इत्यग्रिमभाष्येण वार्त्तिकारम्भे कुण्डिनच्श्चकारस्येत्संज्ञा न स्यादित्येव परेषामपि दोषाणामिदृष्टप्रायत्वमेवेति समादधुः ।

श्रीधरस्तु--भाष्ये "प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते" इति पठ्यते तस्यार्थः--अकृत्तद्धिते इत्यत्र न श्रवणं यस्य तदश्रवणं; तच्च तत्कृत्तद्धितमिति मध्यमपदलोपी समासः । एवञ्चाश्रूयमाणकृत्तद्धितान्तानां प्रातिपदिकानां प्रतिषेध इति फलितं; तेनोदश्विदादीनामुदकेन श्वयतीतिकर्त्तृक्विबन्तत्वेनाश्रूयमाणकृदन्तत्वेन निषेधः । "चोः कुः" इत्यादीनामकृदन्तत्वेन कुम्भकार इत्यादीनां श्रूयमाणकृदन्तत्वेन च तदभावः सिध्यतीति समाहितवान् । परन्त्वेतदुदश्वित्छकृतोरव्युत्पन्नत्वप्रतिपादनपरकैयटविरुद्धमिति बोध्यम् ।

अन्ये तु—प्रातिपदिकनिष्ठबोध्यताविशिष्टबोधकतावतामन्त्यस्य नेत्वमिति वार्त्तिकार्थः । वैशिष्ट्यञ्च—स्वनिरूपितत्वस्वावच्छेदकरूपावच्छिन्नत्वाभ्याम् । तथा च कु इत्यादीनां ककारादिप्रातिपदिकनिष्ठबोध्यताविशिष्टबोधकत्वाभावादुदश्विदादीनामुदश्विदादिप्रातिपदिकनिष्ठबोध्यताविशिष्टबोधकतावत्त्वाच्च न दोषः । अथवा स्ववृत्तिः प्रातिपदिकवृत्तिर्याऽऽनुपूर्वी तदवच्छिन्नविषयताकबोधप्रयोजकानां प्रतिषेध इति वार्त्तिकार्थः । अकृत्तद्धितानामित्यप्यत्रैव तात्पर्यग्राहकम् । कुम्भकारणित्यादीनामानुपूर्व्यवच्छिन्नबोधकत्वाभावादेव प्रतिषेधाप्राप्तेः । चित्रङादीनां प्रातिपदिकवृत्तिचित्रत्वाद्यवच्छिन्नबोधकत्वेऽपि तस्य धर्मस्य स्वावृत्तित्वेन न दोषः । अथवा स्वविषयकबोधप्रयोजकत्व स्वाघटकाघटितत्व सम्बन्धाभ्यां प्रातिपदिकविशिष्टानां प्रतिषेध इत्येवार्थोऽस्तु । न चोक्तकल्पत्रयेऽपि "उदश्वितोऽन्यतरस्याम्" इत्यादावुदश्विदादेरित्संज्ञालोपाभावाधीनं प्रातिपदिकनिष्ठबोध्यताविशिष्टबोधकत्वादि एतत्प्रयोज्यप्रतिषेधप्रयोज्यश्चेत्संज्ञालोपयोरभाव इत्यन्योन्याश्रय इति वाच्यम् । इत्संज्ञालोपाभावसम्भावनाप्रयोज्या या प्रातिपदिकनिष्ठबोध्यताविशिष्टबोधकतावत्त्वादिसम्भावना तद्विषयाणां प्रतिषे·

वाच्योऽकृत्तद्धितान्तानाम्” इति वार्तिककृतोक्तम् “कुम्भकारः” इत्यादौ अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः पूर्वं प्रातिपदिकत्वे णादिलोपो न स्यादिति अकृदित्यादि । तच्च फलाभावान्नेत्सं-

---

घस्य विवक्षितत्वेनोदश्विदादीनां यदीत्संज्ञालोपौ न स्यातान्तदा प्रातिपदिकनिष्ठबोध्यताविशिष्टबोधकतावत्त्वादि स्यादिति सम्भावनाविषयत्वात् चित्रङ्गादीनां यदीत्संज्ञालोपौ न स्यातां तदा तथाविधबोधकत्ववत्त्वं स्यादिति सम्भावनाया असम्भवेन तद्विषयत्वाभावाच्चादोषात् । उदश्विदादीनामुदश्वित्कतिपयमित्यादौ तादृशानुपूर्वीकाणां प्रयोगस्य चित्रङ्गादीनां ङकारसहितानामप्रयोगस्य च दर्शनेन सम्भावनयोः सम्भवासम्भवसम्भवादित्याहुः ।

*कुम्भकार इत्यादाविति* । ननु पूर्वमित्संज्ञा ततः प्रातिपदिकसंज्ञेति क्रमात्कथमत्र प्रतिषेधप्राप्तिरित्याशङ्क्याह—*अपवादेति* । *परिहारेणेति* । उपजनिष्यमाणन्यायेनेति भावः । ननूपजनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेनैव सङ्कोचस्य सिद्धान्तात्प्रकृते व्यवसितपदार्थे कुम्भकारणित्येतदतिरिक्तत्वेन सङ्कोचेऽप्यणमात्रस्य तदतिरिक्तत्वात्प्रत्ययत्वेन व्यवसितत्वाच्चेत्संज्ञायाः सिद्धाऽकृत्तद्धितेति व्यर्थम् । न च तेन भविष्यदपवादविषयघटकातिरिक्तत्वेनापि सङ्कोचादित्वाप्राप्त्या तच्चरितार्थमिति वाच्यम् । तथा सङ्कोचे प्रमाणाभावात् फलाभावाच्च । खट्वाक्रीतेत्यादौ भविष्यत्क्रीतान्तप्रातिपदिकघटकातिरिक्तत्वेनाजाद्यत इत्यत्र सङ्कोचापत्तौ खट्वशब्दाट्टापोऽनुपपत्तेश्च । व्याघ्रीत्यादौ पूर्वं टाबभावाय “गतिकारकोपपदानाम्” इतिपरिभाषाश्रयणपरभाष्यविरोधापत्तेश्चेति चेद्, न । अत्रैवं निर्वाहेऽपि अशब्दादाचारक्विबन्ताद् घञि वृद्धेः पूर्वं पूर्वविप्रतिषेधेनाल्लोपेन निष्पन्ने अ इत्यत्र अशब्दादत इञि इरित्यत्र च भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचेऽपीत्त्वानापत्तेः । ‘प्रातिपदिकानां प्रतिषेध’ इत्यस्य प्रातिपदिकान्त्यहल् विषयकत्वेन तदतिरिक्तत्वेन “हलन्त्यम्” सूत्रेऽन्त्यपदार्थे सङ्कोचेन णस्य कथञ्चिदपीत्संज्ञाया असिद्धेश्चेति दिक् । *तच्च*—‘प्रातिपदिकानाम्प्रतिषेध’ इति वचनञ्च । *फलाभावादिति* । तित्स्वरस्तु प्रत्ययग्रहणादप्राप्त इति भावः । न चोणादीनामव्युत्पत्तिपक्षे राजन्नित्यादौ नित्स्वरसाधनेन सफलस्येत्त्वस्य वारणाय वार्तिकमावश्यकमिति वाच्यम् ? “ञीद्धीभ्रुहुमव” इतिसूत्रात्प्रत्ययादि-

त्रेत्यादिना भाष्ये प्रत्याख्यातम् । अत्राद्योच्चारणार्थकोपदेशपदानुवृत्तौ त्वस्य वार्त्तिकस्यानुत्थानमेव स्यात् । "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति "आदेच" (पा० सू० ६.१.४५) इतिसूत्रभाष्ये उक्तेः । एतद्भाष्यैकवाक्यतया पस्पशाह्निकान्तस्थे "अग्रहणप्रातिपदिकानामुपदेशः कर्त्तव्यो मञ्चको मञ्जक इति मा भूत्" इति भाष्ये उपदेशशब्दो ग्रहणं कर्त्तव्यमित्यर्थकः । तच्चानुवादरूपमेव सन्देहनिवर्त्तकमिति बोद्धयम् ।

नन्वेवं "तस्मिन्निति निर्दिष्टे" (पा० सू० १-१-६६) इति सूत्रे षष्ठीप्रकल्पकत्वं तस्येति पक्षे "गुप्तिज्किद्भ्यः" (पा० सू० ३-१-५) इत्यादावपि षष्ठीप्रक्लृप्त्यापत्तिः । न च सनः सनेवादेशो भविष्यतीति बाधकाभाव इति वाच्यम् । "उपदेश इत्युच्यमाना इत्सञ्ज्ञा न प्रकल्पेत" इत्युक्तं भाष्ये, तद्विरुद्धेयतात्रोपदेशप-

---

त्यस्य सप्तम्यन्तत्वेन विपरिणामितस्य "लिति" इत्यत्रेव "ञ्नित" इतिसूत्रेऽप्यनुवृत्त्या स्वराप्रवृत्तेस्त्वस्य फलाभावात् । *अत्रेति* । "हलन्त्यम्" इत्यत्रेत्यर्थः । नन्वन्यत्र भाष्ये तेषामुपदेशस्यापि प्रतिपादनात्सकृत्स्थितिः सङ्गतैव, किञ्च भाष्ययोर्मिथो विरोधश्चेत्यत आह--*एतदिति* । "आदेच" इतिसूत्रस्थोद्देशश्चेत्यादिभाष्येत्यर्थः । *अग्रहणेति* । णणादावपठितेत्यर्थः । *उपदेशशब्द इति* । बहुव्रीहिरयम् ; तेनोपदेशः कर्त्तव्य इतिशब्द इत्यर्थः । *तच्च*-ग्रहणञ्च । *अनुवादेति* । प्रक्रियया तेषां सिद्धत्वादिति भावः । किमर्थन्तस्य करणमत आह-*सन्देहेति* वर्णादिसन्देहेत्यर्थः ।

करणसाधनोपदेशपदानुवृत्तौ सर्वथा तदननुवृत्तौ च भाष्यान्तरविरोधमाशङ्कते--*नन्वेवमिति* । *सूत्र इति* । अस्य भाष्य उक्तमित्यनेनान्वयः । *षष्ठीप्रकल्पकत्वं तस्येति* । सप्तमीनिर्देशेन पञ्चमीनिर्देशेन च यत्र कार्यं तत्र सप्तम्यर्थान्वय्यर्थकपदं पञ्चम्यर्थान्वय्यर्थकपदञ्च षष्ठ्यन्तं बोध्यमित्येतदर्थकत्वं सूत्रद्वयस्येतिपक्ष इत्यर्थः । *सनः सनेवेति* । सामर्थ्याद् गुपादिभ्यः परस्य सनोऽनुमानेनानुमीयमानस्य तस्य स्थान आन्तरतम्यात्सनेव भविष्यतीति भावः । *उपदेश इत्युच्यमानेति* । उपदेश इत्यनुवर्त्य विधीयमानेत्यर्थः । *न प्र-

दाननुवृत्तौ; इति चेत्? न, तस्यैकदेश्युक्तित्वेनासाधकत्वात्। तथा हि-तत्र "ङमो ह्रस्वादचि" (पा० सू० ८-३-३२) इत्यादौ यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते तत्र किं पूर्वस्य कार्यमथ परस्येति सन्देहे "परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो बलवान्" इति सिद्धान्तिनोक्तम्। तत एकदेशिना "यथार्थं वा षष्ठीनिर्देशः कर्त्तव्यः" इति समाधानान्तरमुक्तम्। यथाविषयं प्रागुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या इति तदर्थः। तेषु सप्तमीनिर्देशस्य क्वचित् पूर्वत्र क्वचिदुत्तरत्राऽऽवश्यकत्वेनोभयनिर्देशे गौरवेणैकदेश्युक्तिः। ततः परेणैकदेशिना षष्ठीपदानुवृत्त्या "तस्मिन्" (पा० सू० १-१-६६) इत्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य "यथार्थं वा षष्ठी" इत्येकदेश्युक्तिः प्रत्याख्याता। षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रक-

---

कल्पयेतेति*। आन्तरतम्याद्विहितबाधकस्य सतः पाणिन्यनुच्चारित्वादिति भावः। *अननुवृत्ताविति*। भावघञन्तोपदेशपदाननुवृत्तावित्यर्थः। *सन्देह इति*। न च ह्रस्वाद्यव्यवहितोत्तरत्वविशिष्टो यो ङम् तदन्तं यत्पदन्तदव्यवहितोत्तरत्वविशिष्टस्याजादिपदाव्यवहितपूर्वत्वविशिष्टस्योदासीनस्य ङमुडित्यर्थात्सन्देहोऽनुपपन्नः।

किञ्चैवं विरोधाभावात्सिद्धान्त्युक्तापरत्वकृताव्यवस्थाप्यनुपपन्नेति वाच्यम्? एतदुभयपरिभाषोपस्थाप्यांशेषु योंऽशः सिद्धो निष्फलो बाधितो वा तदंशानुपस्थितेः सिद्धान्तितत्वेनोभयनिर्देशस्थल उभाभ्यां षष्ठ्यर्थोपस्थितेः फलाभावेन कतरेणैकेन तदुपस्थितिरित्यत्र गुणप्रधानभावे च विनिगमनाविरहेण तयोरुपपत्तेः। *पञ्चमीनिर्देशो बलवानिति*। तस्मादित्यस्यैवात्रोपस्थापकत्वमिति भावः। *प्रागुक्तेषु*—ङमोह्रस्वादित्यादिषु। *कार्यिणः*—अजादयः। *क्वचित्पूर्वत्रेति*। "घेर्ङिति" इत्यत्र "आने मुक्" इत्यत्र चेत्यर्थः। *क्वचिदुत्तरत्रेति*। "मय उञो वो वा" "त्रेस्त्रय" इत्यादावित्यर्थः। *उभयनिर्देश इति*। "घेर्ङिति" "आण् नद्याः" "ङितः" "आने मुक्" इदाम आनस्य अचो ङमुण्नित्यं मय उञो वो वाचि "आमः सर्वनाम्नः सुट्" "त्रेस्त्रय" आमीत्यादिरूपेणोभयनिर्देश इत्यर्थः। *षष्ठीपदानुवृत्त्येति*। "षष्ठी स्थाने" इतिसूत्रादिति भावः। *षष्ठीप्रकल्पकत्वमिति*। उक्तोऽर्थः।

लपकत्ववारणाय परत्वानवकाशत्वयोः "एकः पूर्वपरयोः" (पा० सू० ६-१-८४) इति पूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकस्य चावश्यकत्वाच्चेयमप्येकदेश्युक्तिः । ततः पूर्वेणैकदेशिना तत्पक्षे "गुप्तिज्" (पा० सू० ३-१-५) इत्यादौ दोषः शङ्कितः । ततः षष्ठीप्रक्लृप्तिवादिनैकदेशिनोक्तम्—"स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत । तत्र खलु कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यति । उपदेश इति हीत्सञ्ज्ञोच्यते" इति । एवञ्च त्वदुक्तिर्व्याहतेत्याशयः । तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्य "अथवा नानुत्पन्ने सति प्रक्लृप्त्या भवितव्यम् । यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यति" इति समाधानान्तरं कृतम् । तत्र "परत्वविशिष्टस्य सन उत्पादने पञ्चम्या उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति तस्याः प्रकल्पकत्वम्" इति तदर्थं कैयट आह । एवञ्च प्रकृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवार्त्तिकस्यैकदेश्युक्तत्द्भाष्यबलेन प्रौढिवादत्वकल्पनं नोचितम्, लक्ष्यासिद्धेश्च । "अइउण्" (मा० सू० १) इत्यादीनामपि क्रमबोधकत्वेनार्थवत्त्वात् प्रातिपदिकत्वम् । चित्रङ्गः

---

ननु प्रक्लृप्तिपक्षे कल्पितस्यादेशस्य चोच्चारणाभावादुच्चारितस्यापूर्वोच्चारणाभावाच्चेत्संज्ञा न स्यादत आह—तदग्र उपदेशपदाननुवृत्तिमभिप्रेत्य—*अथवेति* । *नानुत्पन्न इति* । "गुप्तिज्" इत्येतदतिरिक्तमनुत्पन्ने सति प्रक्लृप्त्या न भवितव्यमित्यर्थः । उद्देश्यासिद्धेः प्रक्लृप्तेर्व्यर्थत्वादिति भावः । नन्वेतद्धलाद्युपादिभ्यः सन्ननुमीयत इत्यत आह—*यदा चोत्पन्नः सन्निति* । *कृतसामर्थ्येति* । उद्देश्यासिद्धये वाक्यान्तरकल्पनापेक्षया क्लृप्तवाक्येन सनः कल्पनायां लाघवात्तेन तत्कल्पने तत्पञ्चम्याः कृतसामर्थ्यत्वेन पञ्चम्यन्तराभावान्न प्रक्लृप्तिरिति भावः । तदाह—*तत्र परत्वविशिष्टस्येत्यारभ्य कैयट आहेत्यन्तेन* । मनोरमोक्तिं खण्डयति—*एवञ्चेति* । उपदेशानुवृत्तिपरभाष्यस्यैकदेश्युक्तित्वे स्पष्टे चेत्यर्थः । *लक्ष्येति* । "लृटः सद्" इत्याद्युक्तानामउणित्यादिवक्ष्यमाणानाञ्चेत्यर्थः । स्वमते अइउणित्यादौ तत्साधयति—*अइ

"चोः कुः" (पा० सू० ८-२-३०) इत्यादेरपि प्रातिपदिकत्वम्। लोपश्चेत्यत्रापि शकारस्य स्वरूपेणार्थवत्त्वात् प्रातिपदिकत्वम्। अनुबन्धानामेकान्तत्वे तु "लोपो यि" (पा० सू० ६-४-११८) इत्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणात् सर्वादेशत्वं बोध्यम्। "एकाच उपदेशे" (पा० सू० ७-२-१०) इत्यत्रत्यः कैयटोऽपि चिन्त्य एव। अन्योऽपि तज्जातीयश्चिन्त्य एव। "एकाच उपदेशे" (पा० सू० ७-२-१०) "आदेच उपदेशे" (पा० सू० ६-१-४५) इत्यादौ तु भावसाधन एवेति सुधियो विभावयन्त्वित्याहुः।

ननु शास्त्रेऽनुनासिकोच्चारणाभावात् तत्त्वज्ञानं दुर्लभमत

---

णित्यादीनामिति*। *लोपश्चेति*। इदमनुबन्धानामनेकान्तत्वपक्षाभिप्रायेण तत्पक्षे शकारस्यादेशबोधकसमीप उच्चारणेनावयवत्वारोपेण लोपस्य शित्त्वाङ्गीकारादिति बोध्यम्। नन्वनुबन्धानामेकान्तत्वे शस्य लोपश्श् इति समुदायस्य चानर्थकत्वात्प्रातिपदिकत्वञ्च स्यादत आह—*एकान्तत्वेति*। एवञ्च तत्र पक्षे स एव नास्तीति भावः। *एकाच इति*। "उपदेशोऽस्त्वत" इत्यादौ त्विति पाठः। आदे च इत्यपपाठः; तत्र तस्य कर्मव्युत्पन्नत्वात्। *आहुरिति*।

अन्ये तु-"लटः सद्वा" इत्यादिषु दोषस्योद्धृतत्वात् "भवतष्ठक्" इत्यत्रापि दोषस्य निवारितत्वात् "चोः कुः" इत्यादौ व्याकरणान्तरीयसंज्ञामाश्रित्य निर्वाहाल्लोपश्चेत्यत्र प्रश्लेषसामर्थ्यादित्वकल्पनाद् इणित्यादावुणित्यादेरुकारादिसाधुत्वविधायकत्वेनोपदेशत्वाच्चित्र-ङित्यादौ ङावित्यं प्रपृथक्पदं कृत्वा ङपदस्य ङिति लक्षणां कृत्वा चित्रेति प्रातिपदिकात् क्यच् सचङिदित्यर्थकरणेनादोषाद्भावसाधनपक्ष एव युक्तः। करणसाधनपक्षे प्रत्युत अइउणित्यत्र विशिष्टस्यार्थवत्त्वाभावेनाप्रातिपदिकत्वाद् लोपश्चेत्यत्र शस्य प्रातिपदिकत्वेऽपि तद्बोधकत्वाभावाच्चेत्त्वानुपपत्तिरवशिष्यत इति मनोरमोक्तं प्रौढिवादत्वं सङ्गच्छतेवेत्याहुः।

*अनुनासिकोच्चारणाभावादिति*। अस्मदादीनान्तज्ज्ञानाभावादित्यर्थः। यथाश्रुतस्तु न युक्तम्। पाणिन्यादीनामननुनासिकस्यैवो-

आह—प्रतिज्ञेति । प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः । पाणिनीया इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा इत्यर्थः । प्रतिज्ञा चायमेवमिति कथनं, वर्णानां तत्त्वज्ञापको व्यवहारश्च । ताभ्यां तज्ज्ञानं सुलभमिति भावः । प्रतिज्ञातारश्च प्रत्यासत्त्यैतच्छास्त्रकर्त्तार एवेति दिक् । निर्देशादिति । तेषां तत्र ग्रहणे हि नासिकादौ यणापत्तिरिति भावः । न चेत्त्वविधानसामर्थ्याद्य यणभावः

---

कारणमित्यत्र नियामकाभावात् । *प्रतिज्ञाविषयेति* । प्रतिज्ञाशब्दे कर्मण्यङिति भावः । *आनुनासिक्यवन्त इति* । "न कर्मधारयात्" इति तु नेहाश्रितम्, असुब्वत इतिभाष्योक्त्या तस्य क्वचिदनादरात् । *पाणिनिप्रभृतीति* । ते च प्रत्यासत्त्यैतच्छास्त्रप्रवर्त्तकास्त्रय एवेति नातिप्रसङ्ग इत्यनुपदमेव वक्ष्यति । *अयमेवमिति कथनमिति* । अदड्डादेशेऽनुनासिकोपधत्वं क्रियत इत्यादिनेत्यर्थः । *व्यवहार इति* । "स्वतन्त्रः कर्ता" इत्यादिनिर्देशरूपो व्यवहारोऽनङाद्यकारेऽनुनासिकत्वज्ञापक इति भावः । *यणापत्तिरिति* । नन्वत्र "स्वादिषु" इतिपदत्वेन "इकोऽसवर्णे" इति प्रकृतिभावात्कथमियमापत्तिः । न च नासिकामनुगत इति विग्रहे समासान्न समास इति निषेधो वाच्यः । समासघटकोत्तरपदादिभूतेऽचि परतो निषेधस्य विधानात् । अत एव परमचक्रि अत्रेत्यत्र सामि अचिचदित्यत्र च प्रकृतिभावः सिद्धः । अन्यथेकारयोस्समासघटकत्वेन निषेधस्य दुर्वारत्वात् । न चान्त्ये णिचि चिकीर्षिते समः पृथग्भावात्तद्विशिष्टस्य धातुत्वाभाववत्समासाभावोऽपि स्यादिति नेदं फलं युक्तमिति वाच्यम् ? पृथग्भावेन विशिष्टस्य धातुत्वाभावेऽपि जातसमाससंज्ञाबाधस्यासम्भवात् । अत एव उत्तरपदशब्दस्य चरमावयवे रूढत्वेऽपि तन्निमित्तकः सामिरादेशोऽपि सिद्ध इति चेत् ? मैवम् । "इको ऽसवर्णे"इत्यत्र पदान्तपदे पदेऽन्तः पदान्त इति सप्तमीसमासाश्रयणेनेह प्रकृतिभावाप्राप्तेरिति केचित् ।

अन्ये तु—इदानीं क्प्रत्यये परे भत्वेन पदत्वबाधेन तदभाव इति समादधाति । नन्वेवं भत्वेन पदत्वबाधे सति नासाक इति दशायामेव भत्वेन "यस्य" इत्याकारलोपो दुर्वारः । न च "के ण" इति ह्रस्वस्तदपवादः निषादकर्षुक इत्यादौ चारितार्थ्यादिति चेत ? अत्र-

सिद्धः । तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव णभावक-रुपकत्वौचित्यात् । साक्षाच्छास्त्रबाधकल्पनापेक्षयाऽस्यार्थस्यौचि-त्यात् । निर्देशादित्यस्य तन्मूलभूतेत्त्वविधानसामर्थ्यादित्यर्थ इति तात्पर्यम् । आदिना "तृषिमृषिकृशेः"(पा०सू० १-२-२५)"एकः पूर्व" (पा० सू० ६-१-८४) इत्यादिसङ्ग्रहः । ननु "प्रत्याहारेऽ-नुबन्धानां कथमज्ग्रहणेषु न" (का० वा०) इति वार्त्तिके प्रत्या-

---

दोषः; ह्रस्वोत्तरमपि न तत्प्रवृत्तिः सकृत्प्रवृत्तत्वात् । ज्ञानमित्यत्रेवा-पवादशास्त्रप्रवृत्त्युत्तरोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्र-वैयर्थ्यसम्भावनायां पुनरुत्सर्गशास्त्रप्रवृत्त्यभावस्य चतुर्थबाधबीजल-क्ष्यत्वाच्च । एतेन वस्तुत आङ्गत्वात् "यस्य" इतिलोपापत्तिर्दुष्ट्या । न चेत्वं तदपवादः; इकारलोपानपवादत्वात् कारिकादौ चारितार्थ्या-च्चेत्याचार्युक्तमपास्तमिति वदन्ति । तन्न। परत्वात्प्राप्तस्य ह्रस्वस्य नि-त्येन लोपेन बाधात् । शब्दान्तरप्राप्त्या लोपोऽनित्य इति चेत् ? एव-मपि ह्रस्वोत्तरमित्वे कृते प्राप्तस्य लोपस्य सकृद्गतिन्यायेन वारणस्यास-म्भवात् । न हि तात्कालिकप्रवृत्तौ स न्यायो बलवान् भवितुमर्हति । चतुर्थबाधबीजेनेत्वोत्तरमपि न लोप इत्यपि वक्तुमनर्हम् । ह्रस्वप्रवृत्त्य-व्यवहितोत्तरप्रसक्तगुणबाधेन निषादकर्षुक इत्यादौ चरितार्थस्य ह्रस्व-स्येत्वोत्तरप्राप्तलोपबाधे सामर्थ्यविरहात् ।

श्रीधरस्तु-"यस्य" इति लोपस्तु न शङ्क्यः, "याचि भम्" इत्यत्र यसाहचर्यादजपि अरुत्वहल्त्वोभयानाक्रान्त एव गृह्यत इति ककारे भत्वाभावात् । नन्वेवमपि "इकोऽसवर्ण" इतिप्रकृतिभावापत्तिरिति चेद् , न । "न समास" इति निषेधादित्युक्तवान् तद्यद्यपि निरुक्तरीत्या "न समास" इत्यस्याप्राप्त्याऽयुक्तमिव भाति, तथाऽपि परमचक्रि अ-त्रेत्याद्यनुरोधेन समासघटकोत्तरपदघटकेऽचीत्यर्थस्यैव स्वीकारेण निषेधप्राप्त्या सम्यगेवेति बोध्यम् ।

भट्टास्तु-'णासृ शब्दे' इत्यस्माण्ण्वुलि तु न शङ्काकलङ्कलेशोऽपी-त्याहुः । युक्ततरञ्चैतत् । अत एव 'घ्राणा नासा च नासिका" इति कोशे नासापर्याये नासिकाशब्दपाठोऽपि सङ्गच्छते । न हि स्वार्थिकप्रत्य-यान्तस्य पर्यायेषु पाठः कोशकृच्छैलीसिद्ध इति दिक् । *सिद्ध इति* । एवञ्च कथन्तस्य निर्देशस्य ज्ञापकत्वमिति भावः । *तस्यापि*-इत्व-विधिसामर्थ्यस्यापि । पूर्वनिर्देशस्य सविवादत्वादाह-*आदिनेति* ।

हारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वित्तामित्यनुपपन्नमत आह-आदिरन्त्येनेतीति । वार्त्तिके तादर्थ्याच्ताच्छब्द्यमिति भावः ।

ऊकालोऽज्झ्रस्वदीर्घप्लुतः (पा० सू० १-२-२७) । कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ताः । ऊ इति एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशो व्याख्यानात् । तेन स्वोच्चारणकाल-

---

*अनुपपन्नमिति* । तत्र तद्ग्रहणसत्त्वेन ब्रह्मणोऽपि तदभावस्य दुष्करत्वादिति भावः । *तादर्थ्याच्ताच्छब्द्यमिति* । अजादिसंज्ञायान्तु प्रत्याहारपदं योगरूढम्; प्रत्याह्रियन्ते संक्षेपेण बोध्यन्ते वर्णा येनेति योगस्य सम्भवात् । वस्तुतस्तु ननु कोसौ प्रत्याहारः यत्रेतां न ग्रहणमत आह-*आदिरन्त्येनेति* । इत्यवतरणं बोध्यम् ।

ननु वर्णसमाम्नायेऽकारस्य प्राथम्यादाकाल इत्युचितमत आह-*कुक्कुटेति* । *एकद्वित्रिमात्रत्वेति* । एकादिनवान्तानां द्वन्द्वासाधुतायाः "सरूप"सूत्रे स्वयमेव वक्ष्यमाणत्वेन एकद्विकरणे हेतुरितिवदयमप्यसाधुरेवेत्याचारिणः । तन्न । एकादिनवान्तानामित्यस्य द्वन्द्वेन सङ्कलितसङ्ख्याबुबोधयिषाविषयत्वात् । एवञ्च पञ्चानां घटानामानयनतात्पर्येण द्वित्रीन् घटानानयेत्यस्यासाधुत्वस्य प्रकृतप्रयोगस्य साधुत्वस्य निर्वाहः ।

भट्टास्तु—एका द्वे तिस्रश्च मात्रा यस्य तस्य भावस्तत्त्वमिति चतुःपदबहुव्रीहिमुपेत्य समादधुः । तदसत् । समानाधिकरणानामेव तद्विधानात् । एकद्वित्रिपदार्थानां परस्परासामानाधिकरण्येऽप्येकत्र द्वयमिति रीत्या मात्रापदार्थेऽभेदेनान्वयस्तु न वाच्यः । परस्परविरुद्धमानाधर्मावच्छिन्नाभेदसम्बन्धावच्छिन्ननानाप्रकारतानिरूपितैकविशेष्यताया दुर्वचत्वात् । *क्रमेण प्रश्लेषनिर्देशो व्याख्यानादिति* । प्रश्लेषे संज्ञात्रयकरणमेव व्याख्यानम् । न ह्येकस्य संज्ञितोऽनेकाः संज्ञा युज्यन्ते, संज्ञाकरणस्य लघ्वर्थत्वात् । प्रश्लेषस्य क्रमिकत्वं तु उकाराणां द्वन्द्वे एकमात्रिकस्य घिसंज्ञकत्वेन पूर्वनिपातस्यावश्यकत्वेन सर्वतः प्राङ्निर्देशात्ततः परं त्रिमात्रिकस्य प्रयोगे "प्लुतप्रगृह्या" इति प्रकृतिभावापत्तौ निर्देशासङ्गतेर्द्विमात्रिकस्य मध्ये निर्देशात् त्रिमात्रिकस्यैवमर्थान्ते निर्देशात्सिद्धम् ।

केचित्तु-प्रश्लेषस्य क्रमिकत्वे निर्देशान्तरं भाष्यं सूत्रवैयर्थ्यं च व्याख्यानमाहुः । तथा हि-न तावद् उ३उऊ इत्येवं प्रश्लेषः त्रिमात्रस्य

सदृशो लक्ष्यते । स कालो यस्येति बहुव्रीहिः । तत्फलितमाह—उश्च ऊश्च उ३श्चेति । ननु उकालो ह्रस्व इति वाक्येऽणत्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां 'प्रदाय' 'प्रलूय' इत्यादौ "ह्रस्वस्य" (पा० सू० ६-१-७१) इति तुक् स्यादिति चेन्? न, ऊ अजित्येवाज्ग्रहणसामर्थ्याद्सदृशोऽजित्यर्थे सादृश्यस्य ख्या·

---

ह्रस्वत्वे ततः परस्यामः क्वचिदप्यसम्भवेन "ह्रस्वनद्याप्" इति सूत्रे ह्रस्वग्रहणानर्थक्यात्, एकमात्रिकस्य ह्रस्वत्वानुपपत्त्या 'स्तोः' इत्यादिनिर्देशासङ्गतेश्च, एकमात्रस्य दीर्घत्वे "अतो दीर्घ" इति दीर्घविधानस्य "आङ्माङोः" इति तुग्विधानस्य वैयर्थ्यापत्तेश्च, द्विमात्रस्य प्लुतत्वे "हैहेप्रयोगे" इत्यादेर्वैयर्थ्यापत्तेश्च। नापि उ३ऊउ इत्येवम्, ह्रस्वग्रहणानर्थक्यात् 'स्तोः' इत्यादिनिर्देशासङ्गतेश्च, एकमात्रस्य प्लुतत्वे "अतो रोः" इति सूत्रवैयर्थ्यापत्तेश्च । न वा ऊउउ३ इत्येवम्, द्विमात्रस्य ह्रस्वत्वे "ङ्यापोः" इत्यादिसूत्रवैयर्थ्यात्, 'स्तोः' इत्याद्यसङ्गतेश्च, त्रिमात्रस्य दीर्घत्वे "ऋति ऋवा" "ऌति ऌवा" इतिवचनप्रत्याख्यानभाष्यासङ्गतेश्च, आरम्भपक्षे वार्त्तिकेनापूर्वयोर्द्विमात्रयोः सूत्रेण त्रिमात्रयोस्तयोर्विधानेन फलभेदात्, एकमात्रस्य प्लुतत्वे "अतो रोः" इत्यस्य वैयर्थ्याच्च। नापि उ उ३ऊ इत्येवम्, "ऋति ऋवा" इतिवचनप्रत्याख्यानभाष्यासङ्गतेः, "हैहेप्रयोगे" इत्यादेर्वैयर्थ्यापत्तेश्चेत्याहुः । *तेन*-ऊपदेन । *स्वोच्चारणेति* । स्वम् ऊपदबोध्याः । *सदृश इति* । सादृश्यस्य भेदाघटितत्वादुकारस्यापि संज्ञा बोध्या । *स काल इति* । जातावेकवचनम् । *इति वाक्य इति* । विधेयभेदेन वाक्यभेदादिति भावः । *अण्त्वादिति । एतेन द्वितीयवाक्यादौ शङ्कानिरासः ।

केचित्तु-एतच्छङ्काकरणमयुक्तम्; अण्ग्रहणस्य व्यक्तिपक्ष एव सत्त्वेन तत्र पक्ष इत्संज्ञकवर्णसमभिव्याहारादिचिह्नाभावेन कुक्कुटरुते प्रसिद्धिप्रदर्शनेनास्यानुकरणत्वेन पाक्षिकस्य प्रकृतिवदतिदेशस्येष्टानुरोधेनाकरणेन चास्योकारस्याण्त्वाभावादित्याहुः ।

*संज्ञायामिति*। अत्र पक्षे शब्दसाम्येन यथासंख्यं बोध्यम्, "स्यतासी ऌलुटोः" इतिवत् । न च स्वविषये दीर्घप्लुतसंज्ञाभ्यां बाधः; अनाकाङ्क्षारीयत्वात् । *व्याख्यानादिति* । उकारसादृश्यस्याच्त्वेन ग्रहण उकारग्रहणवैयर्थ्येन उत्वेन ग्रहणेऽज्ग्रहणवैयर्थ्येनान्येनासम्भवेन चार्थासिद्धादित्यर्थः । नन्वेकद्वित्रिमात्रावैशिष्ट्येनापि सादृश्यस्य ग्रह·

ख्यानात् कालकृतस्यैव ग्रहणमिति सिद्धे अधिकं कालग्रहणमुच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञा, न तु तेन गृहीतसम्बन्धिकालसदृशकालस्यापीत्यर्थेनादोषात् । तदुक्तं भाष्ये "यावत्तपरकरणं तावदत्र कालग्रहणम्" इति । न चाजिति वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात् "तितउच्छत्रम्" इत्यत्र "दीर्घात्" (पा०सू०

---

णसम्भवः । एवञ्च विनिगमनाविरहात्तेन सादृश्यग्रहणे ऌकारस्यैचश्च ग्रहणञ्च स्यादिति कालग्रहणं सफलमिति चेद्, न । "प्रणवष्टेः" इत्यादिज्ञापकेनेदृशसादृश्यस्याग्रहणात् । *अधिकं कालग्रहणमिति* । व्यर्थं तत्सामर्थ्यादिति शेषः । ननु भाष्याविचारितप्रयोजनकानां सूत्राक्षराणां पारायणादावदृष्टार्थत्वमेव, न तु तत्र फलकल्पनं युक्तम् । अत एव "तदधीते तद्वेद" इति सूत्रे "द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्येति भाष्य उक्तमत आह-*तदुक्तं भाष्य इति* । यावदत्र तपरकरणमिति यावत्फलकंतपरकरणं तपरसूत्रेण भवति तावत्फलकं कालग्रहणमित्यर्थः । *वर्णग्रहणे जातिग्रहणस्येति* । यादृशवर्णत्वव्याप्यधर्मावच्छिन्नस्य ग्रहणम्; तादृशधर्मावच्छिन्नमात्रारब्धसमुदायगतरूपे तादृशवर्णत्वव्याप्यधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वं भवतीत्यर्थकात् "निपात एकाच्" इत्यत्रैकग्रहणज्ञापिताद् "वर्णग्रहणे जातिग्रहणम्" इति न्यायादिति भावः । *तितउच्छत्रमिति* । अउ इत्येतद्गताद्वित्वेऽच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वारोपेण दीर्घसंज्ञायां विकल्पतुगापत्तिरिति भावः ।

ननु वर्णान्तरोच्चारणेऽर्द्धमात्राकालव्यवायस्य नान्तरीयकतया अउ इत्यस्य न द्विमात्रत्वम्, न वाऽज्ग्रहणफलत्वेन वक्ष्यमाणप्रतक्ष्येत्यत्र क्षित्यस्यैकमात्रत्वमिति चेद्, न । वर्णोच्चारणाधिकरणकालस्य द्विमात्रारूपत्वेनैकमात्रारूपत्वेन चापत्तिसम्भवात् । नन्वेवमपि ऊकारोच्चारणाधिकरणकालसादृश्यं काले छिद्रानन्तरितत्वेन विवक्ष्यते, तच्च वर्णोच्चारणानधिकरणान्तरितत्वरूपम्, तथा च अउ इत्यस्य क्षित्यस्य च दीर्घह्रस्वसंज्ञयोरप्राप्त्याऽऽपत्तिप्रदानमयुक्तमेवेति चेद्, न । तथा सादृश्यग्रहणे "ऋति ऋवा" इतिवचनप्रत्याख्यानपरभाष्यविरोधात् । तत्र हि वार्त्तिकविहितऋकारऌकारयोरेफलकारघटितत्वेन छिद्रान्तरितकालिकत्वेन दीर्घसंज्ञाया अप्राप्त्या सूत्रेण तथाभूतयोरसिद्धा-

६-१-७५), "पदान्ताद्वा" (पा० सू० ६-१-७६) इति तुगापत्तिरिति वाच्यम्। ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात्, अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तनित्यतुक एव प्राप्तेश्च। अज्ग्रहणं 'प्रतक्ष्य' इत्यादौ "ह्रस्वस्य" (पा० सू० ६-१-७१) इति तुग्व्यावृत्त्यर्थम्।

उच्चैरु (पा० सू० १-२-२९)। नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः श्रुतिप्रकर्षस्याव्यवस्थितत्वाच्च, किन्तु स्थानकृतम्। उच्चैरित्यधिकरणशक्तिप्रधानम्। अधिकरणत्वञ्चोच्चारणं प्रति, तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह–ताल्वादीति। इदं प्राचामनुरोधेन। वर्णसमाम्नायेऽकारस्य प्राथम्यात् कण्ठादीति वक्तुमुचितम्। एवमन्यत्रापि बोद्ध्यम्। प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्त इति भावः। अजि-

---

परत्वा प्रत्याख्यानासङ्गतेः। *पदान्ताद्वेति तुगापत्तिरिति*। न चैतदभावे नित्यविधिर्दुर्वारः; सकृत्प्रवृत्तत्वात्। "पुनःप्रसङ्गविज्ञानम्" त्वीदृशे विषये नेति "अचश्च" इत्यत्र कैयटे व्यक्तम्। *अन्तरङ्गत्वेनेति*। इदं समाधानं हेयम्। कार्यिणो निमित्ततयाऽनाश्रयणेन तदीयनिमित्तसमुदायमध्ये तन्निमित्तस्याप्रविष्टत्वेन परिभाषाया अप्रवृत्तेः; "नाजानन्तर्ये" इतिनिषेधाच्च। प्राप्तविभाषाया निषेधमुखेन प्रवृत्त्याऽन्तरङ्गादपि निषेधस्य बलीयस्त्वेन चिन्त्यमिदमिति केचित्; तन्न। "अनन्तरस्य" इति न्यायेन "दीर्घात्" इत्यनेन प्राप्तस्यैवानेन निषेधात्।

*उच्चैः*। उपांशुप्रयोगे सूक्ष्मोच्चारितप्रयोगे अव्याप्तेः; उदात्तसंज्ञाया अव्याप्तेः। *अव्यवस्थितत्वादिति*। नीचैरपि रोगार्त्तस्योच्चैः उच्चैरपि बधिरस्य नीचैरिति भावः। *अधिकरणशक्तिप्रधानमिति* ऊर्द्ध्वाधिकरणशक्तिप्रधानमित्यर्थः। *उच्चारणं प्रतीति*। तथा च—ताल्वादिसभागाधिकरणकोर्द्ध्वदेशावच्छिन्नोच्चारणकर्मीभूतोऽजुदात्तसंज्ञ इत्यर्थो बोध्यः। *इदम्*—ताल्वादीतिकथनम्। *अन्यत्रापीति*। "तुल्यास्य" सूत्रवृत्तावपीत्यर्थः। *सः*—ऊर्द्ध्वभागप्रतिहतवायुव्यञ्जितोऽच्। *इति भाव इति*। तत्तत्स्थानेषु भागत्रयं प्रकल्प्य ऊर्द्ध्वभागे वाय्वाघातेन व्यञ्जितोऽजुदात्तः; अधोभागे वाय्वाघातेन व्यञ्जितोऽजनुदात्तः। ऊर्द्ध्वभाग आहत्याधोभागे वाय्वाघातेन व्यञ्जितोऽच्स्वरितः। भागत्रये वाय्वाघातेन व्यञ्जितोऽच्प्र-

ति । "ऊकाल" (पा० सू० १-२-२७) इत्यतस्तदनुवर्त्तते । उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्धत्वेन हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोध्यम् । आये इति । यच्छब्दः "फिषोऽन्त" (फि० सू० १) इत्यन्तोदात्तः, जस्सुप्त्वादनुदात्तः, "एकादेश उदात्तेन" (पा० सू० ८-२-५) इत्येकार उदात्तः।

अर्वाङिति । अभिमुखवाच्यव्युत्पन्नं "फिषोऽन्त" (फि० सू० १) इत्यन्तोदात्तम् । आद्यस्य शेषनिघातेनानुदात्तत्वम् । अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम् ।

एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह— वर्णधर्माविति । बाहुलकादधिकरणे घञ् । अर्श आद्यजित्यन्ये ।

---

च्य इति तात्पर्यम् । *लोकेति* । अत्रैव भाष्ये स्पष्टमिदम् । तेषामत्त्वमभ्युपेत्यापि क्षत्यभावमाह— *हल्स्वरेति* । तथा च हल उदात्तादिसंज्ञायां किं बाधकम् । न तावदचः स्थान उदात्तस्य हल आपत्तिः; आन्तरतम्यादच एवोदात्तस्य सिद्धेः । नापि हलः स्थाने तस्यापत्तिः; हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानवद्भावादित्यर्थः । *इदम्*— अजित्यर्थकथनम् । *आय इतीति* । आकारो निपातत्वादाद्युदात्तः । *कृदुत्तरेति* । "गतिकारकोपपदात्" इत्यनेन । *अन्तोदात्तत्वमिति* । शेषं प्राग्वदिति भावः । *विरोधादिति* । तथा च पूर्वत्र धर्मिपरयोरपीह लक्षणया धर्मपरतेति भावः । धर्मद्वयसमावेशस्तु यथा नानाजातीयरसवदवयवारब्धेऽवयविनि स्वाश्रयसमवेतत्वसम्बन्धेनावयवगतस्य रसस्यैव भानं; न तु चित्ररसाङ्गीकारस्तथाऽत्रापि सम्भवत्येव । अत एव "तस्यादित" इति सूत्रमपि स्वरसतः सङ्गच्छते । न चानुवर्त्तमानयोरुदात्तानुदात्तपदयोर्लक्षणया धर्मपरयोर्द्वन्द्वे ततो भावप्रत्यये वर्णधर्मवृत्तिधर्मबोधापत्तिरिति वाच्यम् ? इतरेतरयोगद्वन्द्वेऽपि समूहस्यैव प्राधान्यात्तं प्रति समूहिनो विशेषणत्वेन द्वन्द्वोत्तरत्वप्रत्ययेन धर्मस्यैव बोधात् । "करणाधिकरणयोः" इति ल्युटा बाधादाह— *बाहुलकादिति* । एतस्यागतिकगतित्वादाह— *अर्श आद्यजिति* । भावघञन्तादित्यादिः । अस्यापि बाहुलकादविशिष्टत्वं सूचयन्नाह— *अन्य इति* ।

अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढ इति भाष्यतो विशिष्टरूढेरेव लाभा-

इयं त्रिसूत्री स्पष्टार्था। लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात्।

ह्रस्वग्रहणमिति। ह्रस्वपदघटितग्रहणमित्यर्थः। अतन्त्रमिति। स्वशास्त्रसङ्केतितरूपेणाबोधकमित्यर्थः, किन्त्वर्धमात्रारूपार्थबोधकमिति भावः। एवञ्च दीर्घादिष्वप्यर्धमात्रैवोदात्ता। इत आरभ्य नवसूत्र्या "अ अ" (पा० सू० ८-४-६८) इत्यतः प्रागुत्कर्षेणास्य त्रिपाद्यामपि प्रवृत्तिः। सर्वञ्चेदं भाष्ये स्पष्टम्। 'अर्धमुदात्तम्' इति वृत्तिस्तु सत्या सत्यभामेतिवद् व्याख्येया। उत्तरार्धमित्यस्य चार्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थः। वेदे तु यथाप्रयोगं प्रातिशाख्यादस्माच्च व्यवस्था। तस्य चेति। अनुदात्तस्येत्यर्थः। उदात्तेति। उदात्तस्वरितयोः परत्वे सतीत्यर्थः। तयोः परत्वञ्चोपस्थितानुदात्तापेक्षयैव। अन्यत्र—उदात्तस्वरितयोः परत्वाभावे। प्रातिशाख्ये इति। लोके त्वनुदात्त एवेति

---

दाह—*ह्रस्वपदेति*। मूले बहुव्रीहिरिति भावः। रूढेः फलमाह—*एवञ्चेति*। लोक इति शेषः। अत एव वक्ष्यति—*वेदे त्विति*। रूढेर्ग्रहणादेव च सूत्रे तस्य ग्रहणं सफलम्। तद्धि दीर्घादिस्वरितसंग्रहार्थम्। तथाऽर्थे तु स न स्यात्। न च षष्ठीकल्पनार्थन्तत्; सम्बन्धिशब्दत्वादेव सिद्धेः। न चासिद्धत्वादप्राप्तत्रिपादीस्थस्वरितसंग्रहाय तत्; भाष्यरीत्या तदभावात्। तदेतद् ध्वनयन्नाह—*इत इति*। अत्र च ज्ञापकम् "देवब्रह्मणोरनुदात्त" इति सूत्रम्। अन्यथा देवाः ब्रह्माणः इत्यत्रामन्त्रितादूयुदात्तत्वे शेषनिघातसिद्धानुदात्तयोरकारयोः स्थाने जातयोरुदात्तादनुदात्तस्य स्वरित इति विहितयोः स्वरितयोः "देवब्रह्मणोः" इत्यनुदात्ते कर्त्तव्येऽसिद्धत्वात्तदसङ्गतिः स्पष्टैव। अत एव "स्वरितात्संहितायाम्" इत्येकश्रुतिं प्रति स्वरितस्य सिद्धत्वात् "इमं मे गङ्गे" इति मन्त्रे मे शब्दमाश्रित्य सर्वेषां निघाते इममित्युदात्तात्परस्यानुदात्तमेशब्दाकारस्य "उदात्तादनुदात्तस्य" इतिस्वरित्वे तस्यैकश्रुतिः सिद्धा। वेदे-'ये रा' इत्यत्रैकारस्यार्धोदात्तस्य दर्शनादाह--*वेदे त्विति*। *प्रातिशाख्यादिति*। "एकाक्षरसमावेश" इत्यादित इत्यर्थः। तैत्तिरीये लोकवत्सत्त्वादाह-*अस्माच्चेति*। एवञ्चेदं सूत्रं ऋग्वेदान्यपरमिति सिद्धम्। *इत्यर्थ

भावः । ह्रस्वस्वरितमुदाहरति—क्वेति । "किमोऽत्" (पा० सू० ५-३-१२) इत्यत्, "क्वाति" (पा० सू० ७-२-१०५) इति क्वादेशे "तित्स्वरितम्" (पा० सू० ६-१-१८५) इति स्वरितः । दीर्घं तमुदाहरति-रथानामिति । येऽरा इति । "स्वरितो वाऽनुदात्ते पदादौ" (पा० सू० ८-२-६) इत्येकारः स्वरितः । "नोदात्तस्वरितोदयम्" (पा० सू० ८-४-६७) इति निषेधस्तु "उदात्तादनुदात्तस्य स्वरितः" (पा० सू० ८-४-६६) इत्यस्यैव 'अनन्तरस्य' इति न्यायात् । स्वरितपरमुदाहरति—शतचक्रमिति । अहेरित्यर्थेऽह्यः । वृत्रस्येत्यर्थः । "छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः" इति वचनाद् गुणाभावः । "उदात्तस्वरितयोः" (पा० सू० ८-२-३) इति स्वरितः । "उदात्तयणो हल्पूर्वात्" (पा० सू० -६-१-१७४) इति तु न छान्दसत्वात् । यच्छब्दः "फिषः' (फि० सू० १) इत्यन्तोदात्तः, तदेकादेशश्च वा स्वरितः । स इति । उदात्तादिह्रस्वादिसञ्ज्ञक इत्यर्थः ।

मुख (पा० सू० १-१-८) उच्यतेऽसौ वचनः । बाहुलकात्

---

इति* । वेदभाष्ये तथैव व्याख्यातत्वादिति भावः। एतेन 'अह व्यासौ' इत्यस्माद्दहलोपर्यति छान्दसत्वाद् वृद्ध्यभावे "सुपां सुलुक्" इति षष्ठ्याः स्थाने सुरादेश इति साधनमपास्तम्; अर्थासङ्गतेः । *गुणाभाव इति* । अहि शब्दे "घेर्ङिति" इति सूत्रप्राप्तगुणाभाव इत्यर्थः । *उदात्तस्वरितयोरिति स्वरित इति* । "अहिरिव भोगैः" इत्यत्राद्युदात्तत्वेन पठ्यमानतया ग्रामादित्वाद् वृषादित्वाद्वाऽऽद्युदात्तत्वं भवति । ततः शेषनिघातेनेकारस्यानुदात्तत्वे "उदात्तादनुदात्तस्य" इति स्वरितत्वे तस्य यणि स्वरितस्थानिकयणः परत्वाद्विभक्त्यकारस्य स्वरित इति भावः । *वा स्वरित इति* । "उदात्तस्वरितयोः" इति स्वरितोत्तरं शेषाऽनुदात्तेन सहैकादेशस्य "स्वरितो वाऽनुदात्ते पदादौ" इत्यनेनेति भावः ।

यद्यपि भाष्ये करणे ल्युटि सिद्धेन वचनपदेन बहुव्रीहिरित्युक्तम्; तथाऽपि बहुव्रीहितस्तत्पुरुषस्य लघुत्वाभिप्रायेणाह—*उच्यत इति* ।

कर्मणि ल्युट् । मुखसहिता नासिकेति विग्रहः । तथा वचन इति "साधनं कृता" (भा०३०) इति समासः, तदाह-मुखसहितेत्या-दि । मुखेति किम् यमानुस्वाराणामेव प्रसज्येत । एवञ्च "आ-ङोऽनुनासिकः" ( पा० सू० ६-१-१२६ ) इत्यत्रानुस्वारः स्यात् । नासिकेति किम् ? 'शक्ता' इत्यादौ "अनुदात्तोपदेश" (पा०सू०६-४-३७) इत्यादिना कलोपो मा भूत् । अष्टादशेति । यद्यपीदं न व्यक्तिपक्षे व्यक्तीनामानन्त्यात् , तथाऽप्यष्टादशधर्मव-

---

समाहारद्वन्द्वे मुखनासिकमिति स्यादत आह--*मुखसहितेति* । *तयेति* । अधिकरणस्यापि स्थाल्या पच्यत इतिवत्करणत्वं बोध्यम् । *साधनं कृतेति समास इति* । यद्यप्यत्र "कर्तृकरण" इति सूत्रेणापि समासः सिद्धस्तथाऽपि पादहारक इत्यत्रापादानपञ्चम्यन्तस्य कर्मण्वु-लन्तेन हारकशब्देन गलचोपक इत्यत्राधिकरणसप्तम्यन्तस्य कर्मण्वु-लन्तेन चोपकशब्देन च समासार्थमावश्यकमिदं "कृत्यैरधिकार्थव-चन" इतिसूत्रस्थं वार्त्तिकमिति सूचयितुमेवमुक्तम् । *आङोऽनुना-सिक इत्यत्रेति* । इत्येतत्साध्य अभ्र आँ अप इति लक्ष्य इत्यर्थः । यमा-नां विशिष्य प्रातिशाख्ये विधानादाह--*अनुस्वार इति* । भाष्यो-क्तप्रासादवासिन्यायमबुद्ध्वाऽयं ग्रन्थ इति बोध्यम् । "अनुनासिकस्य क्वि" इत्यादावनुवादेऽप्रतिपत्तिरेव स्यादिति भावः । *शक्तेत्यादाविति* । पाठः शक्तेत्यादाविति पाठस्तु क्तान्तसम्बोधनपरतया क्तान्तप्रकृतिक-टाबन्तपरतया वा नेयः । यद्यपीदं न व्यक्तिपक्ष इति चिन्त्यमिदम् । जातिपक्षेऽपि तज्जातिपुरस्कारेण यावद् व्यक्तीनामेकज्ञानविषयत्वेऽपि आनन्त्यस्य दुर्वारत्वेन तत्पक्षेऽपि धर्म एवाष्टादशविधत्वस्य वक्तव्य-त्वात् । एवं तथाऽपीत्यादिग्रन्थोऽपि व्यक्तिपक्षतात्पर्येणासङ्गत एव । तत्र पक्षे तद्व्यक्तित्वस्यैव शक्यतावच्छेदकतया तद्व्याप्यत्वस्य चाष्टाद-शसु धर्मेष्वभावेन स्वव्याप्यमिथोविरुद्धयावद्धर्मबोधनात्मकविभागास-म्भवात् । न च नानातद्व्यक्तित्वान्यतमव्याप्यत्वेन तदुपपत्तिः । व्यक्तीना-मानन्त्येन यावत्तद्व्यक्तित्वग्रहासम्भवात् । तस्माद् व्यक्तिपक्ष इत्युप-लक्षणं जातिपक्षस्यापि, तथा च व्यक्तीनामानन्त्याद् व्यक्तिपक्षे जाति-पक्षे वाऽष्टादशविधत्वं न सम्भवतीति यद्यपीत्यादेरर्थः । तथाऽ-पीत्यादेर्जातिपक्षाभिप्रायेणात्वादिजात्याक्रान्तानामष्टादशविधधर्मवत्त्वं-मित्याशयः ।

एवमकारजातीयादेरित्यर्थः । ह्रस्वत्वादीनां तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदं बोद्धयम् । एवमग्रेऽपि । लृवर्णस्येति । विवृतस्येत्यर्थः । तेन "लृति लृ वा" (का० वा०) इति विधेयस्येषत्स्पृष्टस्य दीर्घत्वेऽपि न क्षतिः । दीर्घाभावादिति । अत एव "तुल्यास्य" (पा०सू०१-१-९) सूत्रे भाष्ये "लृति सवर्णे" (का० वा०) इत्यनेन पक्षे द्विलकारकाभावे "अकः सवर्णे" (पा०सू०६-१-१०१) इति दीर्घत्वे 'होतॄकारः' इति ॠकारघटितप्रयोगः सङ्गच्छते । ह्रस्वाभावादिति । इदम् "एओङ्" (मा० सू०३) इत्यादौ भाष्ये स्पष्टम् । गानरोदनादौ चतुर्मात्राऽर्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः । अत एवानुदात्ततरस्यानुक्तिः । एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणम् । तस्या लोकेऽपि सत्त्वात् ।

√तुल्यास्य (पा० सू० १-१-९) । तुल्यावास्यप्रयत्नौ

---

ननु धर्माणामप्युदात्तत्वादिभेदेनाष्टाविधत्वादष्टादशेत्यनुपपन्नमत आह—*तत्तत्समानाधिकरणेति* । उदात्तत्वसमानाधिकरणानुनासिकत्वसमानाधिकरणह्रस्वत्ववमित्यादिक्रमेणाष्टादशविधत्वमिति भावः । *एवमग्रेऽपीति* । लृवर्णस्य द्वादशेत्यादावित्यर्थः । *लोके प्रयोगेष्विति* । लोके ये प्रयोगाः प्रयुज्यमानाः वाक्यानि तेष्वित्यर्थः । *अत एव*—शास्त्रीयकार्येऽनुपयोगाल्लोकेऽप्रयोगाच्च हेतोरेव । *एकश्रुतेरिति* । इयमेव प्रचयशब्देनापि व्यवह्रियते । त्रैस्वर्याभावरूपत्वे दोषाद्वाह-*स्वरान्तरत्व इति* । *इदमिति* । उदात्तादिभेदेन त्रैधेत्याद्विकथनमित्यर्थः । चतुर्मात्रादिभ्योऽत्र वैषम्यमाह-*तस्यालोकेऽपीति* । "प्लुतावैच" इदुतावित्येतद्विषयः ।

*"तुल्यास्य"* । *तुल्याविति* । नन्वत्र "नपुंसकमनपुंसकेन" इति सूत्रेण नपुंसकस्यैव शेषात्तुल्यं तुल्ये इति वा वक्तुं युक्तम् । न च "अद्वन्द्वतत्पुरुषविशेषणानाम्" इतिनिषेधः; तस्य वचनस्य "त्यदादीनि सर्वैः" इतिसूत्रभाष्ये "त्यदादितः शेष" इतिवार्तिकनिषेधायैवारम्भात् । भाष्यस्योपलक्षणत्वं स्वीकृत्यैतद्वचनस्य यावदेकशेषविधिशेषत्वे तु

यस्येत्यर्थः । आस्य भवमास्यं व्याख्यानात् । तच्च वर्णोपयोगित्वा-त्स्थानमेव, प्रयत्नस्य पृथगुपादानात् प्रकृष्टो यत्न आभ्यन्तरः ।

"नपुंसकमनपुंसकेन" इतिवद् "विरूपाणामपि" इत्यस्य "पुमान् स्त्रिया" इत्यस्य च निषेधापत्तौ तुल्यावित्यस्य 'भगवतोर्भवानीविश्वनाथयोः' इत्यस्य च प्रयोगस्यानुपपत्तिः; "अद्वन्द्वतत्पुरुष" इतिवचनमुपादाय न्यायसिद्धमिदम्, "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इतिसमासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्यापि सर्वनाम्नस्तल्लिङ्गस्य सिद्धत्वादिति कैयटोक्त्या एकशेषनिषेधकत्वस्य वक्तुमशक्यत्वाच्चेति चेद्? न। प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधेच्छारूपशब्दतन्त्रविषय एवैकशेषप्रवृत्त्या, प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधेच्छायामर्थतन्त्रस्यैव स्वीकारेण प्रकृते तुल्यत्वनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबुबोधयिषायाः सत्त्वेनार्थतन्त्रेणैकेनैव तुल्यशब्देनोभयोर्बोधसम्भवात् । "प्रत्यर्थं शब्दनिवेश" इति भाष्येऽर्थपदेन प्रवृत्तिनिमित्तस्यैव ग्रहणेन प्रवृत्तिनिमित्तभेद एवानेकशब्दनिवेशबोधनात् ।

न चैवमपि 'न ब्राह्मणं हन्यात्' इत्याद्यर्थतन्त्रएकवचनस्यैव दर्शनादिहापि तदेव स्यादिति वाच्यम् । जातिगतैकत्वविवक्षायां तत्रैकवचनप्रयोगेऽपि व्यक्तिगतद्वित्वविवक्षयेह द्विवचने बाधकाभावात् । *व्याख्यानादिति* । आस्यग्रहणकरणरूपादिति भावः । अन्यथा, सर्वेषामेव वर्णानां जनकस्य मुखस्य तुल्यत्वेन तदुपादानवैयर्थ्यात् । *तच्च*-आस्यभवञ्च । *स्थानमेवेति* । अथ प्रयत्नस्याप्यास्येऽवच्छेदकत्वसम्बन्धेन भवत्वाद्वर्णोपयोगित्वाच्च ग्रहणसम्भवात्प्रयत्नग्रहणं किमर्थमिति चेद् ?

उच्यते—समवायेनाकाश उत्पद्यमानश्शब्दोऽवच्छेदकतया कण्ठादावुत्पद्यते । एवञ्चावच्छेदकतासम्बन्धावच्छिन्नवर्णनिष्ठजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजनकतावच्छेदकधर्मवत आस्यपदेन ग्रहणमित्यत्रैव प्रयत्नग्रहणस्य ज्ञापकत्वात् । प्रयत्नेऽवच्छेदकत्वसम्बन्धावच्छिन्नजनकतायास्सत्त्वेऽपि तादात्म्यसम्बन्धावच्छिन्नायास्तस्या अभावात् । न च प्रयत्नग्रहणसामर्थ्याद्वायुसंयोगादीनामेवास्यभवानां ग्रहणमित्येव कुतो न ज्ञाप्यत इति वाच्यम् ? "तुल्यास्य" इतिनिर्देशस्यैवानुपपत्तेः। न च वक्ष्यमाणदिशा यावदास्यभवतुल्यत्वग्रहणात्तुदात्तादिनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजन-

तस्य वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात् । जनकत्वं षष्ठ्यर्थः । तत्तत्कार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य

---

कतावच्छेदकतायाः कण्ठोदूर्ध्वभागत्वादौ सत्त्वेन तद्वतां तुल्यत्व एव संज्ञापत्तावुदात्तानुदात्तयोरकारयोः परस्परं सवर्णसंज्ञाऽनुपपत्तिरिति वाच्यम् ? प्रयत्नसाहचर्येणास्यमवस्यापि वर्णविभाजकधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत एव ग्रहणात् । उदात्तत्वादयश्च न वर्णविभाजकाः । 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णा' इति शिक्षोक्तेरत्वादिभिरेव तद्विभागलाभात् । ते च न कण्ठोदूर्ध्वभागत्वाद्यवच्छिन्नजनकतानिरूपि .जन्यतावच्छेदका इति नानुपपत्तिः । तदेतत्सकलमभिप्रेत्य वक्ष्यति– *शिक्षायां कण्ठादीनामित्यादि* । तथाभूतस्यास्य भवशब्देन ग्रहणे प्रमाणमाह—*प्रयत्नस्येति* । *वर्णोत्पत्तीति* । वर्णोत्पत्तिप्राक्कालिकत्वस्यात्मसमवेतयत्नविशेषेऽपि सत्त्वात्तद्व्यावृत्तय आह—*अव्यवहितेति* । *प्राग्भावित्वेति* । बाह्या हि तदुत्तरभाविनः ।

ननु यत्नप्रयत्नशब्दयोः प्रयत्नमात्रे रूढत्वेन पर्यायतया लाघवाद्यत्नेति वाच्ये प्रोपादानमधिकसङ्ग्रहार्थमित्यस्य "पर्यायशब्दानाम्" इति न्यायविरोधाद्वक्तुमशक्यत्वेन 'योगाद्रूढिः' इतिन्यायेन यत्नसामान्यग्रहणमेव स्यादत आह–*जनकेति* । तथा च प्रयत्ने जनकत्वग्रहे यत्नसामान्यस्य जन्यप्राग्वर्त्तित्वरूपजनकत्वबाधाद्योगार्थ एव 'भूमौ पङ्कजमुत्पन्नम्' इत्यत्रेवाश्रीयते । जनकत्वमिति कथनं कार्यशब्दवादाभिप्रायेण । नित्यवादे त्वभिव्यञ्जकत्वमेव तदर्थः । तथा च—यन्निरूपितजनकतावन्तौ तुल्यास्यप्रयत्नाविति विग्रहस्य तुल्यास्यप्रयत्ननिष्ठजनकतानिरूपितजन्यतावदिति समासस्य चार्थः । ननु प्रयत्नस्य स्वतो भेदेन तत्त्वेऽपि दैत्यारिरित्यादौ कार्यव्यक्तिभेदेऽपि स्थानस्यैकत्वात्तुल्यत्वस्य भेदघटितत्वात्सावर्ण्याप्रसक्तौ दीर्घो दुर्लभ इत्यत आह–*तत्तदिति* । *भेदघटितेति* । लोके भेदे सत्येव सादृश्यस्य व्यवहारादिति भावः ।

वस्तुतस्तु सादृश्यस्य भेदघटितत्वेऽपि नारोपस्योपयोगः, भावानां प्रतिक्षणपरिणामित्वेन स्थानानां परस्परभेदसम्भवात् । प्रतियोगिभेदविशिष्टसाधारणधर्मरूपं सादृश्यमिति वदतां नैयायिकानामये दोषमुद्धृत्य सादृश्यमतिरिक्तमखण्डोपाधिः । अत एव केन धर्मेण सादृश्यम्; आह्लादकत्वेन मुखे चन्द्रसादृश्यमित्यादिव्यवहारसङ्गतिरित्यभिसन्धानः स्वमतेनाह–*वस्तुत इति* । *भाष्यसम्मतामिति* । "नञिव यु·

निर्वाहः । वस्तुतः सादृश्यं न भेदघटितमिति भाष्यसम्मतमिति न कश्चिद्दोषः । स्पष्टञ्चेदं भाष्ये । तदाह—ताल्वादीति । शिक्षाया कण्ठादीनां कण्ठत्वादिनैव स्थानतोक्त्या तद्रूपेणैवाऽऽस्यशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोद्ध्यम् । यस्यैतद्द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थः । "यजुष्येकेषाम्" (पा०सू०८-३-१०४) इति निर्देशाद् यावदास्यभव-

---

कम्" इत्यत्रेवशब्दोपादानेनैतद्गम्यत इत्यन्यत्र निरूपितम् । *कण्ठत्वादिनैव स्थानत्वोक्त्येति* । कण्ठ्यावहाविचुयशा" इत्यादिनेति भावः । *यस्यैतद्द्वयमिति* । यज्जनकं स्थानप्रयत्नोभयमित्यर्थः । मूलोक्तयेनेत्यस्य यथाश्रुतार्थकत्वमयुक्तम् । स्थानप्रयत्नयोर्येनेत्येतद्वोध्येन वर्णेन सह तुल्यत्वासम्भवादतो लक्षणया व्याचष्टे—*यदीयेनेति* । यज्जनकेनेत्यर्थः । *एतद्द्वयेन*—स्थानप्रयत्नोभयेन । *यावदास्यभवतुल्यत्वमिति* । तच्च—स्वजनकस्थानजन्यत्व, स्वाजनकस्थानाजन्यत्वोभयसम्बन्धेन तत्तद्वर्णविशिष्टत्वम् । एतच्च परस्परं विवक्षितम् । तेन इकारवैशिष्ट्यस्यैकारेऽभावेऽपि एकारवैशिष्ट्यस्येकारे सत्त्वेनेकारैकारयोर्मिथः सावर्ण्यं कुतो नेति शङ्काया नावसरः । परस्परत्वञ्च सम्बन्धाविशिष्टसम्बन्धसम्बन्धित्वम् । वैशिष्ट्यञ्च स्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्व स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्व स्ववृत्तिसम्बन्धतावच्छेदकरूपवत्त्व स्वभिन्नत्वैतच्चतुष्टयसम्बन्धेन । सम्बन्धिता च—प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन; चैत्रमैत्रौ परस्परन्नमत इत्यादौ चैत्रानुयोगिकमैत्रप्रतियोगिकस्वकर्तृकनमनकर्मत्वसम्बन्धवैशिष्ट्यस्य मैत्रानुयोगिकचैत्रप्रतियोगिकस्वकर्तृकनमनकर्मत्वे सङ्घटनात्तत्सम्बन्धित्वस्य प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन चैत्रमैत्रयोः सत्त्वात्समन्वयः । एवमुक्तोभयसम्बन्धेन स्वविशिष्टत्वरूपककारप्रतियोगिकखकारानुयोगिकसम्बन्धाविशिष्टत्वस्योक्तस्वविशिष्टत्वरूपखकारप्रतियोगिकककारानुयोगिकसम्बन्धे सत्त्वात्तत्सम्बन्धित्वस्य ककारखकारयोः सत्त्वेन सावर्ण्यं सिद्ध्यति । इकारप्रतियोगिकस्वविशिष्टत्ववैशिष्ट्यस्यैकारप्रतियोगिकस्वविशिष्टत्वे एकारप्रतियोगिकस्वविशिष्टत्ववैशिष्ट्यस्येकारप्रतियोगिकस्वविशिष्टत्वे वा प्रथमसम्बन्धद्वयाविरहप्रयुक्तविरहेण न तयोः सञ्ज्ञाप्रसक्तिः । यत्र चैत्रो मैत्रं मैत्रश्च विष्णुमित्रं नमति, तत्र मैत्रप्रतियोगिकवि-

ष्णुमित्रानुयोगिकस्वकर्तृकनमनकर्मत्ववैशिष्ट्यस्य चैत्रप्रतियोगिकमैत्रानुयोगिकस्वकर्तृकनमनकर्मत्वे वारणाय प्रथमः सम्बन्धः । एवं तत्रैव चैत्रप्रतियोगिकमैत्रानुयोगिकसम्बन्धवैशिष्ट्यस्य मैत्रप्रतियोगिकविष्णुमित्रानुयोगिकसम्बन्धे वारणाय द्वितीयः सम्बन्धः । एवं यत्र चैत्रे मैत्रं नमति, मैत्रश्च चैत्रं ताडयति, तत्र चैत्रप्रतियोगिकस्वकर्तृकनमनकर्मत्ववैशिष्ट्यस्य मैत्रप्रतियोगिकस्वकर्तृकताडनकर्मत्वे वारणाय तृतीयः सम्बन्धः । एवं यत्र चैत्रः स्वमेव नमति, तत्र स्वकर्तृकनमनकर्मत्ववैशिष्ट्यस्य स्वस्मिन् वारणाय तुरीयः सम्बन्धः । अन्यथा एष्वपि परस्परपदप्रयोगापत्तेरिति बोध्यम् ।

अथवा स्वजनकयावत्स्थानजन्यत्व स्वाजनकस्थानाजन्यत्वोभयसम्बन्धेन स्वविशिष्टत्वमेव यावदास्यभवतुल्यत्वमस्तु । स्वजनकयावत्स्थानजन्यत्वञ्च–स्वनिरूपितजनकतावच्छेदकस्थानत्वव्याप्यधर्मसमानाधिकरणाभावप्रतियोगित्वाभाववज्जनकतानिरूपितजन्यतावत्त्वम् । तथा च एकारनिरूपितजनकतावच्छेदकस्थानत्वव्याप्यकण्ठत्वसमानाधिकरणाभावप्रतियोगित्वस्यैवेकारनिरूपितजनकतायां सत्त्वेनैकारवैशिष्ट्यस्येकारे इकाराजनककण्ठस्थानजन्यत्वेनेकारवैशिष्ट्यस्यैकारे चासत्त्वेन न दोषः । नन्वेवमेकारयोरपि सावर्ण्यमनुपपन्नम् । एकारनिरूपितकण्ठनिष्ठजनकतातस्तालुनिष्ठजनकताया अवच्छेदकाश्रययोर्भेदेन भेदादेकारनिरूपितजनकतावच्छेदककण्ठत्वसमानाधिकरणाभावप्रतियोगित्वस्य तालुवृत्त्येकारजनकत्वे सत्त्वादितिचेद्, न । स्वनिरूपितजनकत्वसमानाधिकरणाभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववत्त्वस्यैव स्वजनकयावत्स्थानजन्यत्वपदार्थत्वेनैकारनिरूपितजनकत्वाधिकरणे कण्ठे तालुनि वा एकारनिरूपितजनकता नास्तीत्याकारकाभावस्य वक्तुमशक्यत्वेनैकारे निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववत्त्वस्य सत्त्वेनादोषात् । इकारे तु एकारनिरूपितजनकत्वाधिकरणकण्ठवृत्तीकारनिरूपितजनकत्वाभावीयप्रतियोगितानिरूपितत्वसम्बन्धावच्छिन्नावच्छेकताया एव सत्त्वेन नातिव्याप्तिः ।

अथवा स्वनिष्ठव्याप्यतानिरूपितव्यापकतावत्त्व, स्वनिष्ठव्यापकतानिरूपितव्याप्यतावत्त्वसम्बन्धाभ्यां स्वविशिष्टत्वमेव स्वयावदास्यभवतुल्यत्वम् । व्याप्यताव्यापकता च सम्बन्धद्वयेऽवच्छेदकत्वसम्बन्धावच्छिन्ना ग्राह्या । अत्र प्रथमसम्बन्धदानादेकारवैशिष्ट्यमिकारे न, अवच्छेदकतासम्बन्धेनैकाराधिकरणवृत्त्यवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वस्यैवेकारे सत्त्वात् । द्वितीयसम्बन्धदा-

नादिकारवैशिष्ट्यन्नैकारे, अवच्छेदकतासम्बन्धेनेकाराभाववति कण्ठेऽवच्छेदकतासम्बन्धेनैकारस्य वृत्तित्वात् ।

अथवा स्वाजनकजन्यत्व स्वविशिष्टधर्मविशिष्टत्वान्यतरसम्बन्धेन स्वविशिष्टो यस्तद्भिन्नत्वमेव स्वयावदास्यभवतुल्यत्वम् । धर्मे वैशिष्ट्यञ्च–स्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वेन धर्मस्य वैशिष्ट्यञ्च—स्वावच्छिन्नजनकतानिरूपितजन्यत्वाभाववत्त्वेन । तथा चेकारविशिष्टभिन्नत्वं नैकारे, स्वाजनककण्ठजन्यत्वेन स्वविशिष्टत्वस्यैव सत्त्वात् । नाप्येकारविशिष्टभिन्नत्वमिकारे, स्वनिरूपितजनकतावच्छेदककण्ठत्वधर्मावच्छिन्नजनकतानिरूपितजन्यत्वाभाववत्त्वेन स्वविशिष्टत्वसत्त्वात् ।

अथवा स्वाजनकस्थानाजन्यत्वजनकत्वसम्बन्धेन स्वविशिष्टो यस्तद्वृत्त्यभावप्रतियोगित्वोभयसम्बन्धेन स्वविशिष्टत्वमेव यावदास्यभवतुल्यत्वम् । अभावश्चावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । तथा च—प्रथमसम्बन्धविरहान्नेकारवैशिष्ट्यमेकारे, न वा एकारवैशिष्ट्यमिकारे, जनकत्वसम्बन्धेनैकारविशिष्टकण्ठस्थानवृत्त्यवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वस्यैव सत्त्वेन द्वितीयसम्बन्धेन वैशिष्ट्यविरहात् ॥

अथवा स्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नजन्यतानिरूपितताद्रात्म्यसम्बन्धावच्छिन्नजनकताविशिष्टजनकतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नजन्यतावत्त्वसम्बन्धेन स्वविशिष्टत्वमेव तत्त्वम् । जनकतावैशिष्ट्यञ्च—स्वव्याप्यत्व स्वव्यापकत्वसम्बन्धाभ्याम् । तथा चेकारनिष्ठजन्यतानिरूपितजनकत्वाभाववति कण्ठे एकारनिरूपितजनकतासत्त्वेन नेकारवैशिष्ट्यमेकारे, नाप्येकारवैशिष्ट्यमिकारे, एकारनिरूपितजनकत्वाधिकरणकण्ठवृत्त्यभावप्रतियोगित्वस्यैवेकारनिरूपितजनकतायां सत्त्वात् ।

केचित्तु—अत्र कल्पे जनकतावैशिष्ट्यं जनकतायां स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वसम्बन्धेन दत्वा इकारैकारयोः सावर्ण्यं वारयन्ति; तदसत् । एकारनिरूपितजनकतयोर्भेदेनेकारनिरूपिततालुनिष्ठजनकताप्रातियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्यैकारनिरूपितजनकतायां सत्त्वेनापत्त्यनुद्धारात् । एषु च पञ्चसु कल्पेषु परस्परं यावदास्यभवतुल्यत्वाविवक्षणेऽपि न कश्चिद्दोष इत्यलम् ।

अथ सर्वत्र निषेधशास्त्रेण विधिशास्त्रे सङ्कोचस्यौत्सर्गिकत्वेन प्रकृते "नाज्झलौ" इति सूत्रेण कथं सङ्कोचः । न च तुल्यास्यपदार्थ आ-

ज्भिन्नत्वेन हल्भिन्नत्वेन च सङ्कोचः सम्भवति, विधिवैयर्थ्यात् । न च आकाराजेतदन्यतरतुल्यास्यप्रयत्नमाकाराजेतदन्यतरत्सवर्णसंज्ञं भवति, हला तुल्यास्यप्रयत्नं हल्सवर्णसंज्ञकं भवतीति वाक्यभेदमेव "नाज्झलौ" इति सूत्रं बोधयतीति वाच्यम् ? एवं सति हलिभराकारस्य संज्ञाऽप्राप्ते राकारप्रश्लेषवैयर्थ्यापत्तेः । ईकारशकारयोः संज्ञाऽप्राप्तेरचि किं ? कुमारी शेते, इतिग्रन्थासङ्गतेश्चेति चेद् ? अत्रोच्यते--आकाराजेतदन्यतरभिन्नेन तुल्यास्यप्रयत्नमाकाराजेतदन्यतरभिन्नं सवर्णसंज्ञं भवति, हल्भिन्नेन तुल्यास्यप्रयत्नं हलिभन्नं सवर्णसंज्ञं भवतीति वाक्यभेदमेव ग्राहयति निषेधसूत्रम् । तथा च दीर्घाकारहलोः सावर्ण्यवारणाय प्रश्लेषस्य ईकारशकारयोः प्रथमवाक्येन सावर्ण्यप्राप्तेरुक्तकौमुदीग्रन्थस्य च सङ्गतिः ।

अथवा--यावदास्यभवतुल्यत्वे स्ववृत्त्यात्वाभावविशिष्टात्वाभावविशिष्टाच्त्वाभावहल्त्वाभावैतदन्यतरवत्त्वस्यापि सम्बन्धत्वेन विवक्षायामेव तात्पर्यग्राहकं निषेधसूत्रम् । तथा चाकारहकारादीनान्न सावर्ण्यम् । अकारवृत्तिर्योऽन्यतरो हल्त्वाभावस्तद्वत्ताया हकारेऽभावात् । दीर्घप्लुताकारयोर्हकारेण सावर्ण्याभावायाच्त्वाभाव आत्वाभावविशिष्टात्वाभावविशिष्टत्वं विशेषणम् । ईवृत्त्यात्वाभावविशिष्टात्वाभावविशिष्टाच्त्वाभावस्य शकारे शकारवृत्तितदभावस्येकारे च सत्वात्सावर्ण्यप्राप्त्या कौमुदीग्रन्थसङ्गतिः ।

अथवा--यावदास्य भवतुल्यत्वे स्ववृत्तिद्वित्ववत्त्वमपि सम्बन्धो देयः । तत्र स्ववृत्तिद्वित्वे आकाराजेतदन्यरहलेतदुभयारब्धसमुदायावृत्तित्वेन सङ्कोच एव तात्पर्यं ग्राहयति निषेधसूत्रम् । तथा चाज्झलोर्न तत्प्रसक्तिः । अकारादिवृत्तियादाज्झलुभयारब्धसमुदायावृत्तिद्वित्वं तद्वत्ताया हकारादावभावाद् द्वित्वे स्ववृत्तितद्वित्ववत्ता चापर्याप्त्या विवक्षितेति नासम्भवः । 'परस्परं यावदास्यभवतुल्यत्वं विवक्षितम्' इति प्रथमकल्पवादिनस्तु--परस्परपदार्थघटकप्रथमसम्बन्धद्वयमुखप्रविष्टायामनुयोगितायां प्रतियोगितायाञ्च आज्निष्ठप्रतियोगितानिरूपितहल्निष्ठानुयोगिताभिन्नत्वेन हल्निष्ठानुयोगितानिरूपिताऽऽज्निष्ठप्रतियोगिताभिन्नत्वेन च सङ्कोचमेव "नाज्झलौ" इत्येतत्करोति । तथा च--हल्प्रतियोगिकाजनुयोगिकस्य निरुक्तोभयसम्बन्धेन स्वविशिष्टत्वरूपसम्बन्धस्य वैशिष्ट्यस्य स्वभिन्नत्वस्ववृत्तिसम्बन्धतावच्छेदकरूपवत्त्वहल्निष्ठानुयोगितानिरूपिताऽऽज्निष्ठप्रतियोगिताभिन्नस्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्वसम्बन्धैर्हलनुयोगिकाच्प्र-

तुल्यत्व माह्यम् । अत एवैचोः सावर्ण्यमाशङ्क्य "नैतौ तुल्यस्थानौ" इति भाष्ये समाहितम् । अत एव वलयोर्न सावर्ण्यम् । तेन "तद्वानासाम्" (पा०सू०४-१-१२६) इत्यादौ "तोर्लि" (पा०सू०८-४-६०) इति न । अत एव प्रयत्नशब्देन यत्नमात्रग्रहणमिति पक्षे यत्किञ्चित्प्रयत्नभेदे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसञ्ज्ञेत्यर्थौ "झरोझरि सवर्णे" (पा०सू०८-४-६५) इति सव-

---

तियोगिके निरुक्तोभयसम्बन्धेन स्वविशिष्टत्वरूपे सम्बन्धे सत्त्वेऽपि हल्निष्ठप्रतियोगितानिरूपिताज्निष्ठानुयोगिताभिन्नस्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्वसम्बन्धन तदभावाद् हलनुयोगिकाच्प्रतियोगिकस्वविशिष्टत्वसम्बन्धवैशिष्ट्यस्याजनुयोगिकहल्प्रतियोगिके स्वविशिष्टत्वसम्बन्धे हल्निष्ठानुयोगितानिरूपिताज्निष्ठप्रतियोगिताभिन्नस्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्वसम्बन्धेनाभावाच्च नाज्झलोः सावर्ण्यप्रसक्तिः; न वा 'कुमारी शेते' इतिग्रन्थासङ्गतिः ।

यत्तु—परस्परपदार्थकुक्षिप्रविष्टप्रथमसम्बन्धद्वयस्थाने स्वीयाज्निष्ठप्रतियोगितासमानाधिकरणाज्निष्ठानुयोगिताकत्वस्वीयाज्निष्ठानुयोगितासमानाधिकरणाज्निष्ठप्रतियोगिताकत्वसम्बन्धाभ्यां स्वविशिष्टत्वं स्वीयहल्निष्ठप्रतियोगितासमानाधिकरणहल्निष्ठानुयोगिताकत्वस्वीयहल्निष्ठानुयोगितासमानाधिकरणहल्निष्ठप्रतियोगिताकत्वसम्बन्धाभ्यां स्वविशिष्टत्वैतदन्यतरवत्त्वरूपमेकं सम्बन्धं दातुमेव "नाज्झलौ" इत्यस्य प्रवृत्तिरिति; तदसत् । ईकारशकारयोः सावर्ण्यानुपपत्त्या कौमुदीग्रन्थासङ्गतेरिति वदन्ति; तदेतच्छास्त्रमात्रोपयोगिवाक्यभेदादिकल्पनया निर्वाहे सकललोकतन्त्रप्रसिद्धपरस्परत्वापेक्षयाऽतिरिक्तसङ्कुचितपरस्परत्वकल्पनाप्रयुक्तं मन्दमिति प्रतिभातीति दिक् ।

*निर्देशादिति* । इदञ्च विवृतत्वव्याख्यानं संज्ञाऽनुपयुक्तत्वमिति रीत्योक्तम् । 'सप्त प्रयत्ना' इतिभाष्यरीत्याऽप्याह—*अत एवैचोरिति* । ऐचोरित्यर्थः । *नैतौ तुल्यस्थानाविति* । तात्वोष्ठकृतभेदादिति तद्भावः । *तद्वानासामिति* । अनेन यावत्स्थानसाम्य एव सवर्णसंज्ञेत्यत्रायं निर्देश एव ज्ञापक इति सूचितं भवति । *यत्किञ्चित्प्रयत्नैक्यमादायेति* । तत्फलं हि—कखादीनां सावर्ण्यसिद्धिः । *सवर्णग्रहणेनेति* । तद्धि "हलो यमाम्" इतिवद्यथासङ्ख्यव्यावृत्त्या शिण्ढीत्यत्र ढकारे परे डकारलोपार्थम् । यावत्प्रयत्नतौल्ये सवर्णसं-

र्णग्रहणेन ज्ञापकेन साधितो भाष्ये । तेन स्थानांशे यावत्स्थानसाम्ये इत्येव स्वारसिकोऽर्थ इति प्रतीयते । न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थं प्रयत्नस्याप्यास्यभवत्वादिति वाच्यम् । ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः । तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्यत्वात् । तस्मादास्यभवानां कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात् । आस्येति किम् ? तर्प्ता । "झरो झरि" (पा०सू०८–४–६५) इति लोपो मा भूत् । प्रयत्नेति किम् ? वाक्श्चोतति । प्रेति किम् । शचयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात् ।

---

ज्ञाविधाने तु डढयोस्तदप्राप्त्या यथासङ्ख्यतुल्यफलकत्वेन तद्व्यर्थमिति तदाशयः । *भाष्ये इति* । "सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम्" इति "तुल्यास्य" सूत्रस्थभाष्यप्रतीकमुपादाय प्रदीप इत्यर्थः । भाष्ये तु भेदाधिष्ठाना हि सवर्णसंज्ञेत्यादिना तुल्यास्यसूत्रस्यैव ज्ञापकत्वमुक्तम् । *तेनेति* । प्रयत्नांशे यत्किञ्चित्प्रयत्नभेदेऽपि ज्ञापकात्सावर्ण्यप्रतिपादनेनेत्यर्थः । *तयोर्जनकानामास्यभवानामिति* । ननु मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्त्विति वक्ष्यमाणग्रन्थेनास्य विरोधः; तत्र ह्रस्वत्वादिजनकयत्नस्यास्यबाह्यत्वोक्तेरिति चेद्, न । तज्जनकयत्नानां बाह्यत्वेऽपि तत्तत्स्थानस्थितवायुसंयोगानामास्यान्तर्गतत्वाविरोधात् । *तर्प्तेति* । न च "ऋलृवर्णयोः" इति सामर्थ्येन भिन्नस्थानयोर्न स्यादिति वाच्यम् ? अचोश्चेद् ऋलृवर्णयोरेवेति नियमस्यापि सम्भवात् । *लोपो मा भूदिति* । इदमग्रेऽपि बोध्यम् । *वाक्श्चोततीति* । न च 'झयो झयि' इतिन्यासेन न दोष इति वाच्यम् ? निस्व निंस इत्यादौ लोपानापत्तेः । ननु 'झरो झरि सवर्गे' इतिन्यासेन सिद्धे किमास्यप्रयत्नयोर्ग्रहणेनेति चेद्, न । आस्यग्रहणाभावे वलयोरपि सावर्ण्यापत्तौ तद्वद्लतीत्यादौ "तोर्लि" इति परसवर्णापत्तेः । प्रयत्नग्रहणाभावे ञययोरपि सावर्ण्यापत्तौ सँय्यन्तेत्यत्र कदाचिद् "वा पदान्तस्य" इत्यनेन ञकारस्यापि परसवर्णस्यापत्तेश्च । न ह्यत्र 'परसवर्गे' इति न्यासो युक्तः; यकारादेरवर्गीयत्वात् । *तत्रैव*—वाक्श्चोततीत्यत्रैव । दोष इति पाठः । तस्य च मा भूदिति शेषः । दोषादिति पाठे प्रेति किमित्यस्याग्रे इति तु नेति शेषो बोध्यः ।

कस्य किं स्थानमित्याशङ्कायामाह—अकुहेति । यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथाऽपि चकाराद्युच्चारणे तात्वादिव्यापारोऽपि, तथाऽकारादीनामुच्चारणे तु नेति भावः । कचयोस्तु न सावर्ण्यम् । यावत्स्थानसाम्याभावात्, भिन्नस्थानकथनवैयर्थ्यापत्तेश्च । अत्र कण्ठपदं कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरम् । तेन "कण्ठ्यावहौ" (पा०शि०१७) 'जिह्वामूले

---

*कण्ठव्यापार आवश्यक इति* । वस्तुतस्त्विदमयुक्तम्; मूर्ध्न्यभिहतो वायुः प्रत्यावृत्तः सन् यं देशमभिहत्य यं वर्णमभिव्यञ्जयति स एव तत्स्थानम्; न तु तत्तद्वर्णाभिव्यञ्जकव्यापारवान्। वर्णजनकवायुसंयोगाधारे वर्णाधारत्वारोपेण स्थानत्वव्यवहारोपपादकवक्ष्यमाणग्रन्थविरोधात् । उरोमूर्द्धादिव्यापाराणां यावद्वर्णाभिव्यक्तावावश्यकत्वेन तत्तत्स्थानकत्वस्याप्यापत्तेश्च । तथा च शङ्कासमाधानयोर्निर्दलत्वात् ।

नन्वेवं कचयोः सावर्ण्याभावेऽपि 'सप्त प्रयत्ना' इति भाष्यमते इकारैकारयोः सावर्ण्याभावेऽपि च 'पञ्च प्रयत्ना' इतिमते इकारैकारयोः सावर्ण्यं दुर्वारमित्यतः समाधानान्तरमाह--*भिन्नस्थानेति* । शिक्षायाम्--"एऐतुकण्ठतालव्या ओऔकण्ठोष्ठजौ स्मृतौ" इत्यत्र कण्ठात्पृथक्तालव्वोष्ठस्थानकथनवैयर्थ्येन यत्स्थानत्वेन यदुपात्तं तदेव तत्सावर्ण्यप्रयोजकमिति कल्पनमिति भावः। "यजुष्येकेषाम्" इति निर्देशोऽपीहलिङ्गम्।

यत्तु उद्योतकृतः-आस्यग्रहणवैयर्थ्यापत्तेश्चेत्यपि हेत्वन्तरमाहुः; तदसत् । यावदास्यभवतुल्यत्वग्रहणद्वारा कचयोः सावर्ण्याभावाय सार्थक्यात् । ननु 'जिह्वामूले तु कुःप्रोक्त' इति शिक्षोक्तेरिह कुग्रहणमयुक्तम् । न च वृत्त्यादिप्रामाण्येन शिक्षास्थजिह्वामूलपदस्य लक्षणया स्वसमीपदेशकण्ठबोधकत्वम्; अत एवातिप्रसङ्गवारणाय तस्य रूढिकल्पनाऽपि नेतिलाघवमिति वाच्यम् ?मानाभावात् । न चात्र कण्ठपदमेव लक्षणया जिह्वामूलपरमित्यपि युक्तम्। अहयोः कण्ठ्यत्वस्य तत्रोक्तत्वेन तद्विरोधापत्तेरत आह-*अत्रेति* । लक्षणेति भावः । *उभयपरमिति*। अन्यतरपरमिति वक्तुं युक्तम्। अहयोः कण्ठस्थानत्वस्य कोर्जिह्वामूलस्थानत्वस्य च विवक्षितत्वात् । अन्यथा अकुहानां सर्वेषामुभयस्थानत्वापत्तेरिति बोध्यम् । नन्वेवं कोरपि जिह्वामूलभवत्वेन जिह्वामू-

तु कुः प्रोक्तः" (पा०शि० १८) इति शिक्षया न विरोधः । जिह्वामूलीयपदस्य च वर्णविशेषे रूढिरिति न व्यवहारातिप्रसङ्गः । अत एवायोगवाहेषु जिह्वामूलीयगणनं भाष्ये । तत्तद्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तद्वर्णानां तत्तत्स्थानत्वनिर्णयेऽपि 'अकुह' इत्यादिकथनं साधारणधर्मबोधनायानुवादकं, न त्वेतदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम् । विसर्जनीयपदेनात्र साहचर्यादकाराश्रयस्य ग्रहणम् । अत एव

"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" । (२२)

इति शिक्षया न विरोधः । दन्ता इति । दन्तसंयुक्तदेशा इत्यर्थः । अतो भग्नदन्तस्याप्युच्चारणं भवत्येव । उश्च पश्च ध्मायेते अनेन, तत्र भव इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह—उपूपेति । रूढत्वाच्च न व्यवहारातिप्रसङ्गः । नासिका चेति । चेन स्वस्ववर्गानुकूलं तालवादि गृह्यते । अत एवैषां प्रातिशाख्ये नासिकायां भव इत्यर्थकनासिक्यशब्देन व्यवहारः । यत्तु—

---

लीयपदस्य व्यवहारातिप्रसङ्ग इत्यत आह-*जिह्वामूलीयपदस्येति* । चस्त्वर्थे । *वर्णविशेषे*-कखाभ्यां पूर्ववर्त्तिन्यर्द्धविसर्गसदृशे । *रूढिरिति* । तथा च योगाद्रूढेर्बलीयस्त्वेन नातिप्रसङ्ग इति भावः । *अत एव*-रूढेरेव । यदि कुरपि जिह्वामूलीयः स्यात्तदा तस्याक्षरसमाम्नाये पाठसत्त्वाज्जिह्वामूलीयानान्तेषु गणनं विरुद्धं स्यादिति भावः । ननु "अकुह" इत्यादिना पूर्वं कादीनां कण्ठादिस्थानत्वे बोधिते पश्चात्तुल्यस्थानत्वज्ञानात्सवर्णपरशक्तिग्रहे कुशब्दस्य सवर्णग्राहकत्वम् "अणुदित्" सूत्रेण बोधनीयमिति कथमत्र कुशब्देन पञ्चानामुपस्थितिरित्यत आह-*तत्तदिति* । *साहचर्यात्*-उपक्रान्ताकारसमभिव्याहारात् ।

*दन्तसंयुक्तेति* । अत एव "दन्त्योष्ठ्योव" इत्यत्र "शरीरावयवाच्च" इति यत् । अन्यथा दन्तानां 'चर्मणि द्वीपिनं हन्ति' इत्यत्र वक्ष्यमाणरीत्या शरीरावयवत्वाभावात्तदनुपपत्तेः । *ध्मायेते*-शब्द्येते, उच्चार्येते इति यावत् । योगार्थमात्राश्रयणे उकारपवर्गयोरप्युपध्मानीयशब्दातिप्रसङ्गमाशङ्क्याह—*रूढत्वाच्चेति* ।

"अनुस्वारयमानां च नासिका स्थानमिष्यते ।" (पा०शि०२२) इति शिक्षोक्तेरेषां नासिका करणम् ।

किञ्च स्थानत्वे कङयोः सावर्ण्यानापत्तिः यावत्स्थानैक्याभावात् । यत्किञ्चित्स्थानैक्येन तत्त्वे तु ञमामपि परस्परं सावर्ण्यापत्तिरिति, तन्न, कण्ठादीनामपि करणत्वस्यैव "अस्यन्त्यनेन वर्णान्" इति भाष्यात्प्रतीतेः । स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकताल्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वाऽऽरोपेण । तत्तत्स्थानजिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वाग्रादौ तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः । वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्तश्च कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशावच्छिन्नकार्यस्य जनको यत्नो गुणशब्देनो-

*ञमामपीति* । तथा च हरिन्नमतीत्यादौ नकार इव ञकारादिरपि कदाचित्परसवर्णः स्यादिति भावः । ननु "अस्यन्त्यनेन" इति भाष्यात्कण्ठादिषु करणत्वोपगमे तेषु स्थानत्वव्यवहारानुपपत्तिरत आह—*स्थानत्वव्यवहारस्त्विति* । *वर्णाधारत्वारोपेणेति* । वस्तुतस्तु कण्ठाद्यवच्छेदेन वर्णानामभिव्यक्त्याऽवच्छेदकत्वसम्बन्धावच्छिन्नाया मुख्याधारताया एव सम्भवान्नारोपस्योपयोगः । किञ्चैवमारोपे सति संयोगस्योभयनिष्ठत्वेन वायुसंयोगाधारे वायावपि वर्णाधारत्वारोपेण तस्यापि स्थानत्वापत्तिः स्यादिति बोध्यम् । प्रसङ्गाद् व्यवहारान्तरमपि निर्णयति-*तत्तत्स्थानेति* । *जिह्वाग्रादाविति* । स्पृष्टतान्वयिवृत्तित्वं सप्तम्यर्थः । जिह्वाग्रादौ तद्व्यवहारः प्रातिशाख्ये "व्योर्लघुप्रयत्नतर" इत्यत्र च बोध्यः । तत्रत्र हि लघुतरः प्रयत्नो जिह्वाग्रादिर्यस्योच्चारण इति विग्रहे जिह्वाग्रादीनां प्रयत्नशब्देन व्यवहाराद् लघुतरत्वञ्चेह शिथिलत्वम् । *तत्सम्बन्धजनक इति* । एतेन व्यापारवत्त्वसूचनात्करणत्वव्यवहारो नानुपपन्न इति भावः । बाह्यप्रयत्नेषु यो व्यवहारस्तमाह—*वर्णाभीति* । *यत्न इति* । बाह्य इत्यर्थः । ननु गुणशब्दस्योक्तार्थकत्वे "वृद्धिरादैच्" इति सूत्रस्थस्य भेदकत्वाद् गुणस्येत्यस्यापि तथैवार्थः स्यात्तथा च "इको यमात्मा" इतिदृष्टान्तभाष्यमसङ्गतं स्यात् । तेन तस्य धर्मार्थकत्वलाभादित्याशङ्क्य गुणपदस्यानेकार्थकत्वेन समा-

च्यते । अकारादिनिष्ठानुनासिक्यस्य "भेदकत्वाद् गुणस्य" इत्यादौ गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या । एवञ्च नासिकाया-स्तत्र गुणजनकत्वादनुनासिकाकारादीनां नासिका स्थानं नोक्तं मूले । "एकोऽयमात्मोदकन्नाम तस्य गुणभेदादन्यत्वं भवति अन्य-दिदं शीतमन्यादिदमुष्णम्" इति दृष्टान्तपरभाष्येण तथैव प्रतीतेः । आत्माऽत्र द्रव्यम् । उदात्तत्वादीनां गुणत्वव्यवहारस्तु सावर्ण्यानु-पयुक्तत्वाऽऽन्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोध्यम् । ञादीनान्तु तद्गुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन वायुसंयो-गोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहेणोभयोः स्थानत्वम् । "अनुस्वारयमानाञ्च" (पा०शि०२२) इति शिक्षायां चेन ञादीना-मपि सङ्ग्रह इति युक्तम् । 'अत एव कण्ठ्योऽकारः' इत्याद्युक्त्वा "नासिक्यान्नासिक्ययमानुस्वारानिति स्थानानि" इत्युक्तं प्राति-शाख्ये । 'नासिक्याः ङञणनमाः' इति तद्व्याख्यातारः । ङञयोः

---

धानमभिसन्धायाह–*अकारादिनिष्ठेति* । *उत्पन्नेष्विति* । शा-ब्दिकनये शब्दस्य द्रव्यत्वादनुनासिकत्वादीनां समवायेन तन्नोत्पत्त्या गुणत्वव्यवहारः; समवायेन गुणोत्पत्तौ तादात्म्येन द्रव्यस्य कारणत्वेन क्लृप्तत्वादिति भावः । *अत्रेति* । दृष्टान्तप्रतिपादकभाष्य इत्यर्थः । ननूदात्तत्वादिगुणरहितस्याकारादेः पूर्वमनभिव्यक्तेः स्वाश्रयवर्णजन-कस्थानविशेषावच्छिन्नवायुसंयोगातिरिक्तस्य तज्जननेऽनुपयोगाच्च तत्र गुणत्वव्यवहारोऽनुपपन्न इत्यत आह—*उदात्तत्वादीनामिति* । *तद्गुणरहितस्वरूपानुपलम्भेति* । यत्तु—"यथा तृतीयास्तथा प-ञ्चमा" इतिभाष्यात्तद्गुणरहितानां पूर्वमुपलम्भे पश्चादानुनासिक्यगु-णोत्पत्तेर्लाभादकारवदस्यापि नासिकास्थानत्वमयुक्तमिति; तन्न । एवं सति सानुनासिकाकारादिवद्वर्णसमाम्नाये ञादेरवक्तव्यत्वापत्तेः । त-त्स्थाने निरनुनासिकाना वर्णविशेषाणां वक्तव्यत्वापत्तेश्च । नन्वेवं शिक्षायां ञादीनां नासिकास्थानानुक्त्या न्यूनता; यावदास्यभवतुल्य-त्वविरहात्कङयोः सावर्ण्यानुपपत्तिश्चेत्याशङ्क्याह— *अनुस्वारेति* । एतेन प्रथमं दूषणं निराकृतं वेदितव्यम् । द्वितीयं निराकुरुते—*कङ-

सावर्ण्यन्तु भवत्येव। "आस्ये तुल्यदेशप्रयत्नम्" ( का० वा० ) इति वार्त्तिके 'किमास्योपादाने प्रयोजनम्' इति प्रश्ने 'प्रयत्नविशेषणमास्योपादानम्' इत्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य "यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः" इति भाष्येण तस्य ब्राह्मप्रयत्नत्वोक्त्याऽत्र सूत्रे नासिकाया आस्यशब्देन, तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाग्रहणबोधनात्, नासिका आस्यबाह्येति वदतां मते तद्ग्रहणाभावाच्च। अत एव बाह्यप्रयत्नानुपक्रम्य--

"अमोऽनुनासिको न ह्रौ, नादिनो हझषः स्मृताः।
ईषन्नादा यणश्चैव, श्वासिनस्तु खफादयः॥ (३९)
ईषच्छ्वासाँश्चरो विद्यात्"(पा०शि०४०) इत्युक्तं शिक्षायाम्।

नादेति संवारघोषयोरुपलक्षणं, श्वासेति विवारघोषयोः, न ह्रावित्युपलक्षणम् ऐचः सर्वस्य, प्लुतऌकारस्य च, अनुनासिकस्यदर्शनादित्यलम्।

"एदैतोः" इत्यादौ लोकानुभवसिद्धार्थानुवादके तपरशास्त्राप्रवृत्त्या प्लुतानामपि तत्स्थानत्वं बोध्यम्। तथा च पाणिनीयशिक्षा—

---

योऽस्त्विति*। *अत्र सूत्रे*—तुल्यास्यसूत्रे। *तत्रत्यप्रयत्नस्येति*। नासिकाभवानुनासिक्यप्रयत्नस्येत्यर्थः। *अग्रहणबोधनेति*। नासिकाया आस्यपदेन ग्रहणे तु तत्रत्यप्रयत्नस्यास्यपदव्यावर्त्यत्वोक्तेरसङ्गत्यापत्तेरिति भावः। इदञ्च नासिकाऽऽस्यान्तर्गतेति मते मणिमन्त्रादिन्यायेन तद्ग्रहे प्रतिबन्धकत्वं भाष्यस्योक्तम्। वस्तुतः सा बाह्येवेति निरूपितं विस्तरादुद्योते तत एव बोध्यम्। तदाह—*वदतामिति*। बहुवचनेनास्यैव भाष्यसम्मतत्वं ध्वनयति। सवर्णसंज्ञायामास्यभवानां स्थानानामेव तुल्यत्वमपेक्षितम्। अत एव किम् ह्मलयतेत्यादौ मकारादिसंयुक्तहकारस्य वक्ष्यमाणशिक्षयोरःस्थानकत्वेऽपि कण्ठ्येन "हेमपर" इत्यत्रत्यहकारेण सावर्ण्येन ग्रहणान्मकारादिसिद्ध्यतीति बोध्यम्।

*ऐचः सर्वस्येति*। एच इति स्वपाठः,'हसे हसने' 'टुओश्वि गति-

"कण्ठ्यावहाविचुयशास्तालव्या, ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥ (१७)
जिह्वामूले तु कुः प्रोक्तो, दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
एऐ तु कण्ठ्यतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ ॥" (१८)
"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलश्च दन्ताश्च नासिकोष्ठौ च तालु च ॥" (१९)
"हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥" (१६) इति ।

यत्तु-"दन्तोष्ठादि समुदितं स्थानम्" इति । तन्न, शिक्षायां 'दन्त्योष्ठ्यः' 'कण्ठ्यतालव्यौ' इत्यादौ "तत्र भवः" (पा०सू०४-३-५३) इत्यधिकारविहितयतः प्रत्येकमनुत्पत्त्यापत्तेः । दन्तोष्ठ्यमित्यादि त्वसङ्गतमेव । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छ-

---

वृद्ध्योः' इत्यादावनुनासिकत्वप्रतिज्ञानात् ।

यत्तु-परिनिष्ठिते प्रयोगे इतिशेषं कृत्वा हसे इत्यादौ प्रक्रियायां तत्सत्वेऽपि न क्षतिः । अत एव अदर्शनादित्युक्तं न त्वसत्त्वादितीत्याहुः । तन्न । 'हसे हसने' इत्यादीनामपरिनिष्ठतत्वस्य वक्तुमशक्यत्वेन 'भुक्तेऽपि लशुने' इतिन्यायावतारात् । ह्रस्वलृकारस्यापि गम्लादावेव तादृशस्य सम्भवेन प्लुतेत्युत्तरग्रन्थासामञ्जस्याच्च । अत्र पाठे सर्वस्येत्युक्तिस्तु प्रयोगभेदाभिप्रायेण । *लृकारस्य चेति* । चकारेण दीर्घप्लुतऋकारयोः संग्रहः । ननु उरसः स्थानत्व उक्तेऽपि तद्विषयो नोक्तोऽत आह-*हकारमिति* ।

*समुदितं स्थानमिति* । वकारादिवर्णनिरूपिता दन्तोष्ठादिसमुदायपर्याप्ताऽधिकरणता स्वीक्रियत इति भावः ।*प्रत्येकमनुत्पत्त्यापत्तेरिति*। तद्धितप्रकृत्यर्थतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगिकावच्छेदकावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूताधिकरणताकभवत्वाविशिष्टे वाच्ये एव "तत्र भव" इत्यधिकृतेन "शरीरावयवात्" इत्यनेन यतो विधानादिति भावः । *स्वाङ्गत्वाभाववदिति* । ननु स्वाङ्गत्वं प्राण्यवयवत्वमेव, तस्य च स्वाङ्गसमुदायेऽपि सम्भवेनेदमसङ्गतमिति चेद्, न । स्वाङ्गसमुदायवाचकस्य स्वाङ्गवाचकत्वाभाववदित्यर्थात् । अत एव कल्याणपाणिपादेत्यादौ न पाणिपादशब्दे स्वाङ्गवाचकत्वम् । न

रीरावयवसमुदायस्य शरीरावयवत्वाभावात् । एतेन 'दन्तोष्ठरूपमतिरिक्तं स्थानम्' इत्यपास्तम्, "अष्टौ स्थानानि" (पा०शि०१३) इति प्रतिज्ञाविरोधाच्चेति दिक् ।

---

च स्वाङ्गसमुदाये स्वाङ्गत्वे सति कुतो न तद्वाचकत्वन्तत्रेति वाच्यम् । स्वाङ्गत्वव्याप्यधर्मप्रकारकोपस्थितिजनकत्वस्यैव तत्त्वेन विवक्षितत्वेन तस्य पाणिपादशब्देऽसम्भवात् तस्य तद्घटितसमुदायत्वप्रकारकोपस्थितिजनकत्वात् । न चैवं परमपादादीनामपि स्वाङ्गवाचकत्वापत्तिरिति वाच्यम् । स्वाङ्गत्वव्याप्यधर्ममात्रप्रकारकोपस्थितिजनकत्वस्यैव तत्त्वात् ।

अथवा स्वाङ्गत्वव्याप्यधर्मनिष्ठा या धर्मितावच्छेदकताभिन्ना साक्षादवच्छेदकता तदवच्छेदकताकवाच्यतानिरूपितवाचकत्वमेव तत्त्वम् । परमपादादीनां तु न तत्त्वम् । तत्र पादत्वनिष्ठावच्छेदकतायाः परमत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतास्वरूपत्वात् । साक्षात्पदनिवेशात्पाणिपुत्रशब्देन तत्त्वम् । तत्र पाणित्वनिष्ठावच्छेदकतायाः साक्षाद्वाच्यत्वानिरूपकत्वादिति बोध्यम । एवं शरीरावयवेत्यादेरपि शरीरावयवसमुदायवाचकस्य शरीरावयववाचकत्वाभावादित्यर्थः । शरीरावयववाचकत्वमपि निरुक्तरीत्या परिष्कार्यम् ।
*एतेन*—समुदायाद्यतः सम्भवाभावेन । *दन्तोष्ठरूपमिति* । व्यासज्यवृत्त्युभयत्वं न स्थानतावच्छेदकम् । अपि तु एकविशिष्टापरत्वम् । विशिष्टञ्च—केवलादन्यदिति मतेनेदमभिहितमिति न पूर्वकल्पादभेद इति भावः । ननु प्रत्येकं स्थानत्वं न युज्यते, तत् स्थानत्वं हि तज्जनकवाय्वाघातस्थत्वमेव वाच्यम्, तथा चैकत्र वाय्वाघातेनैवैकाकारादीनामभिव्यक्त्याऽपरस्य स्थानत्वाभावप्रसङ्गात् । न च एकारैकारयोर्मध्ये भागद्वयम । अकारस्तत्राद्यः, इकारोऽन्त्यः, एवमोकारौकारयोरपि आद्योऽकारभागः, अन्त्य उकारभागः, एवञ्च कण्ठे वाय्वाघातेनाकारभागः; तालुनि ओष्ठे च वाय्वाघातेनेकारोकारयोर्भागश्चाभिव्यज्यत इति वाच्यम् ? एवं सति भिन्नवर्णत्वव्यपदेशापत्तेः । भिन्नाभिन्नस्थानजन्यत्वस्यैव वर्णभेदव्यपदेशनियामकत्वादिति चेद्, न । भेदाधिष्ठानवर्णद्वयोत्पत्त्यधिकरणक्षणयोरुत्पत्त्यनाधिकरणक्षणव्यवधानस्यैव वर्णभेदव्यपदेशनियामकत्वाभ्युपगमेन प्रकृते भागद्वयोत्पत्त्यधिकरणक्षणयोरुत्पत्त्यनधिकरणक्षणव्यवधानशून्यत्वेन वर्णैक्यव्यपदेशात् । एवमेव दन्त्योष्ठ्यशब्देऽपि पादमात्रिकं भागद्वयं कल्पनीयमिति दिक् ।

सूत्रे प्रशब्देन विलक्षणार्थबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह—प्रयत्नो द्विधेति । क्वचिद् यत्न इत्येव पाठः।

चतुर्धेति । यत्तु—

"स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम् ।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥" (२१)

इति शिक्षावाक्याद्विवृततरविवृततमयोः प्रतीत्या "नाज्झलौ" (पा०सू०१-१-१०) इति सूत्रभाष्यादूष्मणामीषद्विवृतत्वस्य च प्रतीत्या चतुर्धेत्यसङ्गतमिति । तन्न, "नाज्झलौ" (पा०सू०१-१-१०) इति सूत्रेण विवृतत्वव्याख्यानामेषां सवर्णसञ्ज्ञाऽनुपयुक्तत्वबोधनमित्याशयात् । भाष्यमते तु सन्तु सप्त प्रयत्नाः । एवञ्चैदेतोरोदौतोश्च न सावर्ण्यप्रसक्तिः प्रयत्नभेदादिति बोध्यम् । "नाज्झलौ" (पा०सू०१-१-१०) इति सूत्रमपि प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत् तस्यैव बोधकम् । अत एव भाष्ये 'तन्न वक्तव्यम्' इति नोक्तम् । स्पृष्टादीनामाभ्यन्तरत्वं त्वोष्ठप्रभृतिकाकलकपर्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारित्वाद्वर्णोत्पत्त्यव्यव-

---

*सूत्र इति* । "तुल्यास्यसूत्र" इत्यर्थः । *स्वराणाम्*—एज्भिन्नानाम् । *नाज्झलाविति सूत्रेणेति* । यत्तु—वस्तुतस्तु ऊष्मणामीषद्विवृतत्वेऽपीषत्स्पृष्टऌकारलकारयोः सावर्ण्ये होत्ऌकार इत्यत्र "तोर्लि" इति परसवर्णापत्त्या तयोस्तदभावाय "नाज्झलौ" इति सूत्रस्यावश्यकत्वमित्याचार्यैरुक्तम्; तच्चिन्त्यम् । तावन्मात्रफलकत्वे लाघवाज्झावुयणाविच्येव सिद्धे हल्ग्रहणस्य ज्ञापकत्वसम्भवात् । *इति सूत्रेणेत्यस्य*—इत्याकारकसूत्रेणेत्यर्थादित्याहुः । *सवर्णसंज्ञाऽनुपयुक्तत्वबोधनमिति* । तथा च सवर्णसंज्ञोपयोगी यत्नश्चतुर्धेति तात्पर्यमुन्नेयम् । सूत्रमतमुपपाद्य यथोत्तरमिति न्यायेनाह—*भाष्यमत इति* । सप्तानां प्रयत्नानां स्वीकारे लाघवमप्याह—*एवञ्चेति* । सावर्ण्याभावाय "ऐऔच्" सूत्रस्य ज्ञापकत्वानाश्रयणं लाघवे मूलम् । नन्वेवं लाघवादरे सूत्रविरोधोऽत आह—*सूत्रमपीति* । *तस्यैव*—प्रयत्नभेदस्यैव । *नोक्तमिति* । स्वसमीहिताविरुद्धानुज्ञापकत्वादिति बो-

हितप्रागभावित्वाच्च बोद्धव्यम् । तत्र बहूनामेकस्थानत्वेऽपि कस्यचिदुच्चारणे सम्यक्स्पर्शः कस्यचिदीषादिति शिक्षाकारोक्तिमनुभवं चानुसृत्य विवेक्तव्यम् । प्रयतनमिति नपुंसके भावे ल्युट् । प्रयत्नमित्यपपाठो नङन्तस्य पुंस्त्वात् । तथा च शिक्षा-"स्वराणामूष्मणाञ्च" (पा० शि० २१) इत्याद्यनन्तरम्—

"अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता" (पा० शि० ३८) इति ।

अचोऽस्पृष्टाः स्पर्शाभावरूपविवृतत्ववन्तः । यणस्त्वीषादिति, अनेन तेषामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्च बोधितम् । नेम इत्यर्धे । तेन शलामीषद्विवृतत्वं यणपेक्षयाऽधिकविवृतत्वं चेति बोद्धव्यम् । अत्र शिक्षोक्तव्याप्यधर्मवतां व्यापकधर्ममादाय न सावर्ण्यमिति

---

व्यम् । तत्र स्पृष्टप्रयत्नमिति पाठे दूषयितुमवतरणच्छलेनाह--*प्रयतनमितीति* । *नङन्तस्य पुंस्त्वादिति* । यदि तु जानीयादिति तिङन्तमध्याहृत्य प्रयत्नमिति द्वितीयान्तत्वेन समर्थ्यते तदा तथैवास्तु । *शिक्षेति* । पाणिनीयेत्यादिः । *स्पर्शाभावरूपविवृतत्ववन्त इति* । इदञ्चिन्त्यम्; यणामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्चेत्यग्रिमेण विरोधाद् अभावप्रतियोगिनोरेकत्र समावेशासम्भवात् तस्मादत्रास्पृष्टशब्देनातिरिक्तमेव विवृतत्वमुच्यते इति वक्तव्यम् । *ईषद्विवृतत्वञ्चेति* । यणस्त्विति वाक्ये अस्पृष्टा इत्यस्य सम्बन्धात्तेषामीषद्विवृतत्वं शाब्दम् । स्पर्शापेक्षया ईषत्स्पृष्टत्वमार्थसमाजग्रस्तमिति भट्टाः ।

भैरवमिश्रास्तु—अत्रेषदित्यस्य विशेष्यासन्निधानेऽपि मध्यमणिन्यायेन विवृतत्वं स्पृष्टत्वञ्चास्य विशेष्यमित्याशयेनाह--*यणस्त्वीषदित्यनेनेति* । यत्तु-'स्वराणामूष्मणाम्' इत्यनेनाचां विवृतत्वस्योक्ततयाऽचोऽस्पृष्टा इत्यनेन पुनस्तद्बोधनं किमर्थमिति चिन्त्यमिदमिति, तन्न । 'ताभ्यामैचौ' इतिपूर्ववाक्येन विवृततमत्वस्योक्ततया यणस्त्वीषदित्यत्र विशेष्याकाङ्क्षायां तस्यैव परामर्शापत्तेरित्याहुः । *शलामीषदिति* । अर्द्धस्य स्पृष्टत्वे आर्थमेतत्कथनम्; ईषत्त्वमजपेक्षया । अत एवाह--*यणपेक्षयेति* । *अधिकविवृतत्वञ्चेति* । एतेन यणशलोः सावर्ण्यशङ्काऽपि निरस्ता । ननु नैवलोके न च वेदे अकारो विवृतोऽ-

यणां चवर्गादिभिर्न सावर्ण्यम् । तेन 'आश्रितः' इत्यादौ न यादिः परसवर्णः । विवृतमेवेति । प्रक्रियादशायां विवृतत्वं प्रतिज्ञेयमित्यर्थः । तेन दण्डाढकादौ दीर्घसिद्धिः । अन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घेण सावर्ण्याभावात् स न स्यादिति भावः । दीर्घाकारस्य विवृततरत्वन्तु पाणिनिशिक्षाऽनुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक् ।

तस्य प्रयोगे संवृतत्वे मानमाह-"अ अ" (पा०सू०८-४-६८)। प्रयत्नभेदाद्दीर्घाभावः । अत्रोद्देश्ये सवर्णग्रहणं जातिनिर्देशो वा

---

स्तीति "अइउण्"सूत्रभाष्यात्प्रक्रियादशायां विवृतत्वमनुपपन्नमत आह—*प्रतिज्ञेयमिति* । एतच्च "अइउण्" सूत्रे भाष्य एव स्फुटम् । ननु अनुपदोक्तरीत्या शिक्षोक्तव्याप्यधर्मवतां व्यापकधर्मवद्भिः सावर्ण्याभावाद्दीर्घाकारस्य विवृततरत्वाद्ध्रस्वाकारे विवृतत्वप्रतिज्ञानेऽपि दण्डाढकादौ दीर्घोऽनुपपन्न एवेत्यत आह--*दीर्घाकारस्येति* । *पाणिनिशिक्षाऽनुक्तत्वादिति* । नारदशिक्षायां त्युक्तमेतत् । *नैतच्छास्त्रप्रक्रियोपयोगीति* । अत एव "अइउण्"सूत्रे "अकारस्य विवृतोपदेश आकारग्रहणार्थं" इति भाष्यं स्वरसतः सङ्गच्छते । अत एव च "अतो भिस" इत्यत्र तपरकरणं चरितार्थम् । अन्यथा तत्रत्येन अपदेन दीर्घाकारस्य ग्रहणाप्रसक्त्या तद्वैयर्थ्यं स्पष्टमेव ।

*तस्य*—ह्रस्वाकारस्य । *अ अ* 'सुपां सुलुक्" इतिविभक्त्योर्लुक् । *प्रयत्नभेदादिति* । आद्यस्य विवृतत्वात्, द्वितीयस्य संवृतत्वात् । ननु अनेनैव विवृतस्य संवृतादेशे तस्यासिद्धत्वेनोत्तरोऽप्यकारो विवृत एवेति दीर्घो दुर्वार एवेति चेद्, न । अ अ इति पृथङ्निर्देशेनोत्तराकारस्य मूलत एव संवृतत्वकल्पनादित्याचारिणः । *दीर्घाभाव इति* । प्रयत्नभेदादक्षरसमाम्नायाकारेणाग्रहादकत्वाभावान्न दीर्घ इत्यर्थः । अत एव गुणोऽपि नेति भावः । दीर्घाभाव इत्यत्र दीर्घश्चाश्चेति दीर्घौ तयोरभाव इति विग्रहस्य प्रयत्नभेदाद्दीर्घाभाव इत्यत्र प्रयत्नभेदेन अद्दीर्घयोरभाव इति विग्रहस्य वा करणेन तस्यापि क्रोडीकारात् । सिद्धान्तभूतजातिनिर्देशे संवृतावर्णस्यात्त्वे संहिताऽविवक्षया गुणो न एकसूत्रे संहितानियमे तूद्देश्ये लुगेव "सुपां सुलुक्" इति कुक्षः सुरादेशस्तस्य रुत्वयत्वलोपाः । तदसिद्धत्वान्न गुणादि,

न, व्याख्यानात् ।

अधिकारत्वे फलमाह--त्रिपाद्यामपीति । अन्यथा 'गोधुङ्मान्' इत्यत्र घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति भावः ।

---

उत्वन्तु न अतीतिविवृतनिर्देशादिति भट्टाः । *व्याख्यानादिति* । "तुल्यास्य" इतिनिर्देशमूलकादित्यर्थः ।

*पूर्वत्रासिद्धम्* । *घत्वजश्त्वानुनासिकेष्विति* । नन्विदमनुपपन्नम् ; गोदुह्मत् इतिदशायां परत्वान्नित्यत्वाच्च प्राप्तं जश्त्वं निरवकाशत्वाद्बाधित्वा घत्वे कृतेऽपि परमपि जश्त्वं निरवकाशत्वाद्बाधित्वा भष्भावेनेष्टसिद्धेरिति चेद् , न । घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु जश्त्वं बाधित्वा प्राप्तस्यापि भष्भावस्य परेण नित्येन चानुनासिकेन बाधाद्भष्भावो न स्यादित्याशयात् । सिद्धान्ते तु घत्वोत्तरं जश्त्वानुनासिकयोरसिद्धत्वाद्भष्भावेनेष्टसिद्धिः । यद्यपि जश्त्वं बाधित्वा भष्भावः प्राप्तः; ततोऽपि परत्वादनुनासिकः प्राप्तः; ततोऽपरनिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वं प्राप्तम् ; ततोऽपवादत्वाद्भष्भावः प्राप्नोतीति चक्रकात्कस्यापि कार्यस्याप्रवृत्त्या भष्भावो न स्यादिति कथं न्यूनम् ; तथाऽपि सिद्धान्ते घत्वोत्तरं भष्भाव एव भवतीति प्रथमोपस्थितत्वात्स एवोपात्तः ।

केचित्तु—एतन्मते त्रिपाद्यामन्तरङ्गपरिभाषायाः पक्षद्वयेऽप्यप्रवृत्तेरनुनासिकापेक्षया जश्त्वस्य प्राबल्याभावेन चक्रकानुत्थानमेवेति वदन्ति; तन्न । त्रिपाद्यां पूर्वं प्रति परासिद्धत्वस्येदानीमसत्त्वेन कार्यकालपक्षे त्रैपादिकशास्त्रैकवाक्यतापन्नायास्तस्याः पूर्वप्रवृत्त्यभिनिवेशकत्वसम्भवात् ।

भट्टास्तु--गोदुह्मत् , इति स्थिते पदान्ते घत्वस्य जश्त्वापवादत्वात्ततः प्राग् घत्वम् ; औपदेशिकझषन्ते भुदादौ युगपत्प्रवृत्त्याऽन्तरङ्गं जश्त्वमपवाद्य चारितार्थ्याद्भष्त्वात्पूर्वम् "इण्कोशीनाम्" इतिन्यायेन धातूपसर्गयोः कार्यस्येव पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वम् ; अनुनासिकात्तु अपरनिमित्तकत्वेनान्तरङ्गत्वादित्याहुः । एतदेवोद्यङ्कोऽप्यन्वमन्यत ।

ननु अनुपदं त्रिपाद्यां विप्रतिषेधशास्त्राप्रवृत्तेर्वक्ष्यमाणत्वाच्छब्दान्तरस्य प्राप्नुवतोऽनित्यत्वाच्च भष्भावापेक्षया जश्त्वानुनासिकयोः प्राबल्याभावाद्यथासमावेशं प्रवृत्तेर्न्याय्यत्वात्पूर्वं भष्त्वे ततो जश्त्वा-

वस्तुतो घत्वे कृते "झयः" ( पा० सू० ८-२-१० ) इति वत्वापत्तिर्दोषः । न च ततः परत्वाज्जश्त्वानुनासिकत्वयोस्तदप्राप्तिरिति वाच्यम् । "विप्रतिषेधे परम्" (पा०सू० १-४-२) इत्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः । "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इत्यनेन तस्या यथोद्देशत्वस्यैव बोधनात् । अन्यथा परस्यासिद्धत्वे "विप्रतिषेध" ( पा० सू० १-४-२ ) सूत्रस्य सिद्धत्वात्परिभाषाऽन्तराणामिवास्यापि कार्यकालपक्षे तेनाकर्षणापत्तेः । अत एव भाष्ये वत्वमेवापादितम् । अधिकारत्वादेव "श्चुत्वं धुटि सिद्धं वाच्यम्" ( का०वा० )इत्यादि चरितार्थम् । एवं च यत्रानुवृत्तिस्तस्यासिद्धत्वम् ।

पूर्वत्वञ्च क्वचित्सपादसप्ताध्याय्याः क्वचित्सूत्रान्तरसहितायाः ।

---

नुनासिकयो रूपं सिद्ध्यत्येवेत्यत आह-*वस्तुत इति* । *वत्वेति* । तद्धि-प्रतिपदविधित्वेन बलवत् । सिद्धान्ते तु घत्वस्यासिद्धत्वात्तत्प्राप्तिरपि नेति बोध्यम् । न चेत्यादिशङ्कासमाधाने निर्दले; परत्वात्प्राप्तयोरपि जश्त्वानुनासिकयोः प्रतिपदविधित्वादपवादत्वाच्च वत्वेन बाधापत्तेः । न च वत्वं तडित्वानित्यादौ "तसौ मत्वर्थे" इति भविषये सावकाशमिति वाच्यम् ? "झय" इतिप्रत्याहाराश्रयणस्य वैयर्थ्यात् । *श्चुत्वं धुटि सिद्धमिति* । एतस्य फलन्तु षट् श्च्योतन्तीत्यत्र श्चुत्वस्यासिद्धत्वात् "ङः सि" इति धुडभावो बोध्यः । अधिकारत्वे लब्धमर्थमाह—*एवञ्चेत्यादिना* । *क्वचित्सपादसप्ताध्याय्या इति* । "न लोपः प्रातिपदिक" इत्यत्रेत्यर्थः । *क्वचित्*-इतः परत्र । सूत्रान्तरसहितायाः असिद्धत्वेनाभिमतशास्त्रापेक्षया पूर्वपूर्वत्रैपादिकसहितायाः इत्यर्थः ।

परे तु—अस्याधिकारत्वानङ्गीकारेऽपि न क्षतिः; विप्रतिषेधसूत्रे यथाबाध्यबाधकभावापन्नत्वेनाभिमतयोः पौर्वापर्यं निमित्तत्वेन विवक्षितं तथेहापि कल्पनेन कार्यकालपक्षमाश्रित्य परिभाषात्वकल्पनेनापि निर्वाहात् अधिकारत्वे प्रतिसूत्रमावृत्तौ गौरवाच्च । न च परिभाषात्वे सपादसप्ताध्याय्यामपि प्रवृत्त्यापत्तिरिति वाच्यम् ? मध्ये पाठस्य विप्रतिषेधसूत्रस्य चारम्भेणांशिकप्रवृत्तिकल्पनात् । न च विनिगमनाविरहात् त्रिपाद्यामप्रवृत्तेः सपादसप्ताध्याय्यां प्रवृत्तेश्च विपरीतताया एवकल्पना कुतो न स्यादिति वाच्यम् ? "नमुने" इतिसूत्रस्य "श्चुत्वं धुटि" इति वा-

तत्रायमर्थः—"हो ढः" ( पा० सू० ८-२-३१ ) इत्यादावस्योपस्थितौ वाक्यभेदेनान्वयः—हस्य ढो भवति, हदश्च शास्त्रं पूर्वत्रासिद्धमिति । अत एव "न मु ने"(पा०सू० ८-२-३)इत्यादिभिस्तन्निषेध उपपद्यते । पूर्वत्रेति सङ्ग्राहकमेव । शृङ्गग्राहिकयैव तु तत्तच्छास्त्रं प्रति तस्यासिद्धत्वं प्रतिपाद्यते । तेनापवादस्य यं प्रत्यपवादत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्रासिद्धत्वं भवत्येव ।

र्तिकस्य च विनिगमकत्वात् । एतेन विनिगमनाविरहात् त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति शब्दरत्नोक्तं प्रत्युक्तम् । न चाधिकारत्वे "दादेः" इत्याद्यपवादशास्त्रैकवाक्यतापन्नपूर्वपदार्थे पूर्वत्वोपलक्षितधर्मावच्छिन्ने "हो ढ" इत्याद्युत्सर्गातिरिक्तत्वेन सङ्कोचो भवति । परिभाषात्वे स न सम्भवतीति वाच्यम् ? असिद्धपरिभाषादिवद् "दादेः" इत्यादिसूत्रोपस्थितपूर्वत्वोपलक्षितधर्मावच्छिन्ने "हो ढ" इत्याद्यतिरिक्तत्वेन सङ्कोचसम्भवादित्याहुः ।

अधिकारत्वे सति तत्र तत्र यथावाक्यार्थस्तं दर्शयति-*तत्रेति* । अधिकारत्वे सतीत्यर्थः । *अत एवेति* । विधेयभेदे वाक्यभेदस्वीकारादेवेत्यर्थः । *इत्यादिभिरिति* । आदिना "नमुटादेश" इतिवार्त्तिकसंग्रहः । *तन्निषेधः*-असिद्धत्वनिषेधः। यदि पदैकवाक्यता स्यात्तदा "हो ढ" इतिसूत्रस्य पूर्वत्र कर्त्तव्येऽसिद्धत्वविशिष्टो ढो भवतीति यथाऽर्थः; तथा "अदसोऽसेः" इत्यस्यापि पूर्वत्र कर्त्तव्येऽसिद्धत्वविशिष्टो मुर्भवतीति पर्यवसितार्थः स्यात् । एवञ्च "नमुने" इति सूत्रस्यापि नाभावे कर्त्तव्येऽसिद्धत्वविशिष्टो मुर्न भवतीत्यर्थापत्तावमुनेति रूपासिद्धिः स्यात् । असिद्धत्वस्य प्राधान्येनाविहितत्वात्तन्मात्रनिषेधायोगात् । किञ्चैवं मुत्वविध्यनन्तरं नने इत्येव वक्तव्येऽस्य वैयर्थ्यापत्तिश्च ।

वस्तुतस्तु शास्त्रासिद्धत्वस्यैव सिद्धान्तयिष्यमाणतया पदैकवाक्यतयाऽन्वयस्य क्वापि सम्भव एव नेति बोध्यम् । *संग्राहकमिति* । पूर्वत्वोपलक्षिततत्तद्धर्मावच्छिन्नशास्त्रबोधकमित्यर्थः । *शृङ्गग्राहिकयैवेति* । यथा अत्र गोसमुदाये का का ते गौरितिपृष्टो गुणादिकीर्त्तनेन तद्बोधनासम्भवे शृङ्गं ग्राहं ग्राहमेव बोधयति; तथापूर्वत्वोपलक्षितधर्मावच्छिन्नानां नामग्राहमेवासिद्धत्वं प्रतिपाद्यमित्यर्थः । *अन्यत्रासिद्धत्वं भवत्येवेति* । "दादेः" इत्यस्य "हो ढ" इत्येतत्प्रत्य-

आसिद्धमिति । सिद्धं निष्पन्नं, प्रवृत्तम् । "सिद्धश्च प्रत्ययविधौ" इत्यादौ तथा दर्शनात् । तद्भिन्नमसिद्धम्—अनिष्पन्नमप्रवृत्तम् । यद्यपि लोकेऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वं निवर्त्तकत्वञ्च दृष्टं तथाऽपीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति बोध्यम् । अत्र कार्यासिद्धत्वे 'अमू' इत्याद्यसिद्धिः ।

---

सिद्धत्वे वैयर्थ्यात्तत्प्रत्यसिद्धत्वाभावेऽपि "झय" इति वत्वं प्रत्यासिद्धत्वं भवत्येवेति गोधुङ्ङानित्यत्र वत्वञ्च । यदि तु पूर्वत्वमुद्देश्यतावच्छेदकं स्यात्तदा "पूर्वत्रासिद्धम्" इत्यस्य "दादेः" इत्यत्र सामर्थ्यादननुवृत्तौ वत्वं दुर्वारमेव स्यात् । अधुना तु तादृशोपलक्षितधर्मावच्छिन्ने "हो ढ" इत्येतद्व्यतिरिक्तत्वेनैव सङ्कोचः । एवं "नमुने" इतिसूत्रेणापि "अदसोऽसेः" इत्यत्रोपलक्षितधर्मावच्छिन्न "आङो ना" इत्याद्यतिरिक्तत्वेन सङ्कोचः । एवं "नलोपः सुप्" इतिसूत्रेण "नलोपः प्रातिपदिक" इत्यत्रोपलक्षितधर्मावच्छिन्ने सङ्कोच इति बोध्यम । ननु "पूर्वत्र" इत्येव सूत्रमस्तु, "आमन्त्रितं पूर्वमविद्यमानवत्" इत्यतोऽविद्यमानवदित्यनुवर्त्तते । एवञ्च पूर्वत्रोत्वे "रोरि" इति लोपोऽविद्यमानवदिति सिद्धेऽसिद्धमिति व्यर्थमत आह—*सिद्धमिति* । अविद्यमानवदित्यनेन तु न निर्वाहः । गोमानित्यादौ नलोपापत्तेः । शास्त्रस्याविद्यमानवत्त्वेऽपि तत्कृतकार्यस्य विद्यमानत्वात् । कुलालस्याविद्यमानवत्त्वेऽपि घटस्य विद्यमानत्ववदिति भावः । *सिद्धश्च प्रत्ययविधाविति* । "सिद्धश्च प्रत्ययविधौ पुंवद्भाव" इतिवार्त्तिक इत्यर्थः । एतस्य फलन्तु दरदोऽपत्यं स्त्री दरत्; तस्या अयं दारदीय इति । तत्र हि—"द्व्यञ्मगध" इतिविहितस्याणः "अतश्च" इति स्त्रियां लुकि तद्धितविवक्षायां "भस्याढे" इति पुंवत्त्वेऽणलुक्याऽऽद्यचो वृद्धौ "वृद्धाच्छः" इति भवति । *शास्त्रेति* । "पूर्वत्रासिद्धम्" इति शास्त्रेत्यर्थः । *आहार्यारोपोऽपीति* । बाधकालिकेच्छाजन्यनिश्चयोऽपीत्यर्थः । *शास्त्रप्रवृत्ताविति* । तेन अग्नी३ इतीत्यत्र प्लुते कृतेऽपि तस्यासिद्धत्वात्प्रगृह्यसंज्ञाप्रवृत्तिः । *अप्रवृत्ताविति* । तेन हर इहेत्यादौ गुणादिशास्त्राप्रवृत्तिः । अथ हर इहेत्यादौ गुणादिशास्त्राप्रवृत्तिः किंविषयेति चेत् ? गुणादिशास्त्रं यलोपादिशास्त्रं नाभ्यनुजानातीत्येतावतैवेत्यवेहि । अयं भावः—सकलशास्त्रीयोद्देश्यतावच्छेदककोटौ साधुत्वं प्रविष्टं; तच्च पूर्वप्रवृत्तिमता शास्त्रेण प्रवृत्तिलक्षणं बोध्यते । चरमप्रवृत्तिमता तु पुण्यजनकत्वल-

'अद् अ औ' इति स्थिते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थका-र्यदृष्ट्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाकाराभावेन पररूपाद्य-

क्षणं तद् बोध्यत इत्यन्यत्। अत एव सर्वशास्त्राणां यत्किञ्चिच्छास्त्र-बोधितसाधुताक एव प्रवृत्तिः। एवञ्च पूर्वपूर्वशास्त्राणां परत्रैपादिक-शास्त्रबोधितसाधुत्वस्याज्ञातत्वान्न तत्र प्रवृत्तिरिति।

परे तु-सर्वशास्त्राणां स्वप्रवृत्त्युपयोगित्वप्रकारकपाणिनितात्पर्य-विशेष्यं यच्छास्त्रान्तरजन्यं साधुत्वप्रकारकं ज्ञानं तज्ज्ञानविशेष्यमु-द्दिश्यैव प्रवृत्तिः। तथा च-"पूर्वत्रासिद्धम्" इति शास्त्रेण "लोपः शा-कल्यस्य" इत्येतच्छास्त्रजन्यसाधुत्वप्रकारकज्ञाने "आद् गुण" इत्येत-च्छास्त्रप्रवृत्त्युपयोगित्वप्रकारकं पाणिनितात्पर्यं नास्तीति बोध्यत इति प्राहुः। यत्र तु पूर्वपरशास्त्रयोर्युगपत्प्राप्तिः; तत्र परशास्त्रस्य प्राबल्य-बोधनद्वाराऽप्रवृत्तिरवानेन बोध्यते वाक्यभेदेनेति बोध्यम्।

*अद् अ औ इति*। "अत्वात्पूर्वन्त्वसः" इति प्रतिषेधान्न मुत्वमि-ति भावः। *न्यायेनेति*। वस्तुतस्तु एतन्न्यायानुपन्यासेऽप्यत्र दोषो बोध्यः। असिद्धत्वेनाकारबुद्ध्या उकारस्यैव पररूपे अमावित्यापत्तेः। *पररूपाद्यनापत्तिरिति*। इष्टपररूपाद्यनापत्तिरित्यर्थः। एतेन मुत्व-स्यासिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेन तत्स्थान्यवयवाकाराभावे-ऽपि व्यवधानाभावेन अदश्शब्दाद्यकारेणात्वानिष्पन्नाकारस्य पररू-पसम्भवादेवमुक्तमयुक्तमित्यपास्तम्।

यत्तु—मुत्वस्यासिद्धत्वेऽपि तदधिकरणसार्द्धमात्राकालव्यवाया-त्स्वाभाविकार्द्धमात्राव्यवायात्मकसंहिताया अभावान्मुत्वे कृते कथ-मपि पररूपाप्राप्त्या यथोक्तमेव साधीय इत्याहुः; तन्न। सार्द्धमात्रा-कालेऽर्द्धमात्राकालत्वस्याप्यतिदेशलभ्यस्य वक्तव्यत्वात्। कथमन्यथा 'इमं मे गङ्गे' इति मन्त्रे यमुनाऽऽदीनां मेशब्दात्परत्वमाश्रित्य निघातः सिद्ध्येत। "तिङ्ङतिङ" इतिसूत्रे पञ्चम्याऽव्यवहितत्वोपस्थितौ तस्यार्द्धमात्राधिककालव्यवायशून्यत्वरूपतया 'गङ्गे' इत्यादीनामविद्य-मानवत्त्वेऽपि तदधिककालानां विद्यमानत्वेन व्यवधानेन निघाताप्राप्तेः।

केचित्तु-मुत्वशास्त्रेण मुघटितं साधु तदितरदसाधु इति बोधनेन अ अ औ इत्यस्य साधुत्वाभावेन साधावेव शास्त्रप्रवृत्तेरुक्तत्वेन न पररूपप्राप्तिरिति यथोक्तमपि सम्यगेवेत्याहुः।

अन्ये तु—अत्र कार्यासिद्धत्वस्वीकारेऽपि न क्षतिः, "अचःपर-स्मिन्" इति शास्त्रवदिहापि त्रैपादिकशास्त्रं न प्रवृत्तं स्थानी न निवृत्त

नापत्तिः । अतिदेशस्यारोपरूपत्वान्निरधिष्ठानारोपासम्भवेन

इति सम्भावनायां यत्प्राप्तं तद्भवति; यत्र तत्रेतितात्पर्यार्थादमू इत्यत्र परत्वान्मुत्वे कृतेऽपि मुशब्दे एव दबुद्ध्या उकारेऽकारबुद्ध्या पररूपे सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्त्या अद् औ इति स्थिते लक्ष्ये लक्षणन्यायेन मुत्वाप्राप्त्या वृद्धौ स्वघटकमात्रोद्देश्यकविकाराघटितत्वेन लक्ष्यभेदात्पुनर्मुत्वे रूपसिद्धेः ।

यत्तु—अमू इत्युपलक्षणम् ; अमूभ्याम् अमूदृगित्यादेः । तत्र हि—अद् अ भ्याम् अद् आ दृशिति स्थिते परत्वान्मुत्वे जातेऽपि तस्याप्रवृत्तिस्थान्यनिवृत्त्योः सम्भावनायां पररूपसवर्णदीर्घयोः सतोः सन्नियोगशिष्टस्य मस्यापि निवृत्त्या लक्ष्यभेदाभावान्मुत्वाप्रवृत्तौ अदाभ्यामित्याद्यापत्तेः । शास्त्रासिद्धत्वं स्वीकार्यमिति; तन्न । इदानीं "नमुने" इति लिङ्गेन लक्ष्ये लक्षणन्यायस्य मुत्वविषयेऽप्रवृत्तेः । अन्यथा अद् अ आ इति स्थिते परत्वान्मुत्वे तस्यासिद्धत्वात्पररूपे मकारस्यापि निवृत्तौ लक्ष्यभेदाभावान्मुत्वाप्रवृत्तौ इनादेशगुणयोः कृतयोर्नादेशप्राप्त्यभावेन तद्वैयर्थ्यापत्तेः ।

यत्तु—कार्यासिद्धत्वे अमी इत्यादौ अद् अ असिति स्थिते परत्वान्मुत्वे दकारपरैकाराभावेन "एत ईद्" इतिसूत्रस्य वैयर्थ्यमुक्तमस्य शास्त्रासिद्धत्वज्ञापकत्वमुक्तं शब्दरत्ने; तच्चिन्त्यम् । "एत ईद्" इत्यस्योपजनिष्यमाणन्यायेन मुत्वापवादत्वेन यद्यत्र मुत्वं न स्यात्तर्हि पररूपादौ कृते मीत्वं स्यादिति सम्भावनया भविष्यदपवादविषयातिरिक्तत्वेन मुत्वशास्त्रे सङ्कोचात्तस्य चारितार्थ्यादिति वदन्ति; तन्न । पूर्वपदस्य पूर्वशास्त्रविधेयकार्यलक्षणायां सम्भावनाघटिततात्पर्यार्थकल्पनायाञ्च मानाभावात् , फलाभावाद्गौरवाच्च । उकारेऽकारबुद्ध्या पररूपेऽपि पूर्वस्य मकारस्य स्थितौ कर्त्तव्यायां तस्य स्थानिवत्त्वेन मकारस्यापगमाभावेन वृद्धौ कृतायाम् अदस्सम्बन्धिदकाराभावेन मुत्वाप्राप्त्या अमौ इत्यस्यैवापत्तेश्च । शब्दरत्नोक्तिखण्डनमात्रं परं युक्तियुक्तं सर्वैः सोढव्यमित्यलम् ।

ननु 'अद् अ औ' इतिस्थितावेव मुत्वस्यासिद्धत्वात्पररूपादयः स्युरत आह—*अतिदेशस्यारोपेति* । ननु शास्त्रासिद्धत्वपक्षेऽप्यनित्यत्वेन देवदत्तेति न्यायाप्रवृत्तिरवश्यं वाच्या । अन्यथा यत्र त्रैपादिकं पूर्वं प्रवृत्तं तत्र तस्यासिद्धत्वेऽप्युक्तन्यायेन तत्तद्बुद्धेरभावात्सपादिककार्यप्रवृत्त्यनुपपत्तेरिति कार्यासिद्धत्वेऽपि न्यायामित्यर्थमेवो-

कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् । शास्त्रासिद्धत्वे तु यत्राप्यन्तरङ्गत्वात् त्रैपादिकं प्रवृत्तं तत्रापि तत्तच्छास्त्रे एवाभावारोपेण तन्निवृत्तिबुद्धेरभाव आदेशबुद्ध्यभावो लक्ष्ये जातत्वबुद्ध्यभावश्च। जायमानं कार्यं त्वादेशे एव स्थानिबुद्ध्या प्रवर्त्तते। "न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न दोषः। यत्र तु सहप्रसङ्गस्तत्राप्रवृत्तिरेवाभावारोपात् । न च "पूर्वत्र न" इत्येव सूत्रमस्त्विति वाच्यम् । पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे "नलोपः सुप्" ( पा० सू० ८-८-२ ) इति सूत्रासङ्गतेः । तद्धि नियमार्थम् । त्वद्रीत्या 'राजन् अश्व' इत्यस्यां दशायां कस्यापि पूर्वशास्त्रस्या-

ध्यतामत आह—*शास्त्रासिद्धत्वे त्विति* । *अन्तरङ्गत्वादिति* । अत्रान्तरङ्गत्वं सपादसप्ताध्यायीस्थशास्त्रप्राप्तिकालिकप्राप्तिकर्तृत्वमात्रम् ; न त्वन्तरङ्गपरिभाषायाः प्रवृत्तिः । त्रिपाद्यां सर्वथा तदप्रवृत्तेर्ग्रन्थकारसम्मतत्वात् । यथा—ऊढमाख्यदिति विग्रहे औजढदित्यत्र ढत्वादिकं द्वित्वे कर्त्तव्येऽसिद्धं भवति; तथा च हतशब्दबुद्ध्यैव द्विर्वचनम् । न च हतशब्दबुद्ध्या जायमानं द्वित्वं वस्तुगत्या ढकारविशिष्टस्यैव स्यादित्यौजढदित्यस्यासिद्धिरिति वाच्यम् ? द्वित्वविधायकशास्त्रदृष्ट्या यथा ढत्वादीनामसिद्धत्वं भवति; तथा "कुहोश्चुः" इत्येतद्दृष्ट्याऽप्यसिद्धत्वाद् घकारबुद्ध्या चुत्वस्य प्रवृत्तिसम्भवादिति भैरवमिश्राः ।

वस्तुतस्तु यत्राप्यन्तरङ्गत्वादित्यादिचिन्त्यमेव; तादृशप्रयोगस्याभावात् । औजढदित्यत्रापि ढत्वादीनामसिद्धत्वात्पूर्वं णिचि लुङि चङि ढत्वादेरसिद्धत्वाद् द्वित्वस्य प्रवृत्तेः । न च भट्टोक्तं पिपठीरित्यत्र रुत्वं तत्फलम् । तत्र हि पूर्वं षत्वे ततः क्विपि अल्लोपे षत्वस्यासिद्धत्वाद्रुत्वस्य प्राप्तेरिति वाच्यम् ? तत्रापि षत्वस्यासिद्धत्वात् क्विपि अतो लोपे सुप्रत्यये हल्ङ्यादिलोपे पदान्तत्वेन षत्वस्यैवाप्राप्तेः । नापि लुन्युः क्षाम्युरित्यादौ नत्वादीनामसिद्धत्वात् "क्यस्यात्" इत्युत्वं फलम्; तत्रापि क्यजादिदृष्ट्या तेषामसिद्धत्वेन पूर्वमप्रवृत्तेः । एतन्मूलकमेव हि पठ्यते—सापादिकशास्त्रप्रवृत्तिसम्भावनायां पूर्वं त्रैपादिकं न प्रवर्त्तते इति दिक् ।

*पूर्वशास्त्रप्रवृत्तौ निषेध इति* । पूर्वत्र कर्त्तव्य इदं न प्रवर्त्तत इत्येवं

प्राप्त्यैतन्निषेधाप्रवृत्तौ नलोपे जाते "भुक्तवन्तम्" इति न्यायेनै-तदप्रवृत्तौ राजाश्वे दीर्घसिद्ध्या नियमानुपयोगात्, 'राजभ्याम्' इत्यादावपि दीर्घापत्तेश्च । 'पूर्वशास्त्रविषयसम्भावनायाम्' इत्यर्थे 'राजभ्याम्' इत्यादौ नलोपे सुब्विधिदीर्घविषयसम्भावनया सर्वथा नलोपानापत्तेरिति दिक् ।

बाह्यप्रयत्न इति । काकलकाधस्ताद्गलविवरसङ्कोचविका-सश्वासोत्पत्तिध्वनिविशेषरूपनादतद्विशेषरूपघोषाल्पघोषप्राणाल्प-त्वमहत्त्वरूपकार्यकरत्वमेषाम् । तथा हि—

"आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ (पा० शि० ६)
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते," इति शिक्षायामुक्तम् ।

आत्मा अन्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्व-

---

रूपेण सर्वत्र वाक्यभेदेन व्याख्यानादिति भावः । नन्वेवं तदकरणला-घवेन तन्निष्टापत्तिरेवेत्यत आह-*राजभ्यामिति* । *दीर्घापत्तेश्चेति* । राजन् भ्यामिति स्थिते कस्यापि पूर्वशास्त्रस्याप्राप्तेर्निषेधाप्राप्त्या नलोपे जाते पश्चात् "सुपि च" इत्यस्य प्राप्तौ नलोपस्य निषेधेऽपि "भुक्तवन्तम्" इतिन्यायेन दीर्घापत्तेरिति भावः । ननु असिद्धशास्त्रप्रवृत्तिसम्भा-वनोत्तरकालिकपूर्वशास्त्रप्राप्तिसम्भावनायां पूर्वमसिद्धशास्त्रं न प्रवर्त्तेत इत्यर्थस्वीकारेण राजाश्व इत्यादौ नलोपोत्तरं सवर्णदीर्घसम्भाव-नायाः सत्त्वेन पूर्वं न लोपो न स्यादतो "नलोपः सुप्" इति नियम आवश्यक इत्याशङ्क्य समाधत्ते—*पूर्वशास्त्रविषयेत्यादिना* ।

ननु कथं विवारादीनां बाह्यत्वं विवारत्वादिकं चात आह—*का-कलकेति* । अधस्तादित्यनेन तस्यास्यबहिर्भावः सूचितः । *तद्वि-शेषेति* । नादविशेषेत्यर्थः । अघोषेत्यत्र नञोऽल्पार्थत्वादाह-*अल्प-घोषेति* । *कार्येति* । तथा चोक्तरूपास्यबहिर्भूतकार्यकरत्वाद्वर्णाभि-व्यक्त्यनन्तरभावित्वाच्च बाह्यत्वम्; तत्तत्कार्यकरत्वाच्च विवारत्वादिक-मिति भावः । *सोदीर्ण इति* । "सोऽचि लोप" इतिसुलोपः । *आत्माऽ-न्तःकरणमिति* । सांख्यरीत्येदम् । अनुभवस्य नष्टत्वादाह-*संस्कारे-

बुद्ध्या समेत्य एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति, तदिच्छावन्मनः कायाग्निं जाठरमग्निमभिहन्ति, स कायाग्निः, सोदीर्णः स मारुतः उदीर्णः ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः। एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य उक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति। ततो यत्नविशेषेण गलविवरविकासादीन् करोति, तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते। गलविवरविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद् बाह्या इति। मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्तु वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य वायुप्रेरणारूपङ्कार्यमास्यबाह्यदेशमिति तदपि बाह्यमेव। अत एव "अइउण्" ( मा० सू० १ ) सूत्रे भाष्ये ह्रस्वत्वादिजनकयत्नस्यास्यविशेषणेन सवर्णसूत्रेऽग्रहणमित्युक्तम्। यद्यप्येक एव यत्नः सर्व-

---

ति*। अर्थानां वक्तुमिच्छाया असम्भवादाह-*तद्बोधेति*। अन्तःकरणस्यैव परिणामविशेषं मनः कर्म इच्छया स्वीयवृत्तिविशेषेण। युङ्क्त इत्यन्तर्भावितण्यर्थं तदाह-*युक्तं करोतीति*। *इच्छयोत्पन्नयत्नेति*। इच्छया उत्पन्नो यत्नो यस्मिन्निति विग्रहः। विवक्षयेत्येतद्यत्नेनेत्यस्याप्युपलक्षणमिति भावः। नन्वेवं ह्रस्वत्वादिजनक एकः, स्पर्शादिजनक एकः; अग्न्याघातजनक एक; इत्येकैकस्य वर्णस्य प्रयत्नत्रयं प्रयत्नद्वयं वा जनकमिति तात्पर्यं लभ्यते, तच्च संहितासूत्रभाष्यविरुद्धम्। तत्र हि—स्वोत्पादितवर्णनाशावधिप्रयत्नस्थितिः, ततस्तं प्रयत्नमुपसंहृत्य द्वितीयप्रयत्नोत्पत्तिरिति प्रथमवर्णनाशकाले द्वितीयवर्णोत्पादकप्रयत्नोत्पत्तिकाले च वर्णविरामसत्त्वात्प्रतिवर्णं विरामसंज्ञा प्राप्नोतीत्याशङ्कितम्; तस्य च नाभिरूपैकदेशावच्छेदेनानेकप्रयत्नोत्पत्तिर्युगपद्बाधितेत्याशयः। एवञ्च एकस्यैव प्रयत्नस्याग्न्याघातह्रस्वत्वादिस्पर्शादिजनकत्वमिति स्पष्टमेवायातम्; तदेतत्सकलं मनसि निधाय शङ्कते-*यद्य-

कार्यजनको वर्णनाशकश्चेति "परः सन्निकर्षः" ( पा० सू० १-४-१०९ ) इति सूत्रे भाष्ये उक्तं, तथाऽपि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा व्यवहार इति बोध्यम् । उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेऽपि उदात्तादिशब्दैर्विना बोधितानां तेषाम् "अनुदात्त" इत्यनेनाविवक्षाबोधनात् । सवर्णसंज्ञाऽनुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणनम् । इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम् ।

शर इति । शषसाः । अनुप्रदानं बाह्यप्रयत्नः । विवृण्वत इति । तदभिव्यक्त्युत्तरजायमाने कण्ठविवरविकासे तेषां कर्तृत्वविवक्षा बोध्या । विवार एषां प्रयत्न इति भावः ।

---

पीति* । *सर्वकार्यजनक इति* । स्वोत्पादितवर्णनिष्ठह्रस्वत्वादिसर्वकार्यजनक इत्यर्थः । *वर्णनाशक इति* । स्वोत्पादितवर्णनाशक इत्यर्थः । *तथा तथा व्यवहार इति* । वस्तुतस्तु यथा लोके ग्रामान्तरगमनप्रयोजकयत्नवानवान्तरयत्नैः पथि भोजनादिकार्यकृद्भवति; तद्वदिहापि । अवान्तरसर्वप्रयत्नजनकमहाप्रयत्नैक्येऽपि । अनुभवसिद्धानांतत्तद्धह्रस्वत्वादिप्रयोजकप्रयत्नानामपलापितुमशक्यत्वेन चिन्त्यमिदम् । भाष्यन्तु महाप्रयत्नैक्यमादाय प्रवृत्तमिति न तद्विरोधः । एवञ्च कार्यभेदारोपः प्रयत्ने विफल इति बोध्यम् । नन्वेवमपि उदात्तादीनामत्रोक्तिरयुक्ता; प्रागुक्तरीत्या तेषामाभ्यन्तरत्वस्यैव लाभात् । तथा च कथमुदात्तानुदात्तयोः सावर्ण्यमतः प्रागुक्तमेव पुनराह—*उदात्तेति* । *उदात्तादिशब्दैरिति* । "अस्थिदधि"इतिसूत्रे उदात्ताकारकानङ्विधानेनैव सिद्धे उदात्तग्रहणेन यत्रोदात्तादिशब्दो नोपात्तस्तत्र वर्णगतानां तेषामुद्देश्यतावच्छेदकाविधेयतावच्छेदकतयाऽविवक्षाबोधनादिति भावः । नन्वेवमप्यत्र तेषामुक्तिरयुक्तैव; बाह्यकार्यकरत्वाभावादत आह—*सवर्णसंज्ञाऽनुपेत्यादि* । एकादशधेति मूलस्य न्यूनतां परिहरति—*इदमिति* । एवञ्चात्र प्रकरणे मूलोक्तं न नियमपरमिति भावः ।

*बाह्यप्रयत्न इति* । अनुपश्चात्प्रदीयते उत्पद्यत इतिव्युत्पत्तेः । ननु कण्ठविवरविकाशकर्तृत्वस्य प्रयत्ने सम्भवात्कथं विवृण्वत इतिकर्तृप्रत्ययेन वर्णेषु तत्सम्भवोऽत आह—*तदभिव्यक्त्युत्तरमित्यादि*।

अन्ये त्विति । वर्गतृतीयचतुर्थपञ्चमास्तद्यमा हकारानुस्वारौ यरलवा इत्यर्थः । नादभागिनः तत्प्रयत्नकाः । यद्यपि खयादिषु घोषाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रियांशनिर्वाहस्तथाऽपि शिक्षाऽनुरोधेनान्येषामुक्तिः। अल्पासवः-अल्पप्राणाः । यत एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति ।

वर्गेष्विति । विद्यमानानामिति शेषः। चतुर्णामिति । निर्धारणे षष्ठी । अन्यतमादिति शेषः । पूर्वसदृश इति । सादृश्यं यत्नकृतम् । अत एवायोगवाहेषु यमानां गणनं भाष्ये "चत्वारश्च यमाः स्मृताः" ( पा०शि०४ ) इति पाणिनिशिक्षा च सङ्गच्छते । अयञ्च वेदे एव; तदाह—प्रातिशाख्ये इति । अन्येषामिति ।

---

*यद्यपीति* । खयादिष्वघोषाद्यन्यतमेति पाठः । एवं हशादिष्वपीति बोध्यम् ।

वर्गेष्वेव यमानां स्थितिरिति भ्रमवारणाय षष्ठ्यौचित्यम् ; सप्तम्युपपत्तये चाह-*विद्येति* । नन्वेवमपि प्रयोगे युगपच्चतुर्णां स्थित्यभावेन लक्ष्यविरोध एवात आह—*निर्धेति* । *अन्यतमेति* । एतेन परशब्दयोगे चतुर्थ्यं इति पञ्चम्युचितेत्यपास्तम् । * पूर्वसदृश इति* । मूले पूर्वेणैव सदृश इत्यर्थः । किञ्च पूर्वसदृश एव न तु पूर्व इत्यर्थः । *यत्नकृतमिति*। न तु कत्वादिधर्मकृतमिति भावः । न च यत्नकृतस्य तस्य ग्रहणे पलिक्क्नीत्यत्र ककारसदृशः खसम्बन्धी यमोऽपि कदाचित्स्यादिति वाच्यम् ? यावत्प्रयत्नकृतस्य तस्याश्रयणेनाल्पप्राणकृतभेदात् । *अत एवेति* । धर्मकृतसादृश्यानङ्गीकारेण तत्कृतसादृश्याङ्गीकारादेवेति परसादृश्याङ्गीकारेण पूर्वसादृश्याङ्गीकारादेवेति चार्थः । उभयत्र सङ्गच्छत इत्यनेनैवास्यान्वयः । अन्यथा पठितैरेव तेषां ग्रहणे तत्र ग्रहणासङ्गतिः । परसदृशत्वेऽपि तेषां पञ्चत्वेन तदुक्तचतुष्ट्वसंख्याविरोधापत्तिश्चेति भावः । चतुष्ट्वोपपत्तिस्तु प्रथमयमत्वादिना बोध्या । ननु सिद्धान्तेऽपि तेषां विंशतित्वेन चतुष्ट्वमनुपपन्नमिति चेद्, न । प्रथमत्वादिना तथोक्तेः; पञ्चत्वसंख्याव्यवच्छेदे तात्पर्यादिति चिदस्थिमालाकाराः ।

अन्ये तु-कचटतपानां पञ्चमे परे मध्ये एको यमः; द्वितीयानां पञ्चम एकः; तृतीयानां पञ्चम एकः; चतुर्थानां पञ्चम एक इतिसङ्कलनया

अचाम्, उक्तान्यहलाश्चेत्यर्थः । परस्वमाप्नोति । एनाथाकपि ग्रहणम् । "सुपां सुलुक्" ( पा०सू० ७-१-३९ ) इति सूत्रे "इकारस्यान्तर्यतो दकारः" इति भाष्याद् घोषसंवारनादाल्पप्राणत्वमचाम् । अन्यथा तदौ पर्यायेण स्याताम् । अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्याताम् । अचां घोषत्वं "परः सन्निकर्षः" ( पा० सू० १-४-१०९ ) इति सूत्रे भाष्येऽपि स्पष्टम् । अन्ये इति । द्वितीयचतुर्थौ तयमौ, श्वासहा अयोगवाहाश्चेत्यर्थः । जिह्वामूलीययमादीनां स्थानवाह्यप्रयत्नकथनं तु स्वरूपनिर्णयाय,

---

चतुष्ट्वन्तत्र वास्तविकमेव । न चैवं त्वयां यमा इत्यत्र बहुवचनानुपपत्तिः; व्यक्त्यभिप्रायेण तदुपपत्तेः । अत एव 'प्रथमतृतीययमौ' इति द्विवचनं स्वरसतः सङ्गच्छत इत्याहुः ।

ननु राज्ञामित्यादौ चुत्वं न स्यात्; यमेन व्यवधानादिति चेद्; न । 'अशरीरं यमं प्राहुः' इत्यादिवचनेनाशरीरोक्त्या तद्व्यवधानस्याकिञ्चित्करत्वादित्याचारिणः ।

अन्ये तु–यमानां छन्दोमात्रविषयत्वात्तैर्व्यवधानेऽपि चुत्वे बाहुलकत्वं गतिरिति वदन्ति । *इति भाष्यादिति* । तत्र हि—"लुकि किमुदाहरणम्? । आर्द्रे चर्मन् लोहिते चर्मन्, नैतदस्ति पूर्वसवर्णेनाप्येतत्सिद्धम् । न सिध्यति; यदत्र पूर्वसवर्णः स्यात्तदाऽऽन्तर्यतो दकारः स्यात्" इत्युक्तम् । *अन्यथा*–अल्पप्राणत्वमात्राङ्गीकारे । *तदौ पर्यायेणेति* । तथा च तदेव भाष्यं प्रयत्नचतुष्टयसाधकमिति भावः । यद्यपि तदनाः पर्यायेण स्युरिति वक्तुं युक्तम्, तथाऽपि निरनुनासिकत्वान्तर्येणैवमुक्तिरिति बोध्यम् ।

परे तु–"परः सन्निकर्ष"इतिसूत्रभाष्याद् घोषत्वं "सुपां सुलुक्"इति सूत्रभाष्यादल्पप्राणत्वं घोषत्वं चास्तु; तावतैव तत्सङ्गतेः । अस्तु संवारनादत्वे निष्प्रामाणिके; न च घोषसंवारनादेषु विनिगमनाविरहः, "परः सन्निकर्ष" इतिसूत्रभाष्यस्यैव विनिगमकत्वादित्याहुः । *तद्य माविति* । अयोगवाहेभ्यः पृथगुपादानमप्रायोगवाहपदेन प्रथमतृतीययमयोरग्रहणाय । *जिह्वामूलीयेति* । उपध्मानीयस्य स्थानकथनन्तु उपध्मानीयोपधस्योब्जेर्जहत्वेन बकारार्थं कथञ्चिद्भवतीत्याचारिणः* । *यमादीनामिति* । आदिनाऽनुस्वारविसर्गौ; अत्र यमानुस्वार-

न तु सावर्ण्यान्तरतम्यपरीक्षादावुपयोगीति बोध्यम् ।

अनुपयुक्ता इति । "तुल्यास्य" ( पा० सू० १-१-९ ) सूत्रे प्रशब्दग्रहणात् । उपयुक्तत्वे हि शछयोरपि सावर्ण्यं स्यादिति भावः । आन्तरतम्यपरीक्षा च घोषवत इत्यादिना तत्र तत्र स्फुटीभविष्यति । स्पर्शाः तत्पदव्यवहार्याः । अन्तस्थाशब्द आदन्तः । स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः । ऊष्माण इति । ऊष्मा वायुस्तत्प्रधाना इत्यर्थः । एवं सोष्माण इत्यस्य वायुना सह वर्तन्त इत्यर्थ इति प्रातिशाख्यभाष्ये स्पष्टम् । यद्यपि वर्गद्वितीयचतुर्थयोरपि "स्थानेऽन्तरतम" ( पा० सू० १-१-५० ) सूत्रभाष्यादूष्मत्वं तथाऽपि विवृतमूष्मणामित्यत्रैत एव गृह्यन्ते । अन्यथा खादीनां सावर्ण्यानापत्तौ "नाऽऽज्झलौ" ( पा०सू० १-१-१० ) इत्यादिनिर्देशासङ्गतिरिति भावः । अचः स्वरा इति । उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः, तद्धर्मत्वादुदात्तादयोऽपि स्वरा इत्युच्यन्ते । कपाभ्यामिति । खफयोरप्युपलक्षणम् । 'अं अः' इत्युपलक्षणमिकारादेरपि । तदाह—अचः पराविति ।

---

योर्नासिकास्थानकथनम्-"अथ मुखग्रहणं किमर्थम् ? 'नासिकावचनोऽनुनासिक' इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत" इतिभाष्योक्तदिशा मुखग्रहणबोधनाय । #शछयोरिति# । तयोः सावर्ण्ये राजँश्छिन्धीत्यत्र "झरो झरि" इति लोपः, विष्णुशिवावित्यत्र "छे च" इतितुक्, असिश्छिनत्तीत्यत्र "वा शरि" इति च स्यात् । किञ्च वश्चादिसूत्रे शछयोरन्यतरोपादानं "छ्वोः" इतिसूत्रे किञ्चनानुवृत्तिपक्षेऽपि व्यर्थं स्यात् । #आदन्त इति# । "स्थः क च" इति कप्रत्ययान्तोऽदन्तस्ततष्टाप्, नित्यस्त्रीलिङ्गोऽयम्; 'अन्तःस्थाभिश्च संयुतम्' इतिशिक्षाऽनुरोधादिति भावः । एतेन विश्वपाशब्दवदादन्तत्वे "ईषत्स्पृष्टमन्तःस्थानाम्" इतिनिर्देशासङ्गतिरित्यपास्तम् । #स्पर्शोष्मणोरिति# । मातृकापेक्षयेदम् । #निर्देशासङ्गतिरिति# । यद्यपि यावत्स्थानसाम्यमिव यावत्प्रयत्नविवक्षामन्तरेणापि निर्देशसङ्गतिः, तथाऽपि यावत्प्रयत्नसाम्यानङ्गीकारे खकारहकारयोरपि सावर्ण्यापत्तौ देवः खनतीत्यादौ

ऋऌवर्णयोरिति । आ च ऌवर्णश्चेति विग्रहः । "ऋत्यकः" ( पा०सू० ६-१-१२८ ) इति प्रकृतिभावः । एतदर्थमेव वर्णोपदेशे ऌकारपाठः । अन्यथा तस्यासवर्णशङ्कयाऽस्य वचनस्यैवाशक्यत्वं स्यात् । ध्वनितश्चेदम् "एओङ्" (मा०सू०३) इति सूत्रशेषे भाष्ये । तत्र हि—सय्यँन्तेत्यादौ "हलोऽनन्तराः" (पा०सू० १-१-७) इति सूत्रे प्रत्याहारग्रहणेष्वपि ग्रहणकशास्त्रप्रवृत्त्या मात्राकालिकस्य यद्वयादेः "अणुदित्" (पा०सू०१-१-६९) सूत्रेण यादिग्रहणेन ग्रहणाद् द्विव्यञ्जनाश्रयो विधिर्न प्राप्नोतीत्याशङ्क्य मात्रिकव्यञ्जनानुपदेशादनुपदिष्टस्यासत्त्वाद् असत्प्रतिपत्तेरशक्यत्वाच्च "अणुदित्" ( पा० सू० १-१-६९ ) सूत्रेण तद्ग्रहणमित्युक्तम् । न च 'क्लृ ३ प्तशिखः' इत्यादौ 'अनृत'

---

"हशि च" इत्युत्वाद्यापत्तिः । एवञ्च यत्किञ्चित्प्रयत्नसाम्ये इदमसङ्गतम्; यावत्साम्ये मूलोक्तमसङ्गतमिति तात्पर्यम् ।

*आ च ऌवर्णश्चेतीति* । मनोरमोक्तविग्रहस्य त्यागस्तु "न हि पदान्ताः परेऽणः सन्ति" इति भाष्याल्लृकारान्तेभ्यः सुबनुपपत्तेर्बोध्यः । अन्यथा ऌकारान्तेभ्यः पञ्चमीषष्ठ्येकवचनयोः पदान्ते पराणः सम्भवेन तदसङ्गतेः । न च तत्प्रामाण्यात्तत्रैवानभिधानमस्त्विति वाच्यम् ? पञ्चमीषष्ठीविधायकानेकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने ऌकारान्तातिरिक्तत्वेन सङ्कोचापेक्षया "स्वौजस्"इत्येतन्मात्रे सङ्कोचे लाघवात् । न चैवं 'ऌ'इत्यस्य वर्णशब्देन समासोऽपि दुर्लभ इति वाच्यम् ? ऌवर्णपदस्य ऌकारे रूढिस्वीकारात् । *एतदर्थमेवेति* । सवर्णसंज्ञानिर्वाहार्थमेवेत्यर्थः । *तस्य*—ऌकारस्य । *ध्वनितश्चेदमिति* । वर्णसमाम्नायानुपदिष्टस्यासत्त्वं भाष्ये ध्वनितमित्यर्थः । न चानुपदेशत्वमात्रेणासत्त्वशङ्कायामाकारादिष्वपि सा स्यादिति वाच्यम् ? अक्षरसमाम्नाये जातिनिर्देशेनात्वादिजातेस्तेष्वपि सत्त्वात्, ऌकारे ऋत्वजातेश्चासत्त्वात् । *सय्यँन्तेत्यादाविति* । आदिना कुक्कुटादिपरिग्रहः । *द्विव्यञ्जनाश्रय इति* । संयोगसंज्ञेत्यर्थः । *न प्राप्नोतीति* । वर्णैकदेशानां वर्णग्रहणेनाग्रहणकल्प इत्युक्तिः । *तद्ग्रहणमित्युक्तमिति* । यद्यपि अनुस्वारपरसवर्णयोरसिद्धत्वेनान्यत्र समाधानं वक्तुं युक्तम्; तथाऽपि "अनचि च" इतिद्वित्वासिद्ध्यर्थमेतत्स-

इति निषेधात् प्लुतानापत्तिः । ऋऌवर्णयोः पृथगनुबन्धत्वकरणेन क्वचित्परस्परग्राहकत्वकल्पनेनादोषात् ।

अकारहकारयोरिति । एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्वमिति मते एकारशकारादीनामप्युपलक्षणमिदम् । एतेन "नाज्झलौ" इत्येव सूत्रयितुमुचितमित्यपास्तम् ।

---

माधानस्यावश्यकत्वेन संयोगसंज्ञायामपि समाधानस्य समाधानान्तरादूषकत्वात् । न च "अनाचि" इतिद्वित्वस्य द्व्यञ्जनाश्रयत्वमनुपपन्नम्, 'अनचि' इतिप्रसज्यप्रतिषेधादिति वाच्यम् ? द्व्यञ्जनाश्रय इत्यस्य सम्यन्तेत्येतत्प्रकृताभिप्रायकत्वात् ।

यत्तु—अक्षरसमाम्नाये जातिनिर्देशसत्त्वेन अकारादिनाऽऽकारादिग्रहणवद्यकारादिना यद्वयग्रहणस्य दुर्वारत्वाद्भाष्योक्तिश्चिन्त्येत्याहुः; तन्न । अच्त्वजातीयानामेकारादीनां द्विमात्राणामप्युपदेशेनात्वादिजात्याक्रान्तानां द्विमात्राणामप्युपदेशे तात्पर्यमाचार्यस्य, हल्त्वजातीयानान्तु केषाञ्चिदपि मात्रिकाणामुपदेशाभावेन तेषामसत्त्वमिति तात्पर्यमिति भाष्यतात्पर्यात् । अत्रेदं बोध्यम्—चतुर्दशसूत्र्यां महेश्वरेणानुपदिष्टत्वमात्रमसत्त्वप्रयोजकम्, अयोगवाहानामीषत्स्पृष्टऌकारस्य चासत्त्वापत्तेः, किन्तु अनुपदिष्टत्वं यावच्छिष्टानामेष्टव्यम् । तथा च सति गम्लृधातौ लृकारोपदेशेन लृदित इत्यनुवादेन च सत्त्वपरिरक्षणसम्भवादेतदर्थमेवेत्युक्तौ रमसादेवेति । *पृथगनुबन्धेति* । 'गम्लृ गतौ' 'पञ्जू दीप्तौ' इत्यादौ । *इति मत इति*। तालव्यावेकारचवर्गावि-कारैकारौ यकारः शकारः शेष ओष्ठोपपाद्य इतिबह्वृचप्रातिशाख्यमत इत्यर्थः । *एकारशकारादीनामिति* । ऐकारशकारावादिशब्दार्थाविति भट्टाः । आकारहकाराविति केचित् । विवृतमूष्मणामित्यभोष्मशब्देन वर्गद्वितीयचतुर्थयोरपि ग्रहणात्तयोर्विवृतत्वं "नाऽऽज्झलौ" इत्यादिनिर्देशात्तत्सवर्णीयोऽपि प्रयत्नः । प्रयत्नांशे च यत्किञ्चित्साम्यं निर्देशादाश्रीयत इति मते इकारछकारादी आदिशब्दार्थाविति श्रीधरः। परन्तु इतिमते इत्यस्यानन्तरमिकारशकारादीनामित्यस्योक्तत्वादीदृक्फक्किकाक्षमादिपदस्यायुक्तमिति बोध्यम् । सूत्रमते विवृतत्वस्याद्यानां संज्ञाऽनुपयुक्तत्वस्योक्तत्वादनयोर्विवृततरत्वादिना भेदेऽपि तत्प्राप्तिर्बोध्या । अत्र मते "यञ्जुष्येकषाम्" इत्यादिनिर्देशादिकारैकारयोः स्थानसाम्येऽपि संज्ञा न । *अपास्तमिति*। नन्वेवमपि 'नाज्झलौ' इत्येव सू-

"हशि च" ( पा० सू० ६-१-११४ ) इत्येव सिद्धे "अतो रोः" ( पा०सू० ६-१-११३ ) इत्याकारे व्यावृत्त्यर्थम् ।

सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमासं दर्शयति— आकारसहित इति । अत एव 'वेलामु' इति निर्देश उपपद्यते । समाहारद्वन्द्वे तु टच्प्रसङ्गोऽज्झलिति समाहारद्वन्द्वं कृत्वा आपदेन द्वन्द्वे तु अज्भिरप्याकारस्य सावर्ण्यं न स्यादिति भावः । अत एव भाष्ये प्रयत्नभेदेनैषां सावर्ण्याभावः साधितः । एतेषु परेष्विति । इदमुपलक्षणम् । एतेषु विद्यमानस्येत्यपि बोद्ध्यम् । तेन हकारादीनामकारादिषु परतो दीर्घादिसङ्ग्रहः । अच्त्वं स्यादिति । अच्पदबोद्ध्यत्वं स्यादित्यर्थः । इदं प्रत्याहारघटकेष्वपि

---

अस्त्विति चेन्न ? एवं सति शलां परस्परं संज्ञानिषेधापत्तेः । यथाश्रुतन्यासे पूर्वसवर्णकरणासेति भट्टाः ।

गुरवस्तु—होतृ्लृकार इत्यत्र ईषत्स्पृष्टलृकारस्य लकारेण सावर्ण्यापत्त्या यण्स्थानिककारस्य "यणो मय" इति द्वित्वापत्तिः । "तोर्लि" इति परसवर्णापत्तिश्चेति वदन्ति । ननु "अतो रोरप्लुतादप्लुते हशि" इति न्यासादकारहकारयोः सवर्णसंज्ञया शिवोऽर्च्य इति सिद्धावतीत्येतत्साहितेन योगविभागेन विधानं व्यर्थं सदज्झलोः सावर्ण्याभावबोधकमिति "नाज्झलौ" इत्यनर्थकमत आह—*हशि चेत्येव सिद्ध इति* । *व्यावृत्त्यर्थमिति* । हशि हसवर्णे चेत्येवेति नियमद्वारा स्व आगन्तस्यादुत्वव्यावृत्त्यर्थमिति भावः । *अत एव*—आकारस्य प्रश्लेषादेव । अन्यथाऽनिर्वाहादगतिकगतिभूतोऽपि मध्यमपदलोपी समास आश्रित इति सूचयितुमाह—*समाहारद्वन्द्वे त्विति* । *सावर्ण्यं न स्यादिति* । "परवल्लिङ्गम्" इति नपुंसकत्वापत्तिरपि बोध्या । अज्भिराकारस्य सावर्ण्याभावे इष्टापत्तिं वारयति—*अत एवेति* । अज्झलोरेव सावर्ण्याभावसाधनादेवेत्यर्थः । यद्यकाराकारयोरपि सावर्ण्याभावः सूत्रकाराभिमतः स्यात्तदाऽज्झलोः प्रयत्नभेदेनेव तयोरपि सावर्ण्याभावः प्रकारान्तरेण साधितः स्यादिति भावः । एकपद एव दोषसत्त्वेन पदद्वयपर्यन्तधावनं व्यर्थमिति सूचयितुमाह—*उपलक्षणेति* । ननु अच्छब्दस्य संज्ञाशब्दत्वेनात्र शब्दरूपस्यैव प्रवृत्तिनिमित्तत्वेन भावप्रत्ययान्तेऽनन्वयापत्तिरत आह—*अच्पदबोध्यत्वमिति* । ननूभादि-

ग्राहकशास्त्रप्रवृत्तिरिति मते व्यक्तिपक्षे च बोद्ध्यम् ।

अणुदित् ( पा०सू० १-१-६९ ) । अणमुद्दिश्य सवर्णबोधकताऽत्र विधीयते । सवर्णस्येत्यस्य बोधकमिति शेषः । आदे-

---

तस्यैव प्रत्यायकत्वसिद्धान्तादिकारस्याच्पदबोध्यत्वेऽपि तस्यानुच्चरितत्वात्प्रत्यायकता नोपपद्यत इति इकारादीनामित्यादिपदस्य ग्राकारादिसङ्ग्राहकस्यानुपपत्तिरत आह—*इदं प्रत्याहारघटकेत्यादि* । *मते*—अज्झलोः प्रतिषेधे शकारस्य प्रतिषेधोऽज्झल्त्वादिति वदतो वार्तिककारस्य मते । जातिपक्षे जातेर्भेदाद् ग्रहणकशास्त्रेऽण्ग्रहणस्यैवाभावादत आह—*व्यक्तिपक्षे चेति* ।

*अणुदित्* । अस्य सूत्रस्य मूलोक्तसंज्ञासंज्ञिभावबोधकत्वं समानाधिकरणपदोपादानाभावादयुक्तम्; किन्तु प्रत्ययभिन्नोऽण्सवर्णस्य स्थाने भवतीत्येवार्थो वाच्यः । किञ्च सोऽपि न स्यात्; उद्देश्यवाचकस्यैव पूर्वप्रयोगनियमादत आह—*अणमुद्दिश्येति* । बोधक इति शेष इति च । नन्वेतावताऽण्सवर्णान् गृह्णातीत्यर्थः पर्यवसन्नः । स चानुपपन्नः; उच्चारितस्यैव प्रत्यायकत्वनियमादिगादिबोध्येकारादिभिरपि सवर्णग्रहणासिद्धेः । न चाण्बोधकं पदं स्वसवर्णान् गृह्णातीत्यर्थेन निर्वाहः । एवमप्युक्तदोषानुद्धाराद् इगित्यादेर्विशिष्टस्य सहग्रहणेन संज्ञात्वमभ्युपगच्छतां मते तस्य सवर्णाप्रसिद्ध्याऽण्ग्रहणवैयर्थ्याच्च । नापि अण्बोधकं स्वबोध्यसवर्णान् गृह्णातीत्यर्थः साम्प्रतम् । अण्बोधकेनाद्यादिना स्वबोध्यजकारादिसवर्णानां चकारादीनां ग्रहणापत्तेः । न वा अण्मात्रबोधकं स्वबोध्यसवर्णान् गृह्णातीत्यर्थः । अद्यादिनाऽकारादिसवर्णानामपि ग्रहणानुपपत्तेः । न च अण्बोधकं स्वबोध्याण्सवर्णान् गृह्णातीत्यर्थः । अर्थवत्सूत्रे प्रत्ययपदस्याप्यण्बोधकत्वेन तेन स्वबोध्याण्सवर्णानां ग्रहणापत्तौ राम इत्यादावव्युत्पत्तिपक्षे प्रातिपदिकसंज्ञाऽनुपपत्तेः । न चाण्बोधकस्य पदस्य व्यासज्यवृत्तिधर्मावच्छिन्नविषयत्वाप्रयोजकस्य ग्रहणेन प्रत्ययत्वस्य स्यामादिवृत्तित्वेन व्यासज्यवृत्तित्वेन प्रत्ययपदस्य तदवच्छिन्नविषयताप्रयोजकत्वेन न दोष इति वाच्यम्? एवमपि उदात्तानुदात्तादिपदानां तथाभूतत्वेन तद्बोध्याण्सवर्णग्रहणापत्तेर्दुर्वारत्वात् । न च तेषामपि सङ्केतसम्बन्धेनोदात्तपदवत्त्वादिरूपेण बोधकत्वेन पदपदार्थयोराक्षात्वाद्यानुपूर्वीरूपव्यासज्यवृत्तिविषयताप्रयोजकत्वेन न दोष इति वाच्यम्? एवं सति "इदम इश्"

ग्रादौ सवर्णग्रहणवारणायाह—प्रतीयत इति ।

इत्यत्रेऽशपदस्य इकाररूपाण्बोधकत्वेऽपि व्यासज्यवृत्तीत्वावच्छिन्न-विषयताप्रयोजकत्वेन सवर्णग्रहणाप्रसक्त्या अणुत्वात्सवर्णग्रहणं प्राप्नो-तीति भाष्यविरोधापत्तेरिति चेत् ? अत्र केचित्—अण्बोधकं वर्णा-द्यवयवकं पदं तत्स्वबोध्याण्सवर्णग्राहकं भवतीत्यर्थः । तथा चोदात्ता-दिपदस्य व्यक्तिपक्षेऽणाद्यवयवकत्वाभावेन न दोषः ।

वस्तु–अण्बोधकं यदेकव्यञ्जनघटितं पदमित्याद्यर्थ इति; तन्न । ग्रिपदेन दीर्घेकारोकारयोरपि ग्रहणापत्तेः । "शेषो घ्यसखि" इत्यत्र ह्रस्वपदानुवृत्तेस्तु अनुवृत्तयूपदस्य ह्रस्वयूबोधकत्वबोधनद्वारा ह्रस्वयो-रपि संज्ञासाधनेन कृतार्थत्वात् ।

यदपि अण्विशिष्टविषयताप्रयोजकं पदं स्वबोध्याण्सवर्णान् गृह्णा-तीत्यर्थः । वैशिष्ट्यञ्च–स्ववृत्तित्व स्वधर्मिकशक्तिग्रहाधीनशक्तिग्रह-प्रयोज्यत्वाभाववत्त्वोभयसम्बन्धेन । तथा च उदात्तादिपदे न तदा-पत्तिः । तत्प्रयोज्यविषयतायाः स्ववृत्तित्वसम्बन्धेनाण्विशिष्टत्वेऽपि अण्धर्मिको यश्शक्तिग्रहः सः अकारादिरच्पदशक्य इत्याकारकस्तद-धीनो य"उच्चैरुदात्त" इत्यादिसूत्रबोधितः शक्तिग्रहस्तत्प्रयोज्यत्वस्यैव सत्त्वेन द्वितीयसम्बन्धेनाण्वैशिष्ट्यविरहादित्याहुः, तदपि न । अर्थव-त्सूत्रे प्रत्ययपदप्रयोज्यविषयताया अण्विशिष्टत्वेन ग्रहणस्य दुर्वारत्वा-दित्याहुः ।

अन्ये तु–अण्बोधकं पदं स्वबोध्याण्सवर्णग्राहकं भवतीत्येवार्थः । स्वंरूपसूत्रादशब्दसंज्ञेत्यनुवृत्तेः । शब्दसंज्ञासु तदप्रवृत्तिः सिद्धा । इगादेः शब्दसंज्ञात्वेऽपि "दीर्घाज्जसि च" इतिज्ञापकात्प्रत्याहारसंज्ञाभि-न्नसंज्ञाया अत्र सूत्रे ग्रहणान्न दोष इत्याहुः ।

गुरवस्तु–अण्घटितं यदण्समभिव्याहृतानुबन्धेतरवर्णाघटितं प-दं तत्स्वबोध्याण्सवर्णग्राहकं भवतीत्यर्थान्न क्वापि दोष इत्याहुः ।

सिद्धान्तविदस्तु—अण् सवर्णान् गृह्णातीत्येवार्थः । इक्पदबोध्यो-कारादिसवर्णानां ग्रहणं तु स्ववाच्यवाच्ये लक्षणया बोध्यम् । अण्ग्र-हणन्तु प्रत्याहाराद्यवर्णेन इकारादिना सवर्णग्रहणार्थम् । तत्रापि लक्ष-णया निर्वाहेऽण्ग्रहणं व्यर्थमिति तु न शङ्क्यम् । लक्ष्यतावच्छेदकज्ञाप-नार्थत्वस्य "इको यण्" इत्यत्र शब्दरत्ने प्रतिपादितत्वात् । अत एव "द्वयादिभ्य" इत्यादिनिर्देशादिभिर्लक्षणैव मनोरमायां साधिता स्वर-सतः सङ्गच्छते । अन्यथा अस्य सूत्रस्य तद्ग्राहकत्वे निर्देशादिज्ञाप-

परे तु प्रत्ययग्रहणमेकदेशानुमत्या "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषां ज्ञापयतीति युक्तम् । प्रत्ययपदस्य तद्र्थत्वन्तु न युक्तं, वार्त्तिककृता ष्टित्किञ्चित्सूपसंख्यानोक्तेः । भाष्यकृता चाप्रत्ययग्रहणमेतत्परिभाषाज्ञापकमित्युक्तम् । "ज्यादादीयसः" (पा०सू०६-४-१६०) इति सूत्रे भाष्ये ध्वनितमिदम् । तत्र हि—"किमर्थमादित्युच्यते ज्याद इत्येवोच्यताम् । का रूपसिद्धिः ? आन्तर्यतो दीर्घो भविष्यति । एवन्तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन" इत्यादि । त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिः । जातिपक्षेऽप्यनयैव परिभाषया सवर्णग्रहणं वारणीयम् । व्यक्तिपक्षे गुणाभेदकत्वमाप्तञ्च वारणीयम् । तेन घटवदित्यादौ नानुनासिको वकारः ।

---

काभिधानस्य नैष्फल्यापत्तेरिति वदन्ति ।

*ज्ञापयतीति* । "गतिकारक" इतिवद् बोधयतीत्यर्थः । अतो न स्वांशे चारितार्थ्यप्रश्नावसरः । *तदर्थत्वम्*-विधीयमानार्थत्वम् । प्राचीनमते "भाव्यमानेन" इतिपरिभाषाया 'अप्रत्यय' इत्येतद्योगलब्धार्थानुवादकत्वं खण्डयितुमाह-*परे त्विति* । ननु वार्त्तिकस्योपदेशे इतिवदज्ञानेन प्रवृत्तिरत आह-*भाष्येति* । *ज्ञापकमिति* । न तु सूत्राक्षरमर्यादयाऽयमर्थो भाष्यकृता साधित इति भावः । ज्ञापनस्थलीयविचारस्तु अन्यतोऽवसेयः । ननु भाष्यमपि योगरूढ्या परिभाषार्थं बोधयतीत्यर्थकमत आह—*ज्यादेति* । *इदम्*-प्रत्ययपदस्य विधीयमानार्थकताया अयुक्तत्वम् । *निर्दलत्वापत्तिरिति* । विधीयमानत्वेन सवर्णग्रहणेनासिद्धेरिति भावः ।

केचित्तु—अप्रत्ययपदेन कृत्रिमाकृत्रिमन्यायेन प्रत्ययभिन्नस्य ग्रहणं युक्तमिति शङ्कां वारयितुमिदं भाष्यं प्रवृत्तमिति नैतत्प्राचीनमतेऽपि विरुद्धमिति वदन्ति । दूषणान्तरमप्याह—*जातिपक्ष इति* । 'अप्रत्यय' इत्यस्याविधीयमानार्थकत्वे तु जातिपक्षप्राप्तस्य निषेधो न स्याद् "अनन्तरस्य" इतिन्यायात; तस्य पर्युदासत्वाच्चेति भावः । *नानुनासिको वकार इति* । न च तत्र स इष्यते, तद्वान्; असुव्वत, इत्यादिनिर्देशादिति भावः ।

एतेन 'अजुदित्' इत्येव सिद्धेऽण्ग्रहणेन यण्सु गुणभेदकत्वं ज्ञाप्यते इति परास्तमित्याहुः ।

ननु "चोः" (पा०सू०-८-२-३) इत्यादावनुवादे कथमुदित्त्वमिति चेद् ? न, व्याकरणान्तरे एषामुदित्संज्ञकत्वेनादोषात् । उपदेशशब्दस्य करणसाधनत्वेन शास्त्रपरत्वेऽस्यापि शास्त्रत्वेनेत्त्व-

---

केचित्तु—घटवदित्युपलक्षणं किम्वितीत्यस्य, घटवदित्यत्र तु न दोषः। असति यत्ने उदात्तादिशब्दैरनुपात्तानां गुणानामविवक्षाया एव "अस्थिदधि" इत्यत्र शेखरे परिभाषेन्दुशेखरे चोक्तत्वात् "पथिमथि" इतिसूत्रे प्रतिपत्तिलाघवायानुनासिक एवोच्चारणीये तदनुच्चारणेन शुद्धाकारस्य भाष्योक्तविधानवदिहापि सानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणेन यत्नेन गुणानां भेदकत्वेन सिद्धेः। किम्वितीत्यत्र तु किमु इतीति स्थितौ ऊँ आदेशे "मय उञ" इत्यनेन गुणाभेदकत्वात्सानुनासिकवकारस्यापत्तिः। तत्रापि सानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणेन यत्नेन गुणानां भेदकत्वं तु न युक्तम्; ऊँ आदेशाभावपक्षे निरनुनासिकोकारस्य स्थाने निरनुनासिकवकारसम्पत्तये तत्करणादित्याहुः।

कौस्तुभोक्तिं खण्डयति-*एतेनेति*। "भाव्यमानेन" इतिपरिभाषाया व्यापकविषयकत्वसूचनेनेत्यर्थः । *अजुदित्येव सिद्धे इति*। सय्यँन्तेत्यादौ सानुनासिकयकारस्य यर्पदेन ग्रहणस्य गुणाभेदकत्वेनैव सिद्धेरिति भावः। न चैवमज्ग्रहणमपि न क्रियताम्, गुणाभेदकत्वेनैव सिद्धेरिति वाच्यम् ? ऋऌवर्णयोः परस्परग्रहणार्थत्वात् । *ज्ञापयतीति* । एवञ्च "भाव्यमानेन" इत्यनेनाणुदित्सूत्रस्यैव निषेधेऽपि न घटवदित्यादौ दोष इति भावः। *परास्तमिति*। उक्तरीत्या फलाभावादिति भावः।

प्राचीनरीत्याऽज्ञातस्वस्वरूपज्ञापकोच्चारणस्योपदेशत्वाच्छङ्कते—*नन्विति*। तद्रीत्या समाधत्ते—*व्याकरणान्तर इति*। *उदित्संज्ञकत्वेनेति*। न तु उदिद्यस्येत्यर्थकत्वेनेति भावः। स्वमते प्रातिपदिकत्वरूपमुपदेशत्वमेवेति न शङ्काऽवसर इत्याह—*करणेति*। *अस्यापि*—चोरित्याद्यनुवादविषयस्यापि । न चोच्चारणार्थानामित्संज्ञां विना निवृत्त्यभावेन कुक्कुटादौ सवर्णग्रहणं दुर्वारमिति वाच्यम् ? उदित्पदेऽवधारणगर्भबहुव्रीह्याश्रयणेनादोषात् । अत्राप्यंशे-

प्रवृत्तेः सुलभत्वाच्च । चो भिन्नक्रम इत्याह-उदित्चेति । यद्यपि समुदायसवर्णिनोऽप्रसिद्धास्तथाऽपि तदवयवचादिसवर्णा एवात्र तत्सवर्णा बोध्याः । ह्रस्वाकाराद्योरपि कालपुरुषाद्युपाधिभेदेन स्थानेषु भेदमारोप्य तुल्यस्थानत्वं सूपपादम् । अत्रेति । ग्राहकसूत्र एवेत्यर्थः । व्याख्यानादिति भावः । "उपसर्गादृति" (पा०सू०६-१-९१) इत्यादितपरकरणादिति तु न युक्तम् । ऌकारग्रहणेन चारितार्थ्यात् । एवमिणपि परेणैव । "अचि श्नु"

ऽप्रत्यय इत्यस्य विशेषणत्वमिति तु न युक्तम्; कुपदेनापि तद्ग्रहणानापत्तावुदिदुच्चारणवैयर्थ्यात् ताहख् इति रूपासिद्धेश्च । *सवर्णस्य चेति* । चकारेणासवर्णस्यापि ग्रहणापत्तिमुद्भाव्यान्यथाव्याचष्टे-*चो भिन्नक्रम इति* । अथवा चकारेण स्वरूपस्य ग्रहणमित्यर्थवारणायाह—*चो भिन्नक्रम इति* । स्वरूपस्यापि सवर्णत्वादेव ग्रहणसिद्धेः सोऽर्थो विफल इति भावः । *सवर्णिन इति* । सवर्णा इति वक्तव्ये एवमुक्तिः सवर्णपदस्य धर्मपरत्वाभिप्रायेण । *चादीति* । इशादाविव नव्यमतेऽनुवादेऽपि इत्संज्ञालोपप्रवृत्तौ प्रतिबन्धकाभावेनोकारविनिर्मुक्तस्यैव चादेरुपस्थित्या न्यायसिद्धमिदमित्यन्ये । उकाररूपावयवसवर्णानां चुशब्दो न ग्राहकः, "न विभक्तौ" इतिनिषेधेन सोरुकारस्येत्त्वानापत्त्या "आद् गुण" इत्यादिनिर्देशासङ्गतेः । ननु मात्रिकेण द्विमात्रिकस्य ग्रहणं भेदघटितसादृश्यस्य सावर्ण्यप्रयोजकस्य सत्त्वादस्तु; न तु मात्रिकस्यापीति चकारेण स्वरूपस्यापि ग्रहणमित्येव युक्तं न तु चकारस्य भिन्नक्रमकत्वमित्यत आह—*ह्रस्वाकाराद्योरिति* । कार्यस्यैक्येन कार्यभेदरूपयुक्तेः "तुल्यास्य"सूत्रोक्ताया असम्भवादाह—*कालेति* । *भेदमारोप्येति* । प्राचामनुरोधेनेदम्, स्वमते सादृश्यस्य भेदाघटितत्वेनादोषात् । *व्याख्यानादिति* । शब्दरत्नोकाद् "उरृत्" इतितपरकरणरूपज्ञापकादिति भावः । *ऌकारग्रहणेनेति* । इदं तपरसूत्रस्य विधायकत्वमते ।

यत्तु-सूत्रकारमते ऋकारऌकारयोः सावर्ण्याभावेन वार्त्तिककारमतेऽण्ग्रहणस्यैवाभावेन तत्र ज्ञापकानुपयोगाच्चिन्त्यमेतदिति ; तन्न । ऌकारग्रहणेनेत्यस्य सवर्णसंज्ञाज्ञापनद्वारेत्यादिपूरणेन ऋकारऌकारयोः सवर्णविधिरिति वार्त्तिकोक्तार्थस्यापि क्रोडीकारसम्भवात् । एवञ्च तद्वार्त्तिकं नापूर्वमिति भावः । *चारितार्थ्यादिति* । न च

(पा०सू०६-४-७७) इति सूत्रे इण इत्येव सिद्धे य्वोरिति गुरुनिर्देशाद्व्याख्यानाच्चेति "लण्" (मा०सू०६) सूत्रे भाष्ये स्पष्टम् । नन्वेवम् "अस्य च्वौ" (पा०सू०७-४-३२) इत्यादौ सवर्णग्रहणं न प्राप्नोति । अणग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्याद्यवर्णोपस्थितेषु उच्चारिताभेदेन गृहीतेषु सूत्रस्य चारितार्थ्येन व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेन प्रकृते प्रत्याहारघटकाद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकत्वादप्रवृत्तेरिति चेद् ? न, जातिपक्षाश्रयणेनादोषात् । अत एवानेकतकारादीनां झल्त्वादिसिद्धिः । सूत्रेऽणग्रहणं च न

---

"उपसर्गाद्" इति तपरकरणेन तात्परत्वादेव ऌकारग्रहणसिद्धौ पुनरपि तपरकरणं व्यर्थमेवेति वाच्यम् ? एतेनैव तपरकरणेन तपरसूत्रे विभक्तितकारस्याग्रहणबोधनात् । अत एवोपेन्द्र इत्यत्र गुणः सिद्ध्यतीति वक्ष्यते स्वयमपीति बोध्यम् । अथ व्यक्तयो भिन्नाः तत्तद्व्यक्तित्वावच्छिन्ने च वर्णानां शक्तिरिति व्यक्तिपक्षः, व्यक्तिः-एकेति । अत्वादिजात्यवच्छिन्ने शक्तिरिति वा जातिपक्षः; तत्र व्यक्तिपक्षेऽणपदेनाकारादिणान्तसमुदायघटकानामाक्षरसमाम्नायिकानामेव ग्रहणात्तद्भिन्नस्य "अस्य च्वौ" इत्यत्रत्यस्याग्रहणात्सवर्णग्रहणाप्रसक्त्या "अस्य च्वौ" इति सूत्रं कस्याञ्चिदेकस्यामेव व्यक्तौ प्रवर्त्तेतेति शङ्कते—*नन्वेवमिति* । *न प्राप्नोतीति* । अत्र हेतुः—व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेनेत्येतावानेव चारितार्थ्येनेत्यन्तस्तु अणग्रहणसार्थक्यप्रदर्शनपरः । ननु आद्यवर्णेऽपि "उरण्" इत्यादौ कथं ग्रहणकशास्त्रप्रवृत्तिः; व्यक्तिपक्षे पाणिन्युच्चारितस्याक्षरसमाम्नायिकाद्भेदादित्यत आह-*णकारादिचिह्नेनेति* । ननु उपस्थितस्योच्चारितत्वाभावादग्राहकत्वमत आह—*उच्चारिताभेदेनेति* । लक्षणापक्षस्य मनोरमाकस्यासङ्गत्यं ध्वनयितुमाह—*जातीति* । अस्यावश्यकतामाह—*अत एवेति* । *झल्त्वादिसिद्धिरिति* । अन्यथा झलादिप्रत्याहारकरणसामर्थ्याद्यस्याः कस्याश्चिदेकस्यास्तकारादिव्यक्तेर्ग्रहणापत्तौ अवात्तामित्यत्र सलोपानापत्तेः । "झलो झलि" इतिसूत्रन्तु अभित्था इत्यादौ विजातीयझल्द्वये चरितार्थं स्यादिति भावः । नन्वेवमाद्यवर्णेऽप्यत एव सिद्धेरणग्रहणं व्यर्थमत आह-*सूत्रे इति* । ननु ऋऌवर्णयोः परस्परं ग्रहणा-

कार्यम् । "ऋलृवर्णयोः सावर्ण्यम्" इत्यनेन समानजातित्वस्यै-वातिदेशेन "उपसर्गादृति" (पा०सू० ६-१-९१) इत्यादौ न दोषः । एतद्व्यतिरिक्तसवर्णे समानजातित्वसत्त्वात् । पृथगनुबन्ध-करणाच्च न ऋदिल्लृदित्प्रयुक्तकार्यसङ्करः । अत्र पक्षे "अइउण" (मा०सू०१) सूत्रशेषोक्तभाष्यरीत्या "तपर" (पा०सू०१-१-७०) सूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियामकत्ववद् "अप्रत्ययः" इ-त्यस्य योगविभागेन तत्प्राप्तसवर्णग्रहणनिषेधकत्वात् "सदादीना-मः" (पा०सू०१-१-७४) इत्यादौ विधेये न दोषः । एवं गुणा-भेदकत्वप्राप्तसवर्णग्रहणनिषेधकत्वमप्यस्य बोद्ध्यम् । अत एव 'घ-टवत्' इत्यादौ मतोर्मस्य नानुनासिको वकारः । सामर्थ्यादिति । "एचोऽयवायावः" (पा०सू०६-१-७८) इत्यादौ "स्थानेऽन्तर-तम" (पा०सू०१-१-५०) सूत्रेणैव निर्वाह इति वक्ष्यते ।

---

याज्ग्रहणमेवास्त्वित्यत आह— *ऋलृवर्णयोरिति* । *समानजाति-त्वस्यैवेति* । समानो वर्णो जातिरित्यर्थः । स्वार्थे ष्यञ्, वर्णाश्रमा-चारवानित्यादौ वर्णपदेन जातेर्व्यवहारादिति भावः । होतॄकार इत्यादौ लृकारे परे दीर्घस्तु 'अकोऽकि' इतिन्यासेन सुवचः । इदम् ऋष्युक्त्यनुरो-धेन गौरवमनुसृत्योक्तम् । लाघवादरे तु लृवर्णस्य ऋवदिति शब्दरत्नो-क्तमनुसन्धेयम् । नन्वेतद्व्यतिरिक्ते सवर्णे कथं सिद्धिरत आह—*एत-द्व्यतिरिक्तेति* । नन्विदमनुपपन्नम्; एतद्व्यतिरिक्ते कखादौ सवर्णे समानजातित्वाभावादिति चेद्, न । एतद्व्यतिरिक्ते आकारादावाचि सवर्णे इत्यर्थात् । पर्युदासन्यायेनैतद्भिन्नेऽत्वेनैतत्सदृशे एतद्व्यतिरि-क्तपदस्य पर्यवसानादिति बोध्यम् । *योगविभागेनेति* । अत्र पक्षे सूत्रेऽण्ग्रहणाभावेनोदिद्घटितवाक्येऽप्रत्यय इत्यस्य प्रयोजनाभावेन योगविभाग इति भावः । *तत्प्राप्तेति* । जातिपक्षप्राप्तेत्यर्थः । पूर्वोक्त-मपि निषेधकत्वादिपुनर्दार्ढ्यायाह—*गुणाभेदकत्वेनेति* । ननु सूत्र-सत्त्वे जातिपक्षे जातीनाञ्चतुष्ट्वाद् व्यक्तिपक्षे शक्यार्थमादाय च यथास-ङ्ख्यमिष्टं सिद्ध्यति; तदभावे तत् कथमत आह—*एचोऽयवेति* । *वक्ष्यते इति* । तत्रैवेति शेषः । नन्वेवमपि "न य्वाभ्याम्" इत्यादौ पङ्क्तिति पाठे विधेयत्वात्तयोरग्रहणे पङोश्च विधानेऽप्यनिष्टं स्पष्टमेवात

"नय्वाभ्याम्" ( पा०सू०७-३-३ ) इत्यत्र ऐऔ स्वरूपेण पाठ्यौ, "वृद्धिरादैच्" (पा०सू०१-१-१) इत्यत्राप्येङित्येव पाठ्यम् । तत्र गुणसूत्रे च परस्परसवर्णसञ्ज्ञावादिमते चतुर्णां ग्रहणसत्त्वात् । अत्रैतत्सूत्रवैयर्थ्योपन्यासेन तन्मूलकस्य गुणवृद्धिसञ्ज्ञाविधौ प्रत्याहारद्वयग्रहणवैयर्थ्यस्य "प्लुतावैचः" (पा०सू०८-२-१०६) "एचोऽप्रगृह्यस्य" (पा०सू०८-२-१०७) इत्यत्र तद्ग्रहणवैयर्थ्यस्य च सङ्ग्रहो बोध्यः । प्रयत्नभेदेनाप्यसावर्ण्यमेतयोः प्रागुक्तं न विस्मर्तव्यम् ।

यद्यपीति । इदं व्यक्तिपक्षे । "वर्णानामुपदेशस्तावदुपदेशोत्तरकालेत्सञ्ज्ञा तदुत्तरकालम् "आदिरन्त्येन" (पा०सू०१-१-७१) इति प्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा तदुत्तरकालम् "अणुदित्" (पा०सू०१-१-६९) इति, एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति, न चात्रेकारः शकारं गृह्णाति" इति "नाऽऽज्झलौ" (पा०सू०१-१-१०) इतिसूत्रभाष्योक्तवाक्यापरिसमाप्तिन्यायादित्यर्थः । अयं भावः—"आदिरन्त्येन"

---

आह-*न चेति* । *एङित्येव पाठ्यमिति* । 'वृद्धिरादेङ्' 'अदेङ्गुण' इति सूत्रद्वयमस्तु चादेङ उत्तरत्राप्यनुवृत्तिरस्त्विति भावः । एङिति पाठे फलभेदमाशङ्क्याह-*तत्रेति* । वृद्धिसंज्ञासूत्र इत्यर्थः । *गुणसूत्रे*-गुणसंज्ञासूत्रे । *तद्ग्रहणवैयर्थ्यस्य*-ऐजचोर्ग्रहणवैयर्थ्यस्य । स्वमतेनैचः सावर्ण्यं निराकरोति-*प्रयत्नभेदेनेति* । विवृततराविवृततमकृतभेदेनेत्यर्थः । जातिपक्षेऽण्ग्रहणाभावात्सत्यपि ह्रकाराकारयोः सावर्ण्ये न ग्रहणमत आह-*इदं व्यक्ति पक्षे इति* । निषेधशास्त्र आक्षरसमाम्नायिकानामेव ग्रहणे हेतुमाह-*वर्णानामित्यादि* । *उपदेशः*-आद्योच्चारणम् । *तावत्*-आदौ । *समुदितेन*-उपजीव्योपजीवकभावापन्नविषयताप्रयोजकत्वात्मकैकवाक्यतापन्नेन । *वाक्येन*-अणुदित्सूत्रात्मकेन । *वाक्यापरिसमाप्तिन्यायादिति* । वाक्यार्थज्ञाने पदार्थज्ञानं कारणमित्येतन्मूलकन्यायादित्यर्थः । ननु समुदायमध्ये निषेधस्याप्रवेशात्कथं तेन तत्रैतद्ग्रहणमत आह—*अयं

(पा०सू०१-१-७१) इति प्रत्याहारसिद्धौ "नाऽऽज्झलौ" (पा०सू० १-१-१०) इत्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णसञ्ज्ञाबोध्यनिश्चये "अणुदित्" (पा०सू०१-१-६९) सूत्रेण तावतां ग्रहणं बोधनीयम् । अन्यथा बाधकसम्भावनया "तुल्या-स्य" (पा०सू०१-१-९) सूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन "अणु-दित्" (पा०सू०१-१-६९) शाब्दजबोधानापत्तिः । न चैतद्वा-क्यार्थबोधात्प्राक् तन्निश्चय इति ।

होढ इति । हकारेणाऽऽकारग्रहणे सति यद्यत्प्राप्नोति तस्य सर्वस्याप्युपलक्षणमिदम् । ननु यण्सवर्णिनामप्रसिद्धेरज्ग्रहणेनैव सिद्धेऽण्ग्रहणं व्यर्थमत आह—यवला इति । "अमोऽनुना-सिका न ह्रौ" इति शिक्षोक्तेर्यण इति नोक्तम् । तेन 'सय्यँन्ता' इत्यादौ परसवर्णनिष्पन्नानुनासिकयवलानाम् "अनचि च" (पा० सू०८-४-४७) इति द्वित्वं सिद्ध्यति । "हलो यमाम्" (पा०सू० ८-४-६४) इति लोपस्तु वैकल्पिकः । अत्रेदं बोद्ध्यम्— व्यक्तिः पदार्थो गुणा भेदका इत्यभिमानेनात्र सूत्रेऽण्ग्रहणमिति ।

---

भाव इति* । *बोधानापत्तिरिति* । अप्रामाण्यज्ञानानास्कन्दितबोधा नापत्तिरित्यर्थः । *एतद्वाक्यार्थबोधात्*—अणुदित्सूत्रवाक्यार्थबोधा त् । *तन्निश्चयः*—आकारादावच्पदबोध्यत्वनिश्चयः ।

ननु विश्वपाभिरित्यत्र ढत्वसंयोगान्तलोपयोः प्राप्तौ ढत्वस्यासि द्धत्वात्संयोगान्तलोप एव स्यादिति ढत्वमित्यनुपपन्नमत आह— *ह कारेणेत्यादि* । *अण्ग्रहणं व्यर्थमिति* । न च व्यक्तिपक्षे यणादिप देनाक्षरसमाम्नायिकमात्रस्य ग्रहणं स्यादित्यन्येषां निरनुनासिकानां यादीनां ग्रहणायाण्ग्रहणमस्त्विति वाच्यम्? आक्षरसमाम्नायिकेषु कार्यबाधात्सामर्थ्यात्कस्यापि व्यक्त्यन्तरस्य ग्रहणस्य वक्तव्यतया तत्र विनिगमनाविरहात्सर्वासां निरनुनासिकव्यक्तीनां ग्रहणस्यान्यथैव स-म्भवात् । *द्वित्वं सिध्यतीति* । प्राथमिकपरसवर्णस्य फलत्वेनोपन्या-सस्तु न कृतः, तत्र सवर्णसंज्ञामात्रस्योपयोगात् । *हलो यमामिति* । *लोप इति* । अस्य वैकल्पिकत्वेऽण्ग्रहणमेव मानम् ।

"अतो भिसः" (पा०सू०७-१-९) इत्यादौ तपरकरणात् "सहिवहोः" (पा०सू०६-३-११२) इति सूत्रस्थवर्णग्रहणाद्व्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषावित्याह—तः पर इत्यादिना । वर्णग्रहणे तु तत्सामर्थ्यादत्त्वावच्छिन्नसवर्णग्रहणबोधनेन

---

तपरः । *वर्णग्रहणसामर्थ्यादिति* । एतच्च "सहिवहोः" इत्यत्र वर्णग्रहणसामर्थ्यादुदवोढामित्यत्र ओत्वसाधनेन भाष्यकृता ध्वनितम्, कैयटेन च स्पष्टीकृतम् । सिद्धान्ते वर्णग्रहणस्य भाष्ये प्रत्याख्यानादाह—*व्याख्यानाच्चेति* ।

केचित्तु-'सहिवहोरुतस्य' 'सहिवहोरूमस्य' 'अस्य सहिवहोरोद्' इतिन्यासैर्वर्णग्रहणेनोक्तार्थे ज्ञापितेऽपि स्वांशे चारितार्थ्याभावादाह—*व्याख्यानाच्चेती*त्याहुः । व्याख्यानञ्च—एओङ्सूत्रे भाष्ये कण्ठरवेण समासद्वयस्य प्रतिपादनमेव बोध्यम् । "वृद्धिरादैच्" इति तपरत्वं व्याख्यानमित्यन्ये । *पञ्चमीतत्पुरुषेति* । अत्र तत्पुरुषपदेनाचारकिबन्तेन "सुप् सुपा" इति समासो गृह्यते । उत्तरपदार्थप्रधानत्वञ्च-किवर्थतावच्छेदकप्रयोजकं बोध्यम् । कष्टकल्पनाऽवष्टम्भस्तु पञ्चमीति योगविभागस्यानाकरत्वाद्बोध्यः । अत्र पञ्चम्यर्थान्यपदार्थके बहुव्रीहौ विवदन्ते बहवः;अवयववाचिपरशब्दस्य षष्ठ्यर्थेऽन्यपदार्थे बहुव्रीहिः "अतो भिस" इत्यादौ विशिष्टाद्विभक्त्युत्पत्तिदर्शनेन लाभात् । अन्यथाऽकारमात्रस्यैवार्थबोधकत्वप्रतीतेर्विशिष्टात्तदुत्पत्त्यनुपपत्तेः । न च अकारादिना स्वसवर्णसमकालबोधने तकारस्य तात्पर्यग्राहकत्वकल्पनेन परिष्कृतार्थवत्त्वस्य विशिष्टे सत्त्वान्नानुपपत्तिरिति वाच्यम्? एवं विभक्त्युपपादनेऽपि कर्तृप्रत्ययान्तकर्मप्रत्ययान्तप्रकृतिकप्रथमान्तानामेवान्यपदार्थसामान्ये बहुव्रीहिः "अनेकमन्यपदार्थे" इत्यत्र भाष्य उपसंख्यातत्वेनात्र बहुव्रीह्यसम्भवस्य दुर्वारत्वात् । षष्ठ्यर्थेऽन्यपदार्थे तु नासम्भवो बहुव्रीहेः; मत्वर्थे तस्मिन् प्रथमान्तसामान्यानां विशिष्य तत्रैवोपसंख्यातत्वात् । मत्वर्थौ हि-षष्ठ्यर्थसप्तम्यर्थौ । अत एव पीताम्बरवीरपुरुषादिषु नानुपपत्तिः । न चैवं तपरस्य अत इत्यादेः सवर्णसमकालाप्रसिद्ध्या दोष इति वाच्यम्? अण्ग्रहणानुवृत्तिकल्पे तपरः स्वघटकाणसवर्णसमकालग्राहक इत्यर्थेनादोषात् ।

भाष्ये तु—तः परो यस्मादित्येव विग्रहो दर्शितः । तमनुसृत्यैव मूलकृतोऽपि प्रवृत्तिरिति बोध्यम् । पूर्वपक्षिभाष्यरीत्या वर्णग्रहणस्य

तपरसूत्राप्रवृत्तिः। आद्योदाहरणम् "अतो भिसः" (पा०सू०७-१-९) इति। अन्त्योदाहरणं "वृद्धिरादैच्"(पा०सू० १-१-१) इति। यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकालस्तत्सवर्णो वा प्रसिद्धस्तथाऽपि तपरकरणाद् भाष्यप्रामाण्याच्च तात्परशब्दबोध्यो वर्णः स्वसमकालग्राहक इत्यर्थेनादोषः। इदं च विध्यर्थमेवाणग्रहणाननुवृत्तेः। गुणानां भेदकतयाऽनणि विधित्वेऽपि "वृद्धिरादैच्" (पा०सू०१·१·१) इत्यादावाकारांशे सावकाशेनानेन "अतो भिस" (पा०सू०७·१·९) इत्यादौ परत्वेन "अणुदित्" (पा०सू०१·१·६९)

---

ज्ञापनोत्तरं स्वांशे चारितार्थ्यं साधयति-*वर्णग्रहणे त्विति*। *न च तत्समकाल इति*। विशिष्टे संज्ञात्वाभ्युपगम इदम्। *तपरकरणादिति*। "वृद्धिरादैच्" इत्यत्र "अदेङ्" इत्यत्र चेत्यर्थः। ननु अस्याद्येऽसन्देहार्थत्वादन्त्ये पूर्वत्र कृतार्थत्वाच्च सामर्थ्याभावादेवमर्थोऽयुक्त इत्यत आह—*भाष्यप्रामाण्याच्चेति*। "एओङ्"सूत्रस्थभाष्यप्रामाण्यादित्यर्थः। *शब्दबोध्यो वर्ण इति*। इदमयुक्तम्; उच्चारितस्यैव प्रत्यायकत्वात्। तात्परशब्दः स्वबोध्यसमकालग्राहक इति तूचितमित्याचारिणः।

वस्तुतस्तु तात्परशब्दः स्वबोध्यसवर्णो यः तपरवर्णसमकालो वर्णस्तस्य ग्राहक इत्यर्थोऽभ्युपेयः। अन्यथा तपरैतच्छब्दबोध्यत्वस्य प्लुतेऽपि सत्त्वात्तत्समकालग्रहणस्याण्ग्रहणाननुवृत्तिपक्षे दुर्वारत्वात्। एवं स्वीकृते तु प्लुतस्य तपरशब्दबोध्यत्वेऽपि तपरैकारवर्णसमकालत्वाभावान्न तत्सवर्णग्रहणम्। तात्परवर्णस्तु प्रत्यासत्त्या यादृशतकारात्परस्य ग्राहकत्वं वक्तव्यं तादृशतकारात्पर एव गृह्यते। तेन उदासीनतपरवर्णसमकालत्वमादाय नातिव्याप्तिः प्लुतैकारादाविति बोध्यम्। *विध्यर्थमिति*। व्यक्तिपक्ष इति भावः। यद्यपि अणनुवृत्तौ नियामकत्वसम्भवः; तथाऽपि लाघवान्नियमतो विधेर्ज्यायस्त्वमित्याह—*अण्ग्रहणेति*। वस्तुतस्तु एतदनुवृत्तावप्यनवकाशत्वाद्बाधनद्वारा विधित्वसम्भवादयं हेतुश्चिन्त्यः। *सावकाशेनेति*। प्लुतादेर्भिन्नकालस्य व्यावृत्त्या सानुनासिकस्य ग्रहणेन चेति भावः। *अणुदित्सूत्रबाध इति*। यद्यप्यस्याकारस्याण्त्वाभावादिदमनुपपन्नं; तथाऽपि "वृद्धिरादैज्" इत्यत्र चकारचिह्नेन तत्प्रत्यभिज्ञया प्राप्ताणुदित्सूत्रबाधोपलक्षणेन नानु-

सूत्रबाधः । संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टतयेह विरोधस्य सत्त्वात् । गुणानामभेदकत्वे त्वनवकाशत्वाद् बाध इति बोद्ध्यम् । अत्रावध्यवधिमतोः साजात्येन वर्णस्यैव सञ्ज्ञात्वेऽपि विशिष्टाद्विभक्त्युत्पत्तिः सौत्रत्वाद् बोध्या । तत्कालस्येत्यस्य तदुच्चारणकालसमकालस्येत्यर्थस्तदाह—समकालस्यैवेति । एवकारो न्यायसिद्धबाध्यबाधकभावस्यानुवादक इति भावः । जातिपक्षे तु नियमार्थमेव सवर्णग्रहणानुवृत्तेः ।

---

पपत्तिः । ननु विरोधे सति परेण बाधो विप्रतिषेधसूत्रेण भवति; न चेह तथेत्यत आह—*संख्याकृतेति* । *परस्परपरिहारेणैवेति* । परस्परविरोधेनैवेत्यर्थः । *दृष्टतयेति* । अत एव "न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते" इतिभाष्यं सङ्गच्छते । *विरोधस्येति* । षट्त्वाष्टादशत्वयोरित्यादिः ।

केचित्तु-आकडाराधिकारादन्यत्र संज्ञयोर्बाध्यबाधकभावविरहादिदं चिन्त्यम् । न च स्वतोऽविरुद्धयोस्तद्बहिर्भूतयोर्बाध्यबाधकभावाभावेऽपि स्वतो विरुद्धयोस्तद्बहिर्भूतयोरपि सोऽस्त्येवेति वाच्यम् ? सङ्कोचे मानाभावात् ।

किञ्च तपरः षण्णां संज्ञा; अण् त्वष्टादशानां संज्ञेत्यनुक्त्या सवर्णग्राहकत्वतात्कालिकसवर्णग्राहकत्वयोरविरोधेन च विप्रतिषेधशास्त्राप्रवृत्तिः । एतेन गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध इत्यग्रिमग्रन्थोऽप्यपास्तः । विरुद्धसंख्यासमनियतधर्मयोस्तु न विरोधः; गौडपदेन ब्राह्मणपञ्चकवृत्तिधर्मविशिष्टस्य ब्राह्मणैकवृत्तिधर्मविशिष्टस्य च बोधात् । तस्मादण्ग्रहणानुवृत्त्या नियमार्थत्वमेव युक्तमित्याहुः ।

अत्रेदं वक्तव्यम्-उभयोर्नित्ययोः शक्ययोः समावेशसम्भवेऽपि तपरसूत्राणुदित्सूत्रयोस्तात्पर्यनिर्णायकत्वेन विरोधाद्बाधकत्वं सम्भवत्येवेति । *अनवकाशत्वाद्बाध इति* । गुणाभेदकत्वेन प्राप्तस्यैवेति बोध्यम् । *सौत्रत्वादिति* । वस्तुतस्तु पारिभाषिकार्थवत्त्वस्य विशिष्ट एव सत्त्वात्सौत्रत्वाश्रयणं विफलमिति बोध्यम् । षष्ठ्यर्थोऽन्यपदार्थ इति तु भाष्यानुक्तत्वादेव तिरस्कृतमिति तु न विस्मर्तव्यम् । ननु विध्यर्थत्वे मूल एवकारो व्यर्थ इत्यत आह-*एवकारस्त्विति* । भाष्यमतमाह-*जातिपक्ष इति* । *नियमार्थमिति* । तपरः सवर्णस्य चेत् सर्वस्य जात्याश्रयतया ग्राहकस्तर्हि समकालस्यैवेति नियमाद्यद्-

एवं गुणानामभेदकत्वमिति "वृद्धिरादैच्" (पा०सू०१-१-१) इति सूत्रभाष्यसम्मतसिद्धान्तपक्षेऽपि नियमार्थमेव । इदम् "आद् गुणः" (पा०सू०६-१-८७) इत्यादौ त्रिभक्तितकारे न प्रवर्त्तते । "उपसर्गादृति" (पा०सू०६-१-९१) इति तपरकरणात् । "ऋदोरप्" (पा०सू० ३-३-५७) इत्यादौ दकार एवेति न दोषः । स च पञ्चमीसमासाभावे तकार इवोच्चारणार्थो मुखसुखार्थो

---

व्यक्तिमादाय जातिनिर्देशस्तद्भिन्नकालव्यक्तिगतजात्यग्रह इति फलतीति भावः । ननु स्वसमकालानां भिन्नजातीनामिकारादीनां ग्रहणेन विध्यर्थतैव कस्मान्नेत्यत आह-*सवर्णेति* । यद्यपि सवर्णग्रहणानुवृत्तिर्विधिपक्षेऽप्यस्ति; तथाऽपि नियमपक्षस्ता विना नैव सम्भवतीत्यभिप्रायेण तदनुवृत्तिरुक्तेति बोध्यम् । ननु जातिपक्षेऽपि गुणानां भेदकत्वेन नियामकत्वं दुर्घटमत आह-*एवञ्चेति* । ननु जातिपक्षाश्रयणसामर्थ्यादेव गुणान्तरयुक्तस्यापि ग्रहणं भविष्यति; अन्यथा ह्रस्वत्वादिगुणानामपि भेदकत्वात्तत्पक्षाश्रयणं व्यर्थं स्यादिति किमर्थं गुणाभेदकत्वं नियमार्थमङ्गीक्रियतेऽत आह—*सिद्धान्तेति* । तथा च तस्यैव सिद्धान्तभूतत्वेनैवोपपत्तौ जातिपक्षाश्रयणसामर्थ्योपवर्णनं निष्फलमिति सूचितम् । *पक्षेऽपीति* । अपिः-समुच्चये, तेन जातिपक्षसङ्ग्रहः । एवञ्च गुणाभेदकत्वमिति पक्षसहिते जातिपक्षे सूत्रं नियमार्थमिति तात्पर्यमाहुरिति भट्टाः । एवञ्च गुणानामभेदकत्वमित्यादिग्रन्थः गुणानामभेदकत्वे स्वनवकाशत्वाद् बाध इति पूर्वग्रन्थेन विरुद्धः; तत्र विधित्वमङ्गीकृत्यानवकाशत्वाद् बाधोक्तेरित्याहुराचारिणः । ननु सति पञ्चमीसमासे "ऋदोरप्" इतिसूत्रे 'यवः' 'स्तवः' इत्यत्रैव स्यात्; न 'लवः' 'पवः' इत्यत्रेत्यत आह—*ऋदोराविति* । *पञ्चमीसमासाभाव इति* ।

अयं भावः-भाष्ये तपरशब्दे बहुव्रीहिमात्रं बुद्ध्वा 'खट्वोढः' 'खट्वैतिकायनः' इत्यादौ त्रिमात्राचतुर्मात्राणां तथाभूता आदेशाः कुतो न स्युरित्याशङ्क्य "अकः सवर्णे" इत्यत्र दीर्घ इति योगं विभज्यैकादेशो दीर्घ एव भवतीत्यर्थेन परिहृत्य अथवेत्यादिना तात्परस्तपर इति पञ्चमीसमासेन परिहृतम । तथा च "ऋदोरप्" इत्यत्र तकारो यथा ऋकारस्य स्पष्टमुच्चारणार्थो मुखसुखार्थो वाऽस्ति, तथा पञ्चमीसमा-

वा । "तपर" (पा०सू०१-१-७०) सूत्रे दकारप्रश्लेषपक्षे तु धकारादिस्थानिको दकारो बोध्यः ।

वृद्धिरा (पा०सू०१-१-१) । वृद्धि, आत्, ऐच् इति पदत्रयमिति न समासान्तादिप्रवृत्तिशङ्का । तपरकरणमसन्देहार्थतया पूर्वार्थं प्रकृतसूत्रे भाष्येऽत्र शास्त्रे गुणानामभेदकत्वं ज्ञापकादाश्रित्य सवर्णग्रहणार्थत्वाभावस्योक्तत्वात् । 'कृष्णौत्कण्ठ्यं' 'गङ्गौघः' इत्यादौ त्रिमात्रव्यावृत्तये परार्थमपि । वृद्धिशब्दोऽत्र पदपरोऽर्थपरत्वासम्भवात् । आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थः । पदपदार्थयोस्तादात्म्यस्याङ्गीकारात् ।

---

सकल्पे दकारोऽपीति । *दकारप्रश्लेषपक्षे त्विति* । अयं "तित्स्वरितम्" इतिसूत्रे भाष्ये "तितिप्रत्ययग्रहणं कर्त्तव्यम्" इति वार्त्तिकप्रत्याख्यानावसर उक्तः । *धकारादिस्थानिक इति* । तथा च जश्त्वस्यासिद्धत्वान्न तपरसूत्रप्रवृत्तिरिति भावः ।

*वृद्धिरादैच्* । *समासान्तादिप्रवृत्तिशङ्केति* । समाहारद्वन्द्वे "द्वन्द्वाच्चुदषहान्तात्" इत्यनेनेति भावः । इतरेतरयोगद्वन्द्वे तु द्विवचनापत्तिरिति बोध्यम् । अत एव भाष्ये कुत्वमात्रमाशङ्क्य अयस्मयादित्वाद्भत्वेन समाहितम् । वृद्धिशब्दोऽत्रावृत्त्योभाभ्यां सम्बध्यः । *असन्देहार्थेति* । तकाराभावे वृद्धेर्दुर्वारत्वेन ऐजिति रूपे सन्देहः स्पष्ट एवेति भावः । न च संहिताया अविवक्षया वृद्ध्यभावेनासन्देहः सिद्ध इति वाच्यम् ? एकत्र सूत्रे संहिताया अविवक्षायां सूत्रभेदापत्तेः प्रागुपपादितत्वात् । *पूर्वार्थमिति* । अत एवादित्यस्य प्रातिपदिकत्वेन पदत्वाज्जश्त्वं सिद्ध्यतीति भावः । ननु प्लुतव्यावृत्त्यर्थत्वेन पूर्वार्थतयाऽपि सफलत्वसम्भवेनासन्देहार्थतयेत्यनुपपन्नमिति चेद्, न । आकारस्यानण्त्वेनाणुदित्सूत्राप्रवृत्त्या तद्व्यावृत्त्यर्थत्वाभावात् । नन्वेवमपि असन्देहार्थतयेति कुतः गुणानां भेदकत्वेन समकालानां षण्णां स्वसवर्णानां ग्राहकत्वस्यैव सम्भवादत आह—*प्रकृतेति* । "वृद्धिरादैच्" इत्यत्रेत्यर्थः । *अत्र*—व्याकरणे । *ज्ञापकात्*-"अनुदात्त" इत्यत्रोदात्तग्रहणात् । *परार्थमपीति* । पञ्चमीसमासाश्रयणादिति भावः । *अर्थपरत्वासम्भवादिति* । अर्थे वाचकत्वासम्भवादित्यर्थः । *वृद्धिपदाभिन्ना इति* । अभेद एव शक्तिपदार्थ इतितत्त्वम् । *तादात्म्या-

"रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः ।"

---

ङ्गीकारादिति* । नन्वेवं वह्निशब्दोच्चारणे मुखे दाहापत्तिः; शब्दस्यावच्छेदकतया विद्यमानत्वे तत्तादात्म्यापन्नस्य वह्नेरपि सद्भावादिति चेद्, न । भेदसहिष्णोरभेदस्य स्वीकारात् । अर्थाद् भेदाभेदयोर्मध्ये भेदो व्यावहारिकः; अभेदः प्रातिभासिको न तु समसत्ताकौ, विरोधात्।

परे तु-वस्तुतोऽभेद एवेति तात्पर्यम्, न च मुखे दाहापत्तिः ? दाहं प्रति वह्नेः संयोगेनैव हेतुत्वेनावच्छेदकतया तत्सद्भावेऽपि संयोगेन तदभावात् । न हि येन केनापि सम्बन्धेन वर्त्तमानं वस्तु क्वचिदपि कारणं; किन्तु कारणतावच्छेदकसम्बन्धेन सदेव । कथमन्यथा शब्दार्थयोर्भेदं मन्यमानानां तार्किकाणामपि मते मुखे कालिकेन सताऽग्निना प्रसक्तो दाहो निराक्रियेत । अत एव शब्दस्य प्रश्नेऽपि गौरित्युत्तरम् अर्थस्य प्रश्नेऽपि चेति सङ्गच्छते । अत एव च संज्ञासंज्ञिनोः समानाधिकरणविभक्त्यन्तता स्वरसतः सङ्गच्छते । नन्वेवं घटस्य चाक्षुषत्वाद् घटशब्दस्यापि तदापत्तिरिति चेद्, न । इष्टापत्तेः । परन्तु यथा घटादौ गन्धवत्त्वे सत्यपि घटत्वादिनैव चाक्षुषत्वं न तु गन्धवत्त्वादिनाऽपि, तथा घटत्वेनैव न तु घटशब्दत्वेन, तयोर्भेदोपगमात् । 'येनेन्द्रियेण यद् गृह्यते' इतिनियमास्वीकाराच्च । न चैवमपि घटशब्दं पश्यामीति घटं शृणोमीति चानुव्यवसाय आपद्येतेति वाच्यम् ? घटशब्दत्वे चाक्षुषस्य घटत्वे श्रावणस्य च प्रत्यक्षस्याभावेन तेन तेन रूपेण तादृशतादृशप्रत्यक्षविरहेण तथाविधानुव्यवसायासम्भवात् । न च शब्दानां नित्यत्वेऽनित्यत्वे वा तादात्म्यं दुरुपपादम् । आद्ये नित्यानित्ययोश्शब्दार्थयोरैक्यासम्भवात् । अन्त्येऽपि शब्दानां क्षणिकत्वेनार्थानां चिरन्तनत्वेन तदसम्भवाच्चेति वाच्यम् ? यथा घटे नष्टे मृदस्तद्व्यक्तित्वेन घटत्वेन वा ध्वंसप्रतियोगित्वं न तु मृत्त्वेनापि । एवमिहापि शब्दानित्यत्वकल्पे घटादीनां तद्व्यक्तित्वेनैव ध्वंसप्रतियोगित्वं न तु घटशब्दत्वेनापीत्यस्य अनित्यत्वे शब्दानां शब्दत्वेनैव क्षणिकत्वं न तु घटत्वादिनाऽपीत्यस्य च कल्पनेनादोषात् । न चैवमपि वह्निशब्दाद्दाहो जात इति प्रतीत्यापत्तिरिति वाच्यम् ? तादृशप्रतीतिवारणाय वह्निशब्दत्वे दाहजनकतावच्छेदकत्वाकल्पनादित्याहुः ।

*रामेति* । अस्योत्तरार्द्धन्तु 'शौर्यभङ्गो रावणस्य मदभङ्गश्च वा-

इत्यादौ तयोरभेदप्रतीतेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः । वृद्धिशब्दस्य सञ्ज्ञात्वं तु व्याख्यानात् । विधेयत्वेऽपि तस्य पूर्वपाठो मङ्गलार्थः । "अपृक्त एकाल्" (पा०सू०१-२-४२) इत्यादौ तथाकरणं विधेयस्य प्रथमं प्रयोगेऽसाधुत्वभ्रमनिवारणायेति भाष्ये स्पष्टम् । सर्वशब्दानां सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया सञ्ज्ञासूत्राणामज्ञातशक्तिज्ञापकतया विधित्वम् । किञ्च "सर्वे सर्वार्थाः" इत्यभ्युपगमो योगिदृष्ट्या नास्मदृष्ट्या, सर्वशब्दानामर्थानाञ्च विशिष्यज्ञानाभावात् । सा-

---

लिनः' इति । *इत्यादाविति* । आदिना 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यस्य सङ्ग्रहः । *अन्यत्रेति* । मञ्जूषायामित्यर्थः । *व्याख्यानादिति* । एकस्यानेकसंज्ञाकरणे प्रयोजनाभावरूपादित्यर्थः; लघ्वर्थं संज्ञाप्रणनात् । ननु "यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्" इत्यभियुक्तोक्तेरिह वृद्धिशब्दस्य पूर्वं प्रयोगोऽनुपपन्न इत्यत आह—*विधेयत्वेऽपीति* । *मङ्गलार्थ इति* । "मङ्गलादीनि शास्त्राणि प्रथन्ते" इति भाष्योक्तेः । *असाधुत्वभ्रमवारणायेति* । तथा चाभियुक्तोक्त्या उद्देश्यस्य प्रथमं प्रयोगे युक्तत्वमात्रं बोध्यते; न तु विधेयस्य तथाप्रयोगेऽसाधुत्वमपीति भावः । संज्ञासूत्राणां नियामकत्वमिति प्राचीनोक्तं कटाक्षयन्नाह—*सर्वशब्दानामिति* । *अज्ञातशक्तिज्ञापकतयेति* । यद्यपि शब्दार्थयोः "सिद्धे शब्दार्थसम्बन्धे" इति भाष्यात्सम्बन्धः सिद्ध एव; तथाऽपि अस्य पदस्यात्रार्थे सम्बन्ध इत्याकारकस्य सम्बन्धज्ञानस्य घटादिषु वृद्धव्यवहारो यथा प्रयोजकस्तथा संज्ञासूत्रं वृद्ध्यादिपदशक्तिज्ञापकमिति भावः । *विशिष्यज्ञानाभावादिति* । तद्धर्मावच्छिन्नविषयकबुद्धिं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानाधीनोपस्थितेर्हेतुत्वेन विशेषधर्मपुरस्कारेणास्मदादीनां सकलपदार्थज्ञानासम्भवेन तद्धर्मावच्छिन्ने शक्तिग्रहासम्भव इति भावः । ननु विशिष्यज्ञानासम्भवेऽपि सामान्येनार्थत्वरूपेण यावदर्थज्ञानसम्भवेन सामान्यधर्मावच्छिन्नायां व्यक्तौ शक्तिग्रहः स्यादेवेत्याशङ्क्याह—*सामान्यज्ञानन्त्विति* । *न बोधोपयोगीति* । विशेषरूपेण प्रक्रियानिर्वाहकबोधोपयोगिनेत्यर्थः ।

अयं भावः—इदं वृद्धिपदमर्थबोधकम्, पदत्वात्, गोपदवदित्या-

मान्यतस्तथा ज्ञानञ्च न बोधोपयोगि । शास्त्रं त्वस्मदाद्युद्देशेनैव प्रवृत्तमिति बोद्धव्यम् । तत्रैव सङ्केतग्राहकशास्त्रकरणं स्वेच्छयैवेत्येषां यदृच्छाशब्दत्वेन व्यवहारः, स्वेच्छया सञ्ज्ञाः क्रियन्त इति च । एतदुपदेशरूपसङ्केतात्प्राक् तत्र सञ्ज्ञात्वाग्रहेण तासामनित्यत्वव्यव-

---

कारकानुमित्यात्मकशाक्तिग्रहेणार्थत्वेनैव बोधः स्यात; न तु आदै-च्त्वादिनाऽपि । अत एव न द्रव्यत्वेन गृहीतशक्तिकाद् द्रव्य पदाद् घटत्वादिविशेषधर्मप्रकारको बोधः । न चास्तु अर्थत्वेन सामान्यरूपेणैवादैजादेर्बोधो वृद्धिपदादिति वाच्यम् ? तथा सति "वृद्धिरेचि" इत्यादिना घटाद्यादेशस्याप्यापत्तेः । न च यथा घटमानयेत्युक्तौ प्रकरणादिना घटविशेषविषयकबोधतात्पर्यनिर्णये सामान्यरूपेण घटविशेषस्य बोधो भवति, तथा वृद्ध्यादिपदादपि सामान्यरूपेणादैचामेव बोधः स्यादिति वाच्यम् ? तात्पर्यग्रहार्थमेव सूत्रास्यावश्यकत्वात् । न चैवमगृहीततात्पर्यग्राहकत्वेनेत्येव वाच्येऽगृहीतशक्तीति ग्रन्थासङ्गतिरिति वाच्यम् ? तस्य नियमार्थत्वखण्डनमात्रे तात्पर्यात् । ननु योगिनां विशिष्य तत्तद्रूपेण ज्ञानसम्भवात्तदभिप्रायेण नियमार्थकत्वमस्त्वित्यत आह—*शास्त्रं त्विति* । *अस्मदाद्युद्देशेनेति* । प्राधान्येनेति शेषः । तेन योगिनामपि शास्त्रप्रक्रियास्मरणपूर्वकशब्दप्रयोगे धर्मोत्पत्त्या कथञ्चित्तदर्थत्वेऽपि न क्षतिः ।

अन्ये तु-वृद्ध्यादिपदे पदत्वेनार्थबोधे कत्वसिद्धौ वृद्ध्यादिपदमादैआदिबोधकम्; आदैजादीतराबोधकत्वे सति अर्थबोधकत्वादित्यनुमित्यात्मकशक्तिज्ञानेन विशेषरूपेण बोधसम्भवान्नियमार्थमेवेदमित्याहुः, तन्न । आदैजादीतराबोधकत्वस्येदानीमनिर्णयेन हेतोरसिद्धेः । *तत्रैव*-आदैजाद्यर्थ एव । न त्वन्यत्रार्थे इत्यत्रेच्छैव नियामिकेति भावः । *एषां*-संज्ञाशब्दानाम् । *इति चेति* । व्यवहार इत्यस्यानुषङ्गः । ननु शब्दनिष्ठबोधजनकताया नित्यत्वात्कथं संज्ञानामाधुनिकत्वव्यवहार इत्यत आह—*एतदुपदेशात्प्रागिति* । *संज्ञात्वाग्रहादिति* । तथा च बोधजनकत्वात्मकसंज्ञात्वज्ञानस्याधुनिकत्वेनानित्यत्वात्तद्विषयस्य संज्ञात्वस्यापि तद्व्यवहारः; तदाश्रयत्वात्तत्संज्ञानामपि तद्व्यवहारो भाक्त इति भावः । *अत एवेति* । संज्ञाशास्त्राणां नियमार्थत्वाभावादेवेत्यर्थः । अन्यथा नियमार्थत्वे तस्य न्यायस्य नियमसिद्धत्वात्तन्मूलत्वोक्तिरसङ्गता स्यादिति भावः ।

हारः । अत एव तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणादन्यार्थाग्रहणरूपनियमः कृत्रिमाकृत्रिमन्यायमूलतयोक्तः संख्यासञ्ज्ञासूत्रे भाष्ये । आर्थिकमेवामुं नियममादाय सञ्ज्ञासूत्रेषु नियमत्वव्यवहारो व्यवहाराय नियमः सञ्ज्ञायाः साञ्ज्ञिनि क्वचिदित्यादिना कृतः । वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थसम्बन्धनित्यताहानिः । आसाञ्च शिष्टप्रयुक्तत्वात्साधुत्वमपिसन्यत्र विस्तरः । कार्यकालपक्षे "मृजेर्वृद्धिः" (पा०सू०७-२-११४) इत्यादौ वृद्धिपदार्थजिज्ञासायां "वृद्धिरादैच्" (पा०सू०१-१-१) इत्युपस्थितया तदर्थबोधरूपे शक्तिग्रहे वृत्ते विधिवाक्यार्थबोधः । अत एव "व्य-

---

केचित्तु-*अत एव*-इत्यस्य संज्ञानामनित्यत्वादेवेत्यर्थः । *संज्ञाकरणेति* । नित्यत्वे तु नेदं सम्भवेत्; नित्यानां करणासम्भवात् । किञ्चैवं कृत्रिमत्वमप्यसम्भावि स्यादिति भावमाविश्चकुः । *आर्थिकमिति* । न तु शब्दमर्य्यादालब्धम्; किन्तु तत्र सङ्केतग्राहके कृते तत्तत्सङ्केतज्ञानरूपप्रकरणवशात्तस्यैव बोधो नान्यस्येति फलितमित्यर्थः । *कृत इति* । अस्य हरिणेति शेषः । शब्दार्थसम्बन्धानित्यत्वं स्पष्टतया प्रतिपादयति-*वाचकताबोधकत्वेऽपीत्यादिना* । *तदनुत्पादकत्वात्*-वाचकताऽनुत्पादकत्वात् । ननु टिघुभादीनान्तत्तदर्थे व्याकरणेन साधुत्वाबोधनात्कथं साधुत्वमत आह-*आसाञ्चेति* ।

केचित्तु-संज्ञाविषये यदि यथोद्देशपक्षस्तदा स्वप्रदेश एव वाक्यार्थबोधः; तस्मिन् काले चाविधीयमानत्वात् त्रिमात्रादीनामपि तपरत्वाभावे वृद्धिसंज्ञा स्यात्, तदा खट्वेन्द्रादौ त्रिमात्रादिव्यावृत्त्यर्थं तपरत्वं परार्थमपि सम्भवति । कार्यकालपक्षे तु—यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्येतन्मात्रबोधकत्वेनोपस्थितानामादैचां विधिशास्त्रेण पदैकवाक्यतयाऽन्वयादादैचो भवन्तीत्यर्थो वाच्यः । एवञ्चैचो विधेयतया न सवर्णग्राहकता सम्भव इति न तपरकरणं परार्थमिति । अत एव "अल्लोपोऽन"इत्यत्र यचीत्यस्यान्विशेषणत्वेन 'अनक्तक्ष्णा' इत्यादौ दोषाभावेन "अनन्त्यविकार" इति परिभाषाऽपि न कार्येति लाघवमपीत्याहुः। तान् दूषयितुमुपक्रमते--*कार्यकालपक्ष इत्यादिना* । अपिर्यथोद्देशपक्षसमुच्चायकः । प्रदेशेन सह वाक्यैकवाक्यत्वेऽपि वस्तुतो भिन्नवाक्यतोभयत्र समेति भावः । तत्र तत्र तामाह--*मृजे-

ङः संप्रसारणम्" (पा०सू० ६-१-१३) इति सूत्रे भाष्ये "कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति यचि भमिति" इत्युक्तम्। "ईदूदेद्" (पा०सू०१-१-११) इति सूत्रे भाष्येऽपि "कार्यकालं सञ्ज्ञापरिभाषं, प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति ईदूदेद् द्विवचनं प्रगृह्यमिति" । "निष्ठा" (पा०सू०३-२-१०२) इति सूत्रे कैयटोऽपि "निष्ठेत्युक्ते सञ्ज्ञावाक्यं क्तक्तवतू निष्ठेति स्मर्यते" इत्याह। अत्र पक्षे एकत्र शक्तिग्रहे वृत्तेऽपि तत्प्रदेशस्थस्यैव तत्रार्थे शक्तिरिति सम्भावनया प्रदेशान्तरस्थे बोधो न स्यादिति सर्वप्रदेशेषु तत्तत्पदशक्तिग्रहपूर्वकं विधिवाक्यार्थबोधः। यथोद्देशे तु एकदैव शक्तिग्रहात्सर्वत्र बोध इति विशेषः। एतेन 'कार्यकालपक्षे तपरत्वं स्पष्टार्थमेव। आदैच्पदार्थस्य वृद्धिविशेषणतया विधेयत्वेन सवर्णग्रहणाप्रसक्तेः। यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठते इति क्रमेण सञ्ज्ञासूत्राणामर्थात्' इत्यपास्तमित्यन्यत्र विस्तरः। अत्रातद्भावितानामपि आदैचां ग्रहणं, तेन शालीयादिसिद्धिः।

---

रिति*। *वृत्ते इति*। पदार्थोपस्थितेः सत्त्वादिति शेषः। एवञ्च वाक्यैकवाक्यत्वेऽपि पदैकवाक्यत्वाभावेन तत्र तस्याविधेयत्वं सुस्थमेवेति भावः। ननु अत्रैव किं मानम् ; पदैकवाक्यतया एकदेशोपस्थित्या सम्भवादत आह--*अत एवेति*। संज्ञाशास्त्राणां वाक्यैकवाक्यतयाऽन्वयादेवेत्यर्थः। *इत्याहेति*। पदैकवाक्यतयाऽन्वये तु तत्र तत्र तत्तत्संज्ञासूत्रोपस्थितिकथनं विफलं स्यादिति भावः। अत्र पदैकवाक्यतयाऽन्वय एव ज्यायानिति परिभाषाऽर्थप्रकाशतोऽवसेयम्। *तद्देशस्थस्यैव तत्रार्थे शक्तिरिति*। चिन्त्यमिदम् ; शक्ततावच्छेदकधर्मस्यैव शक्त्यनुमापकत्वेन तज्ज्ञाने शक्तिज्ञानसम्भवात्। तस्मादुपेक्षाबुद्ध्या तत्तच्छक्तिग्रहोद्बोधकसंस्कारनाशाच्छक्ततावच्छेदकज्ञानेऽपि शक्तिग्रहाभावात्सर्वत्र संज्ञासूत्रोपस्थितिरिति वक्तव्यम्। *वृद्धिविशेषणेति*। बहुव्रीहिरयम्। *विधेयत्वेनेति* "वृद्धिर्यस्य" इत्यादावनुवादे तु न दोषः; तादृशलक्ष्याभावादिति भावः। *अतद्भावितानामिति*। वृद्धिशब्देना-

भूवादयो (पा० सू० १-३-१) । क्रियावाचिनः किम् ?

विहितानामित्यर्थः । अत एव "वृद्धिनिमित्तस्य" इतिसूत्रे वृद्धिपदमावर्त्य वृद्धिशब्देन विहितां वृद्धिमाश्रित्य तावद्धार्य इत्यत्र पुंवद्भावसाधनं भाष्योक्तं सङ्गच्छत इति बोध्यम् ।

*भूवादयो* । अथात्र व्यवस्थाप्रकारवाचिनोरादिशब्दयोरेकशेषः। भूवाशब्दयोर्द्वन्द्वश्च कथं ? साहित्याभावात् । "आद्यन्तौ टकितौ" इतिवत्साहित्यावच्छिन्नस्य साहित्यावच्छिन्नेऽन्वयोत्तरं यथासंख्यसूत्रसामर्थ्येनावान्तरबोधमाश्रित्य द्वन्द्वैकशेषयोः कथञ्चित्साधुत्वेऽपि वासादृश्यस्य क्रियावाचकत्वेनैवाश्रयणमिति वक्तुमशक्यम् । सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मेणैव सादृश्यस्य सर्वत्र दृष्टत्वेऽत्रापि वात्वव्यापकासत्त्ववाचित्वेनैव तदाश्रयणापत्तौ क्रियावाचिन इत्यर्थानुपपत्तेः । वासाहचर्यादसत्त्ववचनस्य भुवो ग्रहणम् । असत्त्ववचनभूसाहचर्यात् क्रियावाचिनो वाशब्दस्य ग्रहणम् । क्रियावाचिवासादृश्यस्य क्रियावाचकत्वेन ग्रहणमिति परस्परसाहचर्येण क्रियावाचिन इत्यर्थोपपत्तावपि एकेनैवादिपदेनोपस्थितयोर्व्यवस्थाप्रकारयोरुपस्थितौ क्रमिकत्वाभावेन यथासंख्यसूत्रविषयाभावाद् भूशब्दस्य व्यवस्थायामेव वाशब्दस्य च प्रकार एवान्वय इत्यत्र विनिगमनाविरहेण कदाचिद्विपरीतान्वयापत्तिर्दुर्वारा । किञ्च भूप्रभृतेर्वासदृशेनाभेदान्वयोऽपि न स्यात्; भिन्नभिन्नपदान्तरार्थान्वितयोरेकपदोपस्थितार्थयोरभेदान्वयस्याव्युत्पन्नत्वात् । तथा च भूप्रभृतयो वासदृशाश्च धातुसंज्ञका इत्यर्थापत्तौ विकल्पार्थकवाशब्दस्य हिरुगादेश्च संज्ञापत्तिर्दुर्वारेति चेद्, मैवम् । भूवादयश्च भूवादयश्चेत्येकशेषेणैकत्रादिशब्दस्य व्यवस्थावाचित्वेनापरत्र प्रकारवाचित्वेन भूप्रभृतयो वासदृशा इत्यर्थलाभात् । एवञ्च एकशेषोऽपि स्वरसतः सङ्गच्छते । न च व्यवस्थार्थकादिशब्दघटिते वाग्रहणं, प्रकारवाचकादिशब्दघटिते भूग्रहणञ्च व्यर्थमिति वाच्यम् ? तयोः परस्परसाहचर्यनिर्वाहकत्वात् । अन्यथा भूप्रभृतय इत्युक्तौ कदाचित्पृथ्वीवाचकभ्वादीनामपि संज्ञापत्तेः । वासदृशा इत्युक्तौ कदाचिदसत्त्ववाचित्वेनाऽपि सादृश्यापत्तेश्च । किञ्च एकशेषेणैकपदोपस्थितयोरपि भूप्रभृतिवासदृशयोरभेदान्वयबोधनायापि तयोर्ग्रहणम् । किञ्च सरूपाणामेवैकशेषविधानात्तन्निर्वाहायैव तयोर्ग्रहणम् । एतेन अत्रत्यमनोरमाग्रन्थोऽप्येतत्तात्पर्यक एवेति बोध्यम् । *क्रियावाचिनः किमिति* । इति तु नेति शेषः । एवमग्रे सर्वत्र बोध्यम् ।

विकल्पार्थकवाशब्दस्य निपातस्य धातुत्वेऽप्रातिपदिकत्वात्सुबभावे पदत्वानापत्तेः । तदुक्तौ तु न दोषः । वार्थस्य विकल्पस्य भूतभविष्यत्कालसम्बन्धाभावेन क्रियात्वाभावात् । अस्त्याद्यर्थस्यापि

---

*विकल्पार्थकेति* । याः पश्यसीत्यस्य परित्यागहेतुस्तु शब्दरत्नतोऽवगन्तव्यः । *पदत्वानापत्तेरिति* । तिङुत्पत्तिस्तु नापादिता; कालान्वयितावच्छेदकत्वस्य साध्यत्वरूप एव स्वीकृतत्वेनेह तदभावात् ।

अत्रोदयङ्कराः—इदं चिन्त्यम्; निपातस्यानर्थकस्य प्रातिपदिकत्वं वार्तिककृता बोधितम् । तत्रानर्थकग्रहणं न कर्त्तव्यम्, "निपातः प्रातिपदिकम्" इति प्रकृतसूत्रभाष्येणास्यार्थस्य दूषितत्वात् । तस्मादव्युत्पन्नविव्शब्दस्य धातुत्वे स्वादयो न स्युरिति भाष्योक्तमेव प्रत्युदाहरणीयमित्याहुः ।

भट्टश्रीधरौ तु-अर्थवत्सूत्रेऽथवेत्यादिना "अधिपरी अनर्थकौ" इति ज्ञापकेनानर्थकानामप्यर्थवत्कार्यं भवतीत्युक्त्वा "निपातस्यानर्थकस्य" इतिवार्त्तिकप्रत्याख्यानेन तस्यैकदेशयुक्तित्वबोधनेनेदमपि प्रत्युदाहरणं युक्तमेवेत्याहतुः । *भूतेति* । वर्त्तमानस्याप्युपलक्षणमिदम् । *क्रियात्वाभावादिति* । तथा च कालान्वयितावच्छेदकाविलक्षणरूपवत्त्वं साध्यत्वम् । साध्यत्वेन प्रतीयमानत्वं कालान्वयित्वं वा क्रियात्वमिति फलितम् । "क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका" इति हर्युक्तेः । एतेन न तावद्धात्वर्थत्वं क्रियात्वम्? क्रियावाचित्वज्ञाने सति धातुत्वज्ञानं, धातुत्वज्ञाने च क्रियात्वज्ञानमित्यन्योन्याश्रयात् । नापि लिङ्गसंख्याऽनन्वयित्वं तत्; निपातवाशब्दार्थेऽपि तत्सत्त्वे नोक्तदोषानुद्धारात् । नापि साध्यतया प्रतीयमानत्वं तत्; धात्वर्थे तथात्वस्य निपातार्थे तदभावस्य च शपथैकनिर्णेयत्वादित्यपास्तम् । क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वन्तु न साध्यत्वलक्षणम्; क्रियाघटितत्वेनान्योन्याश्रयात् । किन्तु परिचायकमात्रमिति बोध्यम् ।

अथ किमिदं क्रियावाचकत्वम ? न तावत् क्रियानिरूपितशक्तिपर्याप्त्यधिकरणत्वम्, दरिकर्मकद्राणकर्त्तृतात्पर्यकदरिद्राशब्देऽतिव्याप्तेः । क्रियामुख्यविशेष्यकबोधतात्पर्यकत्वं तदिति चेत्? कर्त्तृक्विबन्तलिडादावव्याप्तेरिति चेत् ? अत्रोच्यते—क्रियानिष्ठमुख्यविशेष्यताकबोधानुकूलशक्तिविशिष्टत्वं तत्त्वम । वैशिष्ट्यं च—स्वपर्याप्त्यधिकरणत्व स्वनिरूपकार्थविषयकबोधतात्पर्येणोच्चारितत्वोभय-

तत्त्वं भूतभविष्यत्कालसम्बन्धात् । भ्वादयः किम् ? 'आणवयति' 'वट्टयति' इत्यादीनां धातुत्वे शास्त्रविषयतया साधुत्वापत्तेः ।

सम्बन्धेन । तथा च दरिद्राशब्दे दुर्गतित्वावच्छिन्नमुख्यविशेष्यताकबोधानुकूला या शक्तिस्तत्पर्याप्त्यधिकरणत्वेऽपि तन्निरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वाभावात्, कुत्सितगमनमुख्यविशेष्यताकबोधानुकूलद्रापर्याप्तशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वेऽपि तादृशशक्तिपर्याप्त्यधिकरणत्वाभावाच्च नातिव्याप्तिः । लिडादौ तु आस्वादनमुख्यविशेष्यकबोधानुकूला या शक्तिस्तत्पर्याप्त्यधिकरणत्वस्य तन्निरूपकास्वादनविषयको य आस्वादनकर्तृमुख्यविशेष्यको बोधस्तत्तात्पर्येणोच्चरितत्वस्य च सत्त्वान्नाव्याप्तिः । *भ्वादयः किमिति* । न च तदभावे परस्परसाहचर्याभावादसत्त्ववाचित्वेनैव वासादृश्यापत्तिरिति परस्परसाहचर्यार्थमेव भ्वादिग्रहणमस्त्विति वाच्यम्? भ्वादयः किमित्यस्य "क्रियार्था धातवः" इत्येवसूत्रमस्त्विति तात्पर्यात् । *आणवयतीति* । आज्ञापयतीत्येतदर्थकाणवेदीत्याकारकरूपस्थान आपाद्यमानमिदम् । *वट्टयतीति* । वर्त्तयतीत्येतदर्थकवट्टेदीत्यस्य स्थान आपाद्यमानमिदम् । उभयमिदमेकारान्तं तत्तत् क्रियावाचकमिति केचित्; तन्न । तिङापत्तेरेव वक्तव्यत्वे शास्त्रविषयतया साधुत्वापत्तिकथनवैयर्थ्यापत्तेः । तस्माद् आणवयतीत्यादिविशिष्टमेवाज्ञापयतीत्यादीनामपभ्रंशभूतं तत्र प्रकृतिभागस्य धातुत्वापत्तिर्बोध्येति चिदस्थिमालाकाराशयः । *आदीति* । तेन वड्ढयतीत्येतदर्थकवड्ढयतीत्यस्य सङ्ग्रहः । *शास्त्रविषयतयेति* । अयं भावः—साधुशब्द एव सकलसूत्रप्रवृत्तेरपभ्रंशेषु प्रातिपदिकत्वादिवारणाय सिद्धान्ताद् भ्वादीनां साधुत्वाबोधनात्संज्ञाया अप्राप्तावगत्याऽनेनैव क्रियावाचिनो भ्वादयः साधवः । ते च धातुसंज्ञका इत्युभयविधानस्य सिद्धान्तेऽप्यावश्यकत्वेन भ्वादिग्रहणाभावे क्रियावाचिसामान्यस्य साधुत्वधातुत्वयोर्विधाने इहापि प्रकृतिभावस्य तदापत्तिरिति यज्ञे कर्मणि तदुच्चारेण पापभागितानापत्तिरिति । भू सत्तायामित्यादितत्तत्सूत्राणां साधुत्वविधायकत्वे त्वतिगौरवम् । भू सत्तायामित्यादिनिर्देशश्च भ्वादिपरिज्ञानाय; भ्वादिग्रहणाभावे तु भूसत्तायामित्यादिपाठोऽपि न कार्य इति तात्पर्यम् । यदि तु भूसत्तायामित्यादीनां साधुत्वविधायकत्वमभ्युपेत्य भ्वादिग्रहणं खण्ड्यते; तदा कस्मात्वमित्यादिवाक्यैकदेशप्रयोगे

सूत्रशेषे भाष्ये स्फुटमेतत् । स्तम्भ्वादीनामुदिश्वेन धात्वधिकार-विहितकार्योद्देश्यत्वादिना स्थितपाठभ्रंशानुमानान्न तेषु दोषः ।

प्राग्रीश्वरा (पा० सू० १-४-५६) । "अधिरीश्वरे" (पा० सू० १-४-९७) इत्यभिव्याप्य प्राङ् निपाता इत्यधिकारः । प्राक् निपाताः सन्तो गत्यादिसञ्ज्ञका इत्यर्थः । तेन ताभिः समावेशः "अधिरीश्वरे" (पा० सू० १-४-९७) "विभाषा कृञि" (पा० सू० १-४-९८) इत्यत्र निपातपदसम्बन्धश्च सिद्धः । एषां द्योतकत्वं वाचकत्वञ्च यथाकार्यं यथाप्रयोगं बोध्यमित्यन्यत्र विस्तरः ।

---

कस्मादित्यादीनामागमनादिबोधकत्वेन धातुत्वापत्तौ सुब्लुगादिर्दोषो बोध्यः । ननु भूग्रहणे कृते सति स्तम्भ्वादीनां तत्रापठितानां कथं धातुसंज्ञेत्यत आह—*स्तम्भ्वादीनामिति* । आदिना जु-पस्-ऋति-चुलुम्पादिसङ्ग्रहः । नन्वधातुत्वेऽपि प्रातिपदिकत्वात्सुपि उदित्करणं नुमाद्यर्थं स्यादत आह-*धात्वधीति* । "जॄस्तम्भुस्तुम्भु" "जुचङ्क्रम्य" "भजपसां" "ऋतेरीयङ्" 'अनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' "कण्ड्वादिभ्य" इत्यादिविहितप्रत्ययादिरूपाणि कार्याणि बोध्यानि । आदिना तत्प्रकृतिकच्ल्यनुवादेनाङ्विधानस्य सार्वधातुके विकरणविधानस्य च सङ्ग्रहः । नन्वेतैरनेकवचनकल्पने गौरवमत आह-*स्थितेति* ।

रीश्वरात्प्रागित्यर्थेऽधेः कर्मप्रवचनीयसंज्ञकस्य निपातसंज्ञा न स्यात्, अग्रे समावेशश्च न स्यादतोऽन्यथा व्याचष्टे-*अधिरीश्वर इति* । ल्यब्लोपे पञ्चमीति बहवः । अभिविध्यर्थकाङोऽध्याहारेण कर्मप्रवचनीयसंज्ञया "पञ्चम्यपाङ्" इति पञ्चमीत्याचारिणः । प्राग्ग्रहणमेकसंज्ञाऽधिकारेऽपि गत्यादिसंज्ञाभिः समावेशार्थमित्याह-*तेनेति*। ल्यब्लोपे पञ्चम्याः प्रागित्यस्याधिकारान्तर्गतत्वस्य चाश्रयणेनेत्यर्थः । *ताभिः*-गत्यादिसंज्ञाभिः । निपातसंज्ञाया इति शेषः । *विभाषेति* । अत्रापि तत्सूत्रानुवृत्तेरिति भावः । *एषामिति* । प्रादीनां चादीनां चेत्यर्थः । *द्योतकत्वमिति*। समभिव्याहृतपदशक्त्युद्बोधकत्वमित्यर्थः । पदमत्र शक्तम् । अनुभूयत इत्यादौ द्योतकत्वम् अहंयुरित्यादावस्मदाद्यर्थवाचकत्वम् । कार्यस्यापि प्रयोगाश्रयत्वादाह-*यथाप्रयोगमिति* । एतेन "शरैरुस्रैरिव" इत्यादाविवादीनां सादृश्यवाचक-

असत्त्वे इति पर्युदासो लाघवादित्याह—अद्रव्येति । विशेष्यतया द्रव्यभिन्नार्था इत्यर्थः । तेन क्रियाविशिष्टद्रव्यवाचिनां विप्रादिघटकप्रादीनां न । चादयः किम् ? स्वरादिपठितानामसत्त्ववृत्तित्वे आद्युदात्तत्वं मा भूदिति ।

उपसर्गाः (पा० सू० १-४-५९) । योगग्रहणं यदर्थे प्रा-

---

त्वमादाय कदाचित् तृतीया न स्यात्, षष्ठी च स्यादित्यपास्तम् । तत्र षष्ठ्यादिघटितप्रयोगाणामनभिधानेन तादृशस्थले वाचकत्वाकल्पनात् । एतेन उपसर्गाणां द्योतकत्वं तद्भिन्ननिपातानां वाचकत्वमिति नैयायिकोक्तम्, अर्द्धजरतीयानौचित्येन सर्वेषां द्योतकत्वं वाचकत्वं चेति दीक्षिताद्युक्तञ्च परास्तम् । तदाह-*इत्यन्यत्रेति* । मञ्जूषादावित्यर्थः ।

यद्यपि भाष्ये प्रसज्यप्रतिषेध उक्तस्तथाऽपि स न युक्तः, वाक्यभेदासमर्थसमासापत्तेस्तद् ध्वनयन्नाह—*असत्त्व इतीति* । नन्वेवं भाष्योक्तप्रसज्यप्रतिषेधफले विप्रातीति विप्र इत्यत्रातिप्रसङ्गः; तत्र प्रशब्दस्य क्रियाविशिष्टद्रव्यवाचकत्वात्तत्समुदायस्य च द्रव्यभिन्नत्वात्तवृन्यत्र वर्त्तमानत्वात् । इष्टापत्तिस्तु न; अव्ययसंज्ञायां तदन्तविधिसत्त्वेन तदन्तस्याव्ययत्वे सुपोऽश्रवणापत्तेरत आह—*विशेष्येति* । द्रव्यावृत्तिविशेष्यताकोपस्थितिजनका इत्यर्थः । अत्र द्रव्यपदं न गुणाश्रयपरं; किन्तु—

"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥"

इतिलक्षणलक्षितमेव गृह्यते । वस्तूपलक्षणं वस्तूपलक्ष्यते परामृश्यते येन तत्सर्वनाम यत्र परामर्शाय प्रयुज्यते, सोऽर्थो द्रव्यमित्युच्यते । अथवा भेद्यत्वेन लिङ्गसंख्यानिरूपितविशेष्यत्वेन विवक्षित इति तदर्थः । *क्रियेति* । प्रकर्षविशिष्टपूरणादिक्रियेत्यर्थः ।

अन्ये तु-विशेष्यतयेत्यस्य लिङ्गसंख्याऽन्वयितानवच्छेदकं यद्रूपं तद्रूपेतररूपावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणानुच्चरिता इत्यर्थः । तेनात्यन्तानेरर्थकानामपि निपातसंज्ञासिद्धिरिति वदन्ति । *वृत्तित्वे इति* । सति तत्त्वादिति शेषः । एतेन प्रातरादीनां केषाञ्चिदेव तदापत्तिर्न सर्वेषामिति सूचितम् । *मा भूदितीति* । इष्टापत्तिस्तु 'न प्रातरत्नम्'इत्यादिवैदिकप्रयोगविरोधापत्तेः । "स्तोः श्चुना"इत्यादिवदध्याहारेणैव योगार्थे लब्धे योगग्रहणं व्यर्थमत आह—*योगग्रहण-

दीनामन्वयस्तं प्रत्येवोपसर्गत्वादित्यर्थबोधनाय। तेन विगताः सेचका अस्माद्विसेचको ग्राम इत्यादौ षत्वं न।

गतिश्चेति। 'च' उपसर्गसञ्ज्ञासमावेशार्थः। तेन 'प्रतिप्रणीतम्' इत्यादौ गतित्वाद् "गतिरनन्तरः" (पा०सू० ६-२-४९) इति स्वर उपसर्गत्वाद् णत्वञ्च सिद्ध्यति। प्रादय इति योगविभागस्तु क्रियायोगाभावेऽपि निपातत्वाय। एतत्सिद्धमेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गणसूत्रेणेति दिक्। प्रपरेत्यादावनुकार्यानुकरणयोरभेदविवक्षया सुबनुत्पत्तिः। निस्दुसिति। अत्रेदं

---

मिति*। *अन्वय इति*। साक्षादित्यर्थः।

*इत्यर्थबोधनायेति*। अयं भावः—क्रियेति लुप्ततृतीयान्तम्; योग इतिपदान्तरस्याध्याहारः इचुनेत्यादिवत्। सूत्रस्थं योगपदञ्च अर्श आद्यजन्तं प्राद्यन्वयि धात्वर्थपरं विषयसप्तम्यन्तम्। तथा च क्रियया युक्ताः प्रादयः स्वान्वयिक्रियाविषये यत् क्रियावाचकं तत् प्रत्युपर्गसंज्ञका इति। जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमत्वमुपसर्गत्वं फलितम्। तत्र यज्जन्यो बोधस्तादृशधातुं प्रत्येवोपसर्गत्वं योगग्रहणाल्लभ्यत इति तत्त्वम्। क्रियायोगे किम्? अधिसेचकम्। विभक्त्यर्थेऽव्ययीभावः। अत्र "उपसर्गात्"इति षत्वन्न। निपातसंज्ञया तस्य सिद्धत्वादाह—*उपसर्गेति*। अन्यथा एकसंज्ञाऽधिकारात्पर्यायः स्यात्। इष्टापत्तिस्तु न, 'अभिषावक'इत्यादौ षत्वविकल्पापत्तेः। *प्रतिप्रणीतमिति*। प्रसङ्गादनन्तरग्रहणस्य व्यावर्त्यप्रदर्शनाय--*प्रतीति*। समावेशफलन्तु प्रशब्दमात्रेणैवेति बोध्यम्। योगविभागस्तूत्तरार्थ इति नैकयोगकरणेन समावेशसम्भवः। *योगविभागस्त्विति*। 'चादय' इत्यस्यानन्तरं 'प्रादय''उपसर्गाः क्रियायोगे' इत्येकयोगो नेति भावः। *निपातत्वायेति*। तेन प्रगत आचार्यः प्राचार्य इत्यादावव्ययपूर्वपदप्रकृतिस्वरसिद्धिः। नन्वेतन्निपातसंज्ञाया न फलम्; उपसर्गप्रतिरूपकत्वादेवाव्ययत्वसिद्धेरत आह—*एतत्सिद्धमेवेति*। योगविभागसिद्धमेवेत्यर्थः। *अभेदविवक्षयेति*। तथा च शक्तिलक्षणाऽन्यतरसम्बन्धज्ञानाधीनोपस्थितिप्रयोज्यबोधजनकत्वाभावेन प्रातिपदिकत्वाभावान्न सुबुत्पत्तिरिति भावः। इदं प्राचामनुरोधेन। 'अनुकरणमनुकार्याद्भिन्नमेव'इति स्वमते सुबुत्प-

बोध्यम्—सान्तग्रहणे रान्तस्याग्रहणमेव । यत्र तु रुत्वमसिद्धं तत्र रान्तग्रहणेऽपि न सान्तग्रहणं तद्दृष्ट्या रुत्वस्यासिद्धत्वात् । यत्र तु रुत्वस्य सिद्धत्वं यथा षत्वणत्वयोस्तद्विषयोपसर्गत्वप्रतिषेधपरे "दुरः

---

स्तावपि "प्रकृतिवद्" इत्यतिदेशेनाव्ययत्वाद्विभक्तेर्लुक् । अनुकार्यस्वरूपभङ्गभिया च पदान्तत्वप्रयुक्तकार्यं नेति बोध्यम् । *सान्तग्रहण इति* । "निसस्तपतौ"इत्यादावित्यर्थः । *अग्रहणमेवेति* । लाक्षणिकत्वादिति भावः । न च सान्तस्यापि पूर्वं रुत्वादेर्दुर्वारतया प्रतिपदोक्तस्यासम्भव इति वाच्यम् ? सामर्थ्याद् भूतपूर्वप्रतिपदोक्तस्य ग्रहणेन तत्सम्भवात् । रान्तग्रहणेऽर्द्धजरतीयत्वेन पूर्वतो वैषम्यमाह—*यत्र त्विति* । यस्मिञ्छास्त्रे प्रवर्त्तयितव्ये त्वित्यर्थः । "निरः कुषः" "सुदुरोरधिकरणे"इत्यादाविति भावः । अपिः–उक्तसमुच्चायकः । *रुत्वस्यासिद्धत्वादिति*। लाक्षणिकत्वाच्चेत्यपि बोध्यम् । न चैवम्"एकाच उपदेशे" इत्यस्यानन्तरं 'निरः कुषोऽनिष्ठायाम्'इतिन्यासेन सिद्धे "स्वरति"इतिविकल्पप्रकरणे "निरः कुषः" "इण्निष्ठायाम्"इति गुरुभूतन्यासवैयर्थ्यम् , उपसर्गद्वयेन रूपद्वयस्य सिद्धत्वादिति वाच्यम् ? एवं सति'अनिष्ठायाम्'इति पर्युदासेन कुत्स्वेव प्रसङ्गात् ; न निष्ठायामिति पृथग्योगेन निषेधस्य निषेधकरणे तु तदनुवृत्तिरुत्तरत्रापि सम्भाव्येत, नापि च लाघवमित्युदयङ्करः । यत्र तु रुत्वमसिद्धमिति प्रतीकमुपादायाचारिणस्तु–इदमयुक्तम् ; "इण्निष्ठायाम्"इति सूत्रस्थभाष्यविरोधात्। तथा हि "इडित्यनुवर्त्तमाने पुनरिड्ग्रहणं किमर्थम् ? नित्यार्थमारम्भः, नैतदस्ति प्रयोजनम्; सिद्धाऽत्र विभाषा "निरःकुष" इत्यनेन । तत्रारम्भसामर्थ्यान्नित्योऽपि विधिर्भविष्यति, नात्र पूर्वेण विभाषा प्राप्नोति, किं कारणम् ? "यस्य विभाषा"इति प्रतिषेधात् । तत्रारम्भसामर्थ्याद्विभाषा लभ्येत, पुनःपुनरिड्ग्रहणादिडेवेति तत्र यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध"इतिभाष्यकृता सिद्धान्तितत्वात् । निरः कुषो निष्ठाया "यस्य विभाषा"इति प्रतिषेधेऽपि निसः कुषो निष्ठाया इट्सम्भवान्निष्कुषितं निष्कुष्टमिति रूपद्वयस्य सिद्धौ नात्र पूर्वेण विभाषा प्राप्नोति"इति भाष्यासङ्गतेः।"इड्ग्रहणे क्रियमाणेऽपि उक्तरीत्या इड्विकल्पापत्त्या पुनरिड्ग्रहणादिडेव'इति भाष्यासङ्गतिश्च; उक्तरीत्या विकल्पप्राप्तौ "इण्निष्ठायाम्" इति सूत्रवैयर्थ्यं च । तस्मात्"इण्निष्ठायाम्"इति सूत्रारम्भसामर्थ्यादुक्तभाष्यप्रामाण्याच्च यत्र रुत्वस्यासिद्धत्वं सिद्धत्वं वा तत्र सर्वत्र

षत्वणत्वयोः" (का० वा०) इति वार्त्तिके कृतरेफसान्तस्यापि ग्रहणम् । षत्वणत्वयोरित्यस्य तद्विधायकशास्त्रयोरित्यर्थात् । अत एव सुषामाऽऽदिषु दुःष्ठुशब्दपाठः सार्थकः । स हि "अपदुःसुषु स्थः कुः" (उ० सू० २५) इति दुस्पूर्वकस्थाधातोः कुप्रत्यये साधुः । अन्यथा दुस्पूर्वकात्कुप्रत्यये "उपसर्गात्" (पा० सू० ८-३-६५) इत्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । न चास्य रूढत्वेनावयवार्थाभावादुपसर्गत्वाभावः । अत्यन्तरूढेषु प्रतिष्ठानिष्ठाऽऽदिषु षत्वानापत्तेः । अर्थवत्त्वारोपेण चेत्प्रकृतेऽपि । दुसः पाठस्तु 'दुरयते' इत्यादौ रुत्वासिद्ध्या लत्वाभावार्थं इति दिक् ।

---

रान्तग्रहणे सान्तग्रहणं भवत्येवेत्याहुः । *कृतरेफेति* । सस्य विशेषणम् । *सान्तस्यापीति* । तेन दुःस्थतीत्यत्र कदाऽपि षत्वं न । ननु "षत्वणत्वयोः"इतिवार्त्तिके कार्यनिर्देशात्तयोः कर्त्तव्ययोस्तत्प्रतिषेध इतिवार्त्तिकार्थाद्वार्त्तिकस्योपसर्गसंज्ञासूत्रस्थत्वलाभेन तदुद्दृष्ट्या रुत्वस्यासिद्धत्वलाभात्कथं सिद्धत्वमत आह--*षत्वेति* । तथा च षत्वणत्वशास्त्रीयोपसर्गपदप्रयोज्यविषयता तत्र न भवतीत्यर्थाद् दुर्भिन्नत्वेन तदुभयशास्त्रीयोपसर्गपदे सङ्कोचात्तदुभयशास्त्रदृष्ट्या रुत्वस्य सिद्धत्वेन दुरपदेन कृतरुत्वस्यापि ग्रहणमिति भावः । वार्त्तिकस्य तत्सूत्रस्थत्वमिति परमार्थः । ननु रुत्वस्य सिद्धत्वेऽपि लाक्षणिकत्वात्तद्ग्रहणं न सम्भवतीत्यतस्तद्ग्रहणे प्रमाणमप्याह--*अत एवेति* । *तद्वैयर्थ्यं स्पष्टमेवेति* । यत्र रुत्वस्य सिद्धत्वं तत्र कृतरुत्वसान्तस्यापि ग्रहणे तु दुस्पूर्वकात् स्थाधातोः कुप्रत्ययेऽपि दुर उपसर्गत्वप्रतिषेधाद् "उपसर्गात्सुनोति"इत्यस्याप्राप्त्या षत्वार्थं पाठः सार्थक इति भावः । ननु रेफान्तदुर्पूर्वकात् स्थाधातोः कुप्रत्यये षत्वाभावघटितप्रयोगवारणाय सुषामाऽऽदिषु दुःष्ठुशब्दपाठ इति चेद्, न । "अपसुदुःषु स्थ" इति न्यासे रेफान्तस्य"रोःसुपि"इति नियमेन विसर्गाप्राप्त्या सान्तपूर्वकात् स्थाधातोरेव कुप्रत्ययविज्ञानेनादोषात् । "उपसर्गात्सुनोति"इत्यनेन षत्वस्यासिद्धिं शङ्कते-*न चेति* । अभ्यर्हितत्वात्प्रतिष्ठाशब्दस्य पूर्वनिपातः । *प्रकृतेऽपीति* । तर्हिसममित्याद्यन्तौ । ननु "निरः कुषः" "सुदुरोराधिकरणे" "निसस्तपतौ"इत्यादिनिर्देशात् त्रितयस्य सफलस्य सत्त्वेऽपि दुसः पाठस्य किं फलमत आह-*दुसः पाठ इति*। *लत्वा-

नवेति (पा०सू० १-१-४४)। इतिलोकेऽर्थपदार्थकस्य शब्द-पदार्थकत्वकृत्। यथा 'गवित्ययमाह' इत्यादावनुकरणे। इह तु "स्वं रूपम्" (पा०सू० १-१-६८) इति परिभाषणाच्छब्दपदार्थ-कस्यार्थपदार्थकत्वकृत्। क्वचिदू इतेर्न पदार्थविपर्यासकत्वं यथाऽ-नुवादवाक्ये। स च नवाशब्दाभ्यां प्रत्येकं सम्बध्यते, व्याख्या-नात्। तेन नवाशब्दयोरर्थौ सञ्ज्ञिनौ। स्वं रूपमित्यस्य प्रत्याख्या-

---

भावार्थ इति*। अन्यथा लुलयत इत्येकमेव स्यादिति भावः।

*नवेति विभाषा*। अत्र नवा इति द्वन्द्वनिर्देशम्; द्विवचनन्तु अव्ययसंज्ञायां तदन्तविधेः सत्त्वेन निपातान्तत्वेनाव्ययत्वादू "अव्य-यादाप्" इतिलुप्तम्। अत एव इतिशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्ये-कं सम्बन्धः सङ्गच्छते। न च नव्यनये इतरेतरयोगद्वन्द्वेऽपि वार्त्तिपदा-र्थस्य विशेषणत्वेनोपर्जनत्वादत्युच्चैसावितिवदव्ययत्वाभावात्सुपः श्रवणापत्तिरिति वाच्यम्? इतिशब्दस्य प्रत्येकमन्वयानुरोधेन द्वन्द्व स्यावश्याभ्युपेयत्वेन सौत्रस्य लुकः कल्पनात्। साहित्याभावान्न द्वन्द्व-इति तु न युक्तम्; विभाषापदार्थे उभयोरन्वयेन साहित्यराहित्यवि-रहात्। अत्र निषेधविकल्पयोर्विभाषा संज्ञा स्यादिति वृत्तिश्चिन्त्या; अभावविकल्पयोरित्यस्य वक्तव्यत्वात्। निषेधो हि लिङादिघटितवा-क्यघटकनञा प्रवृत्ताविष्टसाधनत्वाभावबोधोत्तरमप्रवृत्तिलक्षणोऽर्थात् प्रतीयते, न तु स नञर्थ इति बोध्यम्। अत एव न भुङ्क्ते इत्यभाव-बोधकं न भुञ्जीतेति निषेधबोधकं वाक्यमिति व्यवहारः सङ्गच्छते। अन्यथा उभयत्र नञर्थत्वाविशेषेणोभयोर्निषेधबोधकत्वापत्तेः। *अर्थ-पदार्थकस्य*-अर्थविशेष्यकबोधजनकस्य। *शब्दपदार्थकत्वकृत्*-शब्दविशेष्यकबोधजनकत्वकृत्। *अनुवादवाक्य इति*। यथा—"आः किमेतदितिक्रोधादाभाष्य महिषासुरः" इत्यत्र, "जयेति देवाश्च मुदा" इत्यादौ च। "हन्तीति पलायते" इत्यादौ तु हेत्वाद्यावितिशब्द इति बोध्यम्। *व्याख्यानादिति*। "द्वन्द्वान्ते श्रूयमाणम्" इतिन्यायरूपादि-ति भावः। *प्रत्याख्याने त्विति*। यद्यपि आरम्भपक्षेऽपि अर्थे शब्दे च खण्डशक्तिग्राहकत्वस्यैव वक्ष्यमाणरीत्या लाभादर्थे कार्यस्याबाधा-दिति व्यर्थ एव; तथाऽपि अर्थे कार्यस्याल्पस्थले दर्शनेन शब्दे कार्या-णां बाहुल्येनानुगतप्रतीत्याऽर्थविशिष्टशब्दस्यैव संज्ञित्वलाभात्तद्विपर्या-सार्थं तत्सार्थक्यं कथञ्चिद्बोध्यम्। ननु तत्सूत्रारम्भेऽपि इतिर्माऽस्तु

ने त्वितिशब्दो ऽनर्थ एव, अर्थे कार्यस्याबाधात्। तयोरेव सञ्ज्ञित्वे तु "विभाषा श्वेः" (पा० सू० ६-१-३०) इत्यादौ नवाशब्दावादेशौ स्याताम्। प्राप्तविभाषासु नास्योपयोगः, तासां पक्षे निवृत्ति-

---

शब्दे कार्यस्याबाधादत आह-*तयोरेवेति*।

परे तु-नवाशब्दयोर्द्वन्द्वोऽयुक्तः निपातयोर्द्वन्द्वस्यानभिधानात्। किञ्चात्र नवाशब्दाभ्यामभावविकल्पबोधोऽप्यसम्भवी; ताभ्यां तद्बोधे पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधसामग्र्या अपेक्षणात्, असमस्तनञर्थात्यन्ताभावस्य वार्थविकल्पस्य च क्रियाऽन्वयस्यैव क्लृप्तत्वाच्च, नञर्थाभावे वार्थविकल्पे च समभिव्याहृतप्रथमान्तार्थाभेदान्वयस्याव्युत्पन्नत्वाच्च, अत एव 'अभावश्चतुर्विध' इतितात्पर्येण न चतुर्विध इत्यस्य विकल्पः प्रमेय इतितात्पर्येण वा प्रमेय इत्यस्य च न प्रामाण्यम्। तस्मादव्ययस्येतिशब्दस्यैवाभावो विकल्पश्चार्थः। नवेतिपदद्वयं तात्पर्यग्राहकमित्येव युक्तम्। एवञ्च स्वं रूपसूत्रस्यारम्भे प्रत्याख्याने वाइतिशब्दः सार्थक एव। स्वंरूपसूत्रबाधस्तु "पक्षिमत्स्यमृगान् हन्ति" इत्यादाविव बोध्यः। एवम् "आः किमेतद्" इत्यादावपि इतिशब्दस्यैव स सोऽर्थः। तत्तत्पदानि तु तात्पर्यग्राहकाण्येव। "नारद इत्यबोधि स" इत्यत्रापि इतिपदस्यैव नारदोऽर्थः, नारदपदं तात्पर्यग्राहकम्। इतिशब्दार्थोऽदःशब्दार्थेनाभेदान्वयी; द्वितीयाया अव्ययत्वाल्लुक्। एतेन निपातेन कर्मण उक्तत्वान्न नारदपदाद् द्वितीयेति प्राचां ग्रन्थः, नारद इतीति ज्ञानस्वरूपपरामिति नव्यग्रन्थश्च समाधानाभासत्वाद्धेय एवेत्याहुः।

*प्राप्तविभाषास्विति*। अयं भावः—वा-विभाषा-अन्यतरस्यामित्यादिपदानां भावत्वोपलक्षिततत्तद्विधेयतावच्छेदकावच्छिन्ने अभावत्वोपलक्षिततत्तद्विधेयाभावत्वावच्छिन्ने च खण्डशक्तिः। तथा च क्वचित्तत्तद्विधेयसमानाधिकरणतादृशाभावस्य क्वचित् तादृशाभावसमानाधिकरणतत्तद्विधेयस्य च बोधः। सामानाधिकरण्यञ्च—स्वीयोद्देश्यतावच्छेदकावच्छिन्नयत्किञ्चिद्वृत्तित्वसम्बन्धेन यत्र शास्त्रान्तरेण विधेयः सिद्धस्तत्र तत्सामानाधिकरण्येनाभावस्यैव बोधः। यत्र तु अभावः सिद्धस्तत्र तत्सामानाधिकरण्येन तद्विधेयस्यैव बोध इति विवेकः। यथा "वाम्शसोः" इत्यनेन अम्शस्परकस्त्रीशब्दान्ताङ्गस्य इयङ्सामानाधिकरण्येन तदभावो विधीयते; तत्र विधेयस्येयङ उद्दे-

मात्रफलकत्वात् । अप्राप्तविभाषास्वपि न; तासां पक्षे विधिमात्रार्थत्वात्, अप्राप्तत्वेन निषेधासम्भवाच्च । तस्मादुभयत्र विभाषाऽर्थमिदम् । "विभाषा श्वेः" (पा० सू० ६-१-३०) इत्यादौ एतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात् । कित्सु तु नित्यमेव संप्रसारणं स्यात् । निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्त्तेत न पित्सु । उभयथा प्रवृत्तिस्तु वैरूप्याद्वाक्यभेदापत्तेश्चाशक्या । सञ्ज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं कित्सु निषेधस्ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव विकल्पः । भाष्यकृतस्तु एवं हि "हृक्रोरन्यतरस्याम्" (पा० सू० १-४-५३) इत्यादावनुपपत्तिर्विभाषा-

श्यतावच्छेदकावच्छेदेन सिद्धत्वात् । यथा वा "यरोऽनुनासिके"इत्यनेनानुनासिकपरकस्य पदान्तस्य यरोऽनुनासिकाभावसमानाधिकरणोऽनुनासिको विधीयते; उद्देश्यतावच्छेदकावच्छेदेनानुनासिकाभावस्य सिद्धत्वात् । एवं विभाषाऽऽदिपदैरपि "विभाषा क्त्वि"" सर्वत्र विभाषागोः" इत्यादौ तथा तथा बोधो बोध्य इति । यत्र संज्ञाया उपयोगस्तामाह- *उभयत्रेति* । *विधिमुखेनेति* । अभावसमानाधिकरणभावत्वेनेत्यर्थः । *पित्स्वेव विकल्प इति* । तत्रैव भावस्य सिद्धत्वात्तत्सामानाधिकरण्येनैव संप्रसारणस्य विधानादिति भावः । *निषेधमुखेनेति* । भावसमानाधिकरणाभावत्वेनेति भावः । *उभयथा प्रवृत्तिस्त्विति* । यत्र भावः सिद्धस्तत्राभावत्वेन, यत्राभावः सिद्धस्तत्र भावत्वेन चेत्यर्थः । *वैरूप्यादिति* । भावाभावयोर्वैरूप्येणैकपदेनोभयोर्बोधासम्भवादिति भावः । आवृत्त्या तत्सम्भवादाह—*वाक्येति* । सूत्रसत्त्वे तु सामर्थ्याद्वाक्यभेदो न गौरवायालमिति भावः । तदेतदाह-*संज्ञाकरणे त्विति* । *श्रुतेति* । नवेत्यत्र नपदस्य पूर्वं श्रुतत्वाद्भावत्वेन पूर्वं प्रवृत्तेर्युक्तत्वात्पूर्वं सम्प्रसारणाभावं विधाय पश्चात्सर्वत्राभावस्य सिद्धत्वात्तत्सामानाधिकरण्येन संप्रसारणं विधेयमिति भावः । संज्ञाकरणेऽपि वाक्यभेदस्य गले पतितत्वादन्ते रण्डाविवाहन्यायेन तदकरणेन वाक्यभेद एव युक्त इत्यभिप्रेत्य सिद्धान्तमाह—*भाष्यकृतस्त्विति* । *हृक्रोरिति* । अभ्यवपूर्वकस्य हरतेर्भक्षणार्थत्वाद् विपूर्वकस्य करोतेरकर्मकत्वाच्च गतीत्यादिना प्राप्ता अर्थान्तरे चाप्राप्तेत्यु-

पदाभावात्। इतिशब्दस्य 'विभाषा' इत्यत्रापि सम्बन्धाद् विभाषापदार्थः सञ्ज्ञेति तु न युक्तम्, अर्थे सञ्ज्ञात्वस्यादृष्टत्वात्। अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञेत्यपि न युक्तम्। एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्य "अनाकृतिः सञ्ज्ञा" इति वृद्धिसञ्ज्ञासूत्रस्थभाष्येण तिरस्कारात्। तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति विभाषापदघटितेऽपि तथैवास्तु किं सूत्रेणेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्युः।

---

भयरूपेण प्रवृत्तिरावश्यकी सा चानुपपन्नेति भावः। काकाक्षिगोलकन्यायेनोभाभ्यामितिशब्दः सम्बध्यत इतिकौस्तुभोक्तिं खण्डयति-*इतिशब्दस्येति*। *विभाषापदार्थ इति*। विभाषापदबोध्यो भावसमानाधिकरणोऽभावः अभावसमानाधिकरणभावो वेत्यर्थः। तथा चान्यतरस्यामित्येतद्बोध्यो यो भावसमानाधिकरणोऽभावः अभावसमानाधिकरणो भावो वा तस्य विभाषापदार्थत्वेन तस्योभयबोधकत्वेन न तत्रानुपपत्तिरिति प्राचां भावः। *संज्ञात्वस्यादृष्टत्वादिति*। उच्चारितस्यैव प्रत्यायकत्वनियमादिति भावः। *अर्थाक्षिप्तेति*। तथा च विभाषापदार्थवाचकः संज्ञेत्यर्थादन्यतरस्यामित्यपि तयोः संज्ञेति भावः। *अनाकृतिः संज्ञेति*। एका संज्ञा अनेके संज्ञिन इत्येतद्भाष्याशयः। *तस्मात्*—तत्रानुपपत्तेरनुद्धारात्। *उभयमुखेनेति*। आवृत्त्येत्यादिः। *जातिव्यक्तिपक्षयोरिति*। एतेन व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणोपप्लवात् क्वचिल्लक्ष्ये विधिमुखेन प्रवृत्तिः, क्वचिच्च निषेधमुखेनेति सूत्रमनावश्यकमिति अशिष्यो वा विदितत्वादिति भाष्यस्याशयः। जातिपक्षे तु क्वचिदेकरूपेण प्रवृत्तावपि चारितार्थ्येन सूत्रं सार्थकमित्यावृत्तिमन्तरेणोभयमुखेन प्रवृत्त्यनुपपत्तेः सूत्रं सार्थकमिति कैयटोक्तमयुक्तमिति सूचितम्। इक्कोरित्याद्यनुरोधेन जातिपक्षेऽपि वाक्यभेदेनोभयमुखेन प्रवृत्तेरावश्यकतया विभाषापदघटितेऽपि तथैवेष्टसिद्धेरशिष्यो वेत्यत्राशिष्य इति भाष्योक्तसामान्यशब्दस्वरसतो लाभात्। किञ्च व्यक्तिपक्षेऽपि लक्ष्यानुरोधाद्वाक्यभेदेनैवोभयमुखेन प्रवृत्तेः सम्भवो न त्वन्यथा। सङ्ग्राहकवाक्ये यद्रूपेण प्रवृत्तिस्तद्रूपेणैवोपप्लुतेष्वपि वाक्येषु प्रवृत्तेर्न्याय्यत्वादिति पक्षद्वयेऽपि वाक्यभेदेन प्रत्याख्यानमेव भाष्याल्लभ्यत इति ध्येयम्।

स्वं रूपं श (पा० सू० १-१-२८) । स्वं रूपमित्यस्य बोध्यमिति शेषो व्याख्यानात्; तदाह—सञ्ज्ञीति । "राज्ञो यत्" इत्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासम्भवात्प्रातिपदिकादित्यनेनान्वयासम्भवाच्च तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् । तत्र स्वशब्द आत्मीयत्वेनार्थमाह । रूपशब्देन शब्दस्वरूपम् । एतदुभयं सञ्ज्ञीत्यर्थः । तत्रार्थो न विशेष्यः, उक्त-

---

यत्तु—अशिष्यो वेत्यत्र वापदस्वारस्येन प्रत्याख्यानस्य पाक्षिकत्वलाभाज्जातिव्यक्तिपक्षावाश्रित्यारम्भानारम्भाभिप्रायेणैव व्याख्यानमुचितमित्युद्द्योतकः; तदयुक्तम् । अशिष्य इत्यक्षरस्वारस्य भङ्गापत्तेः । व्यक्तिपक्षेऽपि लक्ष्यानुसारिवाक्यभेदावश्यकत्वस्योपपादितत्वेन व्यक्तिपक्ष आरम्भः जातिपक्षेऽनारम्भ इत्यत्र विनिगमनाविरहाच्च । वाशब्दस्यैवकारार्थत्वेन तत्स्वरससौलभ्याच्चेति दिक् ।

*स्वं रूपम्* । नन्वस्य सूत्रस्य संज्ञाविधायकत्वं न सम्भवति; सामानाधिकरण्येनोभयोरनिर्देशात् । नापि आदेशविधायकत्वं; सूत्रस्यैव वैयर्थ्यापत्तेः । न वा आगमविधायकत्वम्, तल्लिङ्गानुपलम्भात् । अतः सूत्रसार्थक्याय बोध्यमित्यस्याध्याहार एवेत्याशयेनाह—*व्याख्यानादिति* । *नियमार्थमिति* । अर्थे कार्यबाध उपात्तशब्दबोध्यार्थवाचकग्रहणं यत्र प्रसक्तं तत्र तादृशार्थविशिष्टोपात्तस्यैव ग्रहणमित्येवं नियमार्थमित्यर्थः; न तु अपूर्वविधित्वं गौरवात् । आरम्भप्रत्याख्यानयोः फलभेदाच्च । अत एवापत्यादिषु न स्वरूपग्रहणमिति भावः । *आत्मीयत्वेनेति* । ननु इदमनुपपन्नम्; आत्मीयवाचिस्वशब्दस्य विशेष्यनिघ्नतयाऽर्थपरत्वे स्व इतिनिर्देशापत्तेः । तस्मात् स्वशब्देन स्वरूपं रूपशब्देन रूप्यते बोध्यत इति व्युत्पत्त्याऽर्थो गृह्यते इति प्राचोक्तमेव युक्तमिति चेद्, न । विशेष्यनिघ्नानां शब्दानां विशेष्यवाचकपदसन्निधाने तत्तल्लिङ्गकत्वेऽपि तदसन्निधाने सामान्ये नपुंसकेन निर्देशोपपत्तेः । रूपशब्दस्य "रूपसामान्याद्वा सिद्धम्"इत्यादौ स्वरूपे प्रसिद्धत्वादिहापि तथैवोचितत्वाच्च । किञ्च यद्विषयकबोधजनकत्वप्रकारकतात्पर्येणोच्चरितो यः शब्दः स एव तस्यात्मीयोऽर्थ इति स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयीभूतस्यार्थस्य लाभायात्मीयत्वेन रूपेण बोध आवश्यक इति बोध्यम् । *उक्तयुक्तेरिति* । अर्थे कार्यबाधरूपाया

युक्तेः। किं तु शब्दविशेषणम्। एवञ्चार्थविशिष्टः शब्दः सञ्ज्ञीत्यर्थवद्ग्रहणपरिभाषा सिद्धा। अत्र चार्थः कल्पितान्वयव्यतिरेककल्पितः प्रकृतिप्रत्ययादिबोध्यः शास्त्रीयोऽपि। स च मुख्यः प्रसिद्धश्चेति गौणमुख्यन्यायः 'अभिव्यक्तपदार्था ये' इति न्यायश्च सिद्धः। अत एवेयं विशिष्टरूपोपादान एव, इदं सूत्रञ्च, तत्रैवार्थोपस्थितेस्तत्रैवानियमप्रसक्तेश्च, न तु वर्णग्रहणे इत्याकरे स्पष्टम्। "दाधा घु (पा०सू०१-१-२०) इत्यस्य "ई हल्यघोः" (पा०सू० ६-४-११३) इत्यादौ चारितार्थ्येन "उपसर्गे घोः" (पा०सू०३-३-९२) इत्यादौ "स्वं रूपम्" (पा०सू०१-१-६८) इत्यनेन परत्वाद् बाधशङ्कावारणार्थम्। अशब्दसञ्ज्ञेति। नात्र षष्ठीतत्पुरु-

---

इत्यर्थः। *अर्थविशिष्ट इति*। वैशिष्ट्यं चोक्ततात्पर्यघटितसम्बन्धेन *कल्पितान्वयव्यतिरेकेति*। पदस्याखण्डत्वेन तत्र प्रकृतिप्रत्ययान्वयव्यतिरेकौ कल्पिताविति भावः। *प्रकृतिप्रत्ययादीति*। आदिना निपातपरिग्रहः। शास्त्रीयोऽपीत्यपिना लौकिकपरिग्रहः। तत्र प्रकृतेः शास्त्रीयार्थवत्त्वाग्रहणाद् "अदो जग्धिः" इति जग्धादेशो 'मदी हर्षे' इति धात्ववयवाच्छब्दस्य न अर्थवतः प्रत्ययस्य ग्रहणात् "सन्यङोः" इति द्वित्वम् "ऋतेरीयङ्" इति विहिते याङि न प्रवर्त्तते। उपसर्गस्यार्थवतो ग्रहणाद् "उदः स्थास्तम्भोः" इतिपूर्वसवर्णो गर्मुत्स्थानमित्यादौ न। *अत एवेति*। परिभाषायाः सूत्रमूलकत्वादेवेत्यर्थः। नन्वेतत्सूत्रं तत्रैव प्रवर्त्तत इत्यत्र का युक्तिरत आह—*तत्रैवेति*। *अर्थोपस्थितेरिति*। अर्थस्य बोधादित्यर्थः। तथा च तत्र कार्यबाधात्तद्वाचकशब्दग्रहणेऽनियमप्रसक्तिस्तदेवाह—*अनियमप्रसक्तेश्चेति*। अयं भावः—अद्व्यादीनां स्वरूपे वासुदेवादौ च हर्यादिपदवत्पृथक्छक्तेलौकिकव्युत्पत्तिबललभ्यत्वेन "अस्य च्वौ" इत्यादौ योग्यत्वात्स्वरूपस्यैव बोधादनियमस्य न प्रसक्तिरिति। *अत एव लक्ष्येति*। सूत्रभाष्यमपि सङ्गच्छत इत्याह—*इत्याकरे स्पष्टमिति*। *ईहल्यघोरिति*। तत्र शब्दार्थकघुधातोर्ग्रहणे तदवयवस्याकारस्यासम्भवात्पर्युदासस्यैव वैयर्थ्यापत्तेः स्वंरूपशास्त्राप्रवृत्तेरिति भावः। *परत्वादिति*। ननु संज्ञाशास्त्रयोः परस्परविरोधाभावात्परत्वाद् बाधशङ्काऽयुक्ता स्वस्वकार्यद्वारा कथञ्चिद्विरोधोपपादनेऽपि तक्रन्यायेन प्रतिपदोक्तत्वेन च घुसंज्ञैवास्या अपवादिका स्यादत आह—*शङ्केति*।

षः । कर्मसञ्ज्ञादेरर्थसञ्ज्ञात्वेन निषेधाप्रवृत्तौ "कर्मण्यण्" (पा० सू० ३-२-१) इत्यादौ स्वरूपग्रहणापत्तेः । किं तु सप्तमीतत्पुरुषः । शब्दपदेन च शब्दशास्त्रं तदाह—शब्दशास्त्र इति । भाष्ये तु अर्थे कार्यस्य बाधेऽपि उपस्थितत्वाद् 'राज्ञः' इत्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रम् । उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वय-सम्भवेन च "अर्थवत्" (पा० १४) परिभाषाऽपि सिद्धा । लक्ष्यानु-सारात् तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसंख्यावाचकषष्श-ब्दस्य षट्सञ्ज्ञाकरणेन शब्दशास्त्रीयसञ्ज्ञायां स्वरूपाग्रहणज्ञापना-

---

केचित्तु–वर्णग्रहणेऽप्रवृत्त्यर्थमेवाशब्दसंज्ञेति; तद्धि पर्युदासन्यायेन शब्दसंज्ञाभिन्नेवर्णभिन्नत्वेनं तत्सदृशे चैतत्सूत्रं प्रवर्त्तयति; हरिपदवद्वर्ण-बोधकेषु नानाशक्तिकल्पने तु न मानमिति वदन्ति । *कर्मसंज्ञादेरि-ति* । आसां परत्वेऽप्यन्तरङ्गत्वादियमेव स्यादिति भावः । तासां चा-रितार्थ्यं तु यत्र स्वरूपग्रहणेऽसम्भवस्तत्र यथा "कर्मणो रोम्मथ" इ-त्यादाविति बोध्यम् । प्रत्याख्यानपक्षमाह—*भाष्ये त्विति* । अस्य उक्तमित्यनेनान्वयः । *उपस्थितत्वादिति* । "न सोऽस्ति प्रत्ययो लो-के" इत्यभियुक्तोक्तेः शब्देऽर्थे च सर्वशब्दानां खण्डशक्तिस्वीकारादिति भावः । *प्रकारतया भासमानस्येति* । लोके प्रायस्तथैव सम्भवा-दिति भावः । नन्वेवमनर्थकस्यापि तदानुपूर्वीकस्य ग्रहणापत्तिरत आह–*उपस्थितार्थेति* । खण्डशक्त्योपस्थितार्थेषु विशेष्यविशेषणभावे कामचारेण विशेष्यतया विशेषणतया वा योग्यताबलादन्वयबोधसम्भवे त्यागे मानाभावेनेत्यर्थः । प्रत्यासत्तिसिद्धार्थानुवादकत्वेन यथाकथञ्चि-त्सूत्रसार्थक्येऽपि "अशब्द संज्ञा" इतिनिषेधस्तु व्यर्थ एवेत्याह—*ल-क्ष्येति* । लक्ष्यानुरोधस्यागतिकगतित्वादाह–*तत्तत्संज्ञेति* । ननु तत्त-त्संज्ञाकरणेनोभयगतिरेव कल्प्यतामत आह—*षान्तेति* । अन्यथा "षट्चतुर्भ्यं" इत्यादावुभयगतिविज्ञानात्तदुभयग्रहणसिद्धौ तद् व्यर्थमिति भावः । नन्वेतन्मते परमषष्शब्दादीनामपि षान्तसंख्यावाचकत्वेन ष-ट्संज्ञायाः सिद्धान्तयिष्यमाणतया तत्रोभयगतिविज्ञानेऽप्यनिर्वाहेण षट्संज्ञाविधानं सार्थकमिति चेद्, न । वक्ष्यमाणसिद्धान्तस्य सूत्रानु-सारित्वात् । ननु लक्ष्यानुसारादिना सिद्धस्य प्रत्याख्यानं न युक्तमत

स्य "उपसर्गे घोः" (पा०सू०३-३-९२) इत्यादावदोषेणाशब्दसञ्ज्ञेत्यपि व्यर्थमित्युक्तम् । अत एव जनपदापत्यपशुदेवताऽऽदिशब्दे न दोषः । अत एव वृक्षादिषु विशेषाणां ग्रहणम्, "स्वे पुषः" (पा०सू०३-४-४०) इत्यत्र पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणम्, "सभाराजा" (पा०सू०४-२-२३) इत्यत्र पर्यायाणामेव ग्रहणम्, "पक्षिमत्स्यमृगान् हन्ति" (पा०सू०४-४-३५) इत्यादौ मृगपक्षिणोः पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणम्, मत्स्यपदेन स्वरूपस्य विशेषाणां मीनरूपपर्यायस्य च ग्रहणं सिद्ध्यति । अन्यथा तदर्थं यत्नः कर्त्तव्यः । "परेश्च घाङ्कयोः" (पा०सू०८-२-२२) इत्यत्र घशब्देन स्वरूपग्रहणं "नदीपौर्णमासी" (पा०सू०५-४-११०) इत्यत्र नदीपदेन च स्वरूपग्रहणं सिद्ध्यति । लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः । ज्ञापकपक्षेऽपि ज्ञापकसिद्धस्यासार्वत्रिकत्वान्न दोषः । अत एव भगवता ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति दिक् ।

---

आह--*अत एवेति* । लक्ष्यानुसारस्य तवाप्यावश्यकत्वादेवेत्यर्थः । *जनपदेति* । "जनपदे लुप्" "तस्यापत्यम्" "हरतेर्दृतिनाथयोः पशौ" "सास्य देवता" इत्यादावित्यर्थः । ननु आरम्भपक्षेऽपि सूत्रस्य नियामकत्वस्य वर्णितत्वेन यत्रार्थे कार्यबाधस्तत्र तद्वाचियावच्छब्दग्रहणे प्रसक्त एव नियामकत्वसम्भवः । "जनपदे लुप्" इत्यादौ तु अर्थे कार्यस्याबाधादनियमाप्रसक्तेर्नियामकशास्त्राप्रवृत्तिः स्यादेवेत्यत आह-*द्वितीयमत एवेति* । *वृक्षादिष्विति* । "विभाषा वृक्ष" इतिसूत्रविषय इति भावः । *विशेषाणामिति* । तेषामेवेत्यर्थः । *अन्यथा*-सूत्रारम्भे लक्ष्यानुसारिव्याख्यानानादरे च, अर्थे कार्यस्य बाधासत्त्वेनोपस्थितस्वरूपस्यैव ग्रहणापत्तेरिति भावः । *तेषु*—वृक्षादिषु । *यत्नः कर्तव्य इति* । सिद्धविशेषाणां वृक्षाद्यर्थमित्यादिः प्रकृतसूत्रभाष्योक्त इति भावः । न केवलं तावदेव गौरवम्, किन्तु अन्यपीति पृथक्छब्दशास्त्रीयसंज्ञास्थल आह—*परेश्चेति* । *स्वरूपग्रहणमिति* । अन्यथा अत्राप्युपायान्तरकरणे गौरवादिति भावः । स्वमते यथा प्रागुक्तेषु निर्वाहस्तदाह—*लक्ष्येति* । ननु षान्तस्य षट्संज्ञाया ज्ञापकत्वपक्षे कथं परेश्चेत्यादौ निर्वाहोऽत आह—*ज्ञापकेति* । *दिगिति* । तदर्थस्तु

येन वि।(पा०सू०१-१-७२)। येनेति करणे तृतीया। विधिरिति भावे किः। कर्मात्र विधेयं, कर्त्ता चाचार्यः प्रसिद्धत्वा-ल्लभ्यत एव। यत्तु "करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणमिति लब्धम्" इति, तन्न, 'सुब्विभक्तौ न लक्षणा' इत्यस्य सर्वसम्मतत्वात्। किं बहुना येषां प्रत्ययानामन्येषां वा शब्दानामर्थे विधानं कृतं शास्त्रेण, तेषामन्यत्रार्थे तदर्थे चान्येषां लक्षणयाऽपि

---

आरम्भपक्षेऽपि जनपदादिष्वर्थेषु कार्यस्याबाधादनियमाप्रसक्तेर्वृक्षादिषु लक्ष्यानुसारात्सिदादिग्रहणाद्वाऽऽशेषात्परेश्चेत्यत्र परिशब्दात्परयोस्तरतमयोरसम्भवादङ्कपदसाहचर्याच्च स्वरूपग्रहणात् पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्नदीशब्दे स्वरूपग्रहणलाभाच्च न दोषः। प्रत्याख्यानपक्षे च यथागौरवं लक्ष्यासिद्धिश्च तत्सर्वमन्यत्र निरूपितम्।

*येन विधिस्तदन्तस्य*। *कर्मात्र विधेयमिति*। प्रदेशवाक्येन यद्विधेयं तदेतद्वाक्यार्थबोधे विधानक्रियाकर्मेत्यर्थः। *पारतन्त्र्यं लक्ष्यत इति*। करणस्य कर्तृव्यापाराधीनव्यापारवत्त्वेन पारतन्त्र्यवदभेदेन विशेषणस्यापि विशेष्ये लिङ्गाद्यन्वयाधीनलिङ्गाद्यन्वयित्वेन पारतन्त्र्याद्विशेषणलाभ इति भावः। एवञ्च यन्निष्ठपारतन्त्र्यप्रयोज्यविधेयकर्मकविधिः, अर्थाद्विशेषणं तत्तदन्तस्य संज्ञा स्यादित्यर्थः पर्यवसन्नः। * सुब्विभक्तौ न लक्षणेति *। अत एव 'ऋजवः सन्तु पन्थाः'इत्यादौ जसादिस्थाने सुविधानं सार्थकम्। अन्यथा "द्व्येकयोः"इति विहितसोरेव लक्षणया बहुत्वबोधसम्भवात्तद्वैयर्थ्यं स्पष्टमेव। अत एव च "कर्तृकर्मणोः"इति षष्ठीविधानमपि सार्थकम्। अन्यथा शेषषष्ठ्यैव लक्षणया कर्तृत्वादिबोधसम्भवात्तद्वैयर्थ्यं स्पष्टमेव। न च सुपि लक्षणाया अस्वीकारे "द्वन्द्वे च"इत्यत्र "न बहुव्रीहौ"इत्यत्र च सप्तम्याः प्रथमार्थत्वानुपपत्तिरिति वाच्यम्? सूत्राणां छन्दोवत्त्वेन व्यत्ययेन प्रथमार्थे सप्तमीविधानात्। न चात्राप्येवं तेनैव पारतन्त्र्ये तृतीया स्यादिति वाच्यम्, विभक्तेः पारतन्त्र्यार्थकताया अप्रसिद्धत्वात्। अस्माकं न सुब्विभक्तावेवेदं, किन्त्वन्यत्रापीत्याह—* किं बहुनेति *। *येषां प्रत्ययानाम् *—मतुबादीनाम्। * अन्येषां शब्दानाम् *—शालीनकौपीनादीनाम्। * अर्थे *—सम्बन्ध्यादौ अधृष्टादौ च। * तद-

साधुत्वाभावस्य "प्रत्ययः" (पा० सू० ३-१-१) "पुंयोगाद्" (पा० सू० ४-१-४८) इत्यादिभाष्यतो लाभात्।

करणस्य व्यापारवत्त्वानियमादन्येषां च व्यापाराभावाद्विशेषणमेवात्र करणतृतीयान्तेनोच्यते। तस्य चेतरव्यावृत्तिकरणमेव व्यापारः। तदुक्तं भाष्ये "येनेति करणे एषा तृतीयाऽन्येन चान्यस्य विधिर्भवति। यथा-चैत्रस्य सङ्ग्रामं हस्त्यश्वादिभिर्विधत्ते, एवम् अचो यदिति अचा धातोर्यतं विधत्ते" इति। अन्येन

---

र्थे चान्येषामिति*। बभ्रुत्वपत्याद्यर्थे बाभ्रव्यादिवद् बभ्रुत्वादीनामित्यर्थः। * साधुत्वाभावस्येति*।

अयं भावः—व्याकरणस्मृतिः शब्दसाधुत्वपरा; बोधस्तु लोकनियन्त्रितः। तथा च तत्तदर्थे एव तत्तत्प्रत्ययानां तत्तच्छब्दानां च साधुत्वबोधनात्ततोऽन्यत्र प्रयोगेऽसाधुत्वापत्तिः। एवं च बोधस्य यथाव्युत्पत्त्युपपादनेऽपि याज्ञे कर्माणि तथाप्रयोगेऽनर्थोत्पत्तिर्दुर्वारेति। परश्च पुंयोगादिति पाठः, प्रत्ययः पुंयोगादिति पाठेऽपि "प्रत्यय"इत्यनेन साहचर्यात्परश्चेति लक्ष्यते; तत्र "परश्च"इति सूत्रे भाष्ये बभ्रोरपत्यमित्यर्थे बाभ्रव्यमित्यत्र यञो विधाने कृते तत्र बभ्रुशब्दस्य लक्षणया शक्त्या वा साधुत्वाभाव उक्तः। यदाह हरिः-"सोऽयमित्यभिसम्बन्धात्तद्धितेन विना यदि। बभ्र्वादयः प्रयुज्यन्ते नापत्यनियमो भवेद् ॥" इति। "पुंयोगाद्"इति सूत्रे भाष्येऽपि प्रष्ठादिशब्दानां प्रस्थानकर्तृत्वादेः प्रवृत्तिनिमित्तस्य पुंधर्मत्वात् स्त्रियां प्रवृत्त्यभावात्सम्बन्धित्वाविवक्षायां "तस्येदम्"इत्यणो लुग्वक्तव्यः। ततश्च स्त्रीवृत्तित्वान् ङीष्, न ह्यन्तरेण तद्धितलुकं परार्थे शब्दो वर्त्तत इत्युक्तम्। लक्षणया तद्धितान्तार्थे प्रष्ठादिशब्दानां साधुत्वे तु तदसङ्गतिः।

स्वमते करणत्वं साधयति—* करणस्येत्यादिना *। * अन्येषाञ्च व्यापाराभावादिति *। यद्यपीतरस्य विधिव्यावृत्तिरूपो व्यापार उद्देश्यस्याप्यस्ति; तथाऽपि न स बोधविषयत्वेन तात्पर्यविषयः, अपि तु अर्थात्प्रतीयमानः। * हस्त्यश्वादिभिरिति *। सेनापतिरिति शेषः। * अचा धातोर्यतं विधत्त इति *। अत्र चैत्रसमशीलो धातुः, संग्रामसमशीलो यत्, हस्त्यादिसमशीलोऽच्, सेनापतिसमशीलश्चाचार्यः। तत्र यथा—चैत्रस्य सङ्ग्रामोत्पत्तौ हस्त्यश्वादयः करणम्; एवं धातोर्यदुत्पत्तावच्करणं यत्र धातावन्तेऽच् तत्रैव यत उत्पत्तेरिति

चान्यस्येति । अनेन यस्य कार्यं, यस्मिन्परतश्च, तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । तत्र शब्दोपस्थिताविशेष्यस्य तादृशं विशेषणमेव तदन्तग्राहकम् । क्वचित्सति गमके तादृशं शब्दरूपं विशेष्यमादायापि तदन्तविधिः । तच्चान्तरङ्गत्वात्समानाधिकरणमेव ।

---

भावः । ननु "इको यणचि" इत्यत्राचोऽपीतरव्यावर्त्तकत्वेन तदन्तग्रहणापत्तिरत आह—*यस्मिन् परतश्चेति* । ननु अन्येन चान्यस्येत्यनेन कार्यसम्बन्धिभिन्नस्यैव करणत्वसूचनेऽपि यस्मिन् परतः कार्यं तस्याकरणत्वं कथं दर्शितम् । न चान्यस्येति सम्बन्धसामान्यषष्ठ्या धातुप्रातिपदिकयोः पञ्चम्यन्तार्थयोरिव सप्तम्यन्तार्थस्यापि सङ्ग्रह इति वाच्यम् ? अन्यस्येत्यस्योद्देश्यत्वार्थकषष्ठ्यन्तत्वेन प्रत्ययविधौ पञ्चम्यन्तार्थस्योद्देश्यत्वेन तेन तस्य सङ्ग्रहेऽपि सप्तम्यन्तार्थस्यासङ्ग्रहादत आह—*अन्यस्मिन्नित्यस्यापीति* । नन्वेवमपि "इको यण्" इत्यादौ शब्दस्वरूपं विशेष्यमादाय इक्पदेन तदन्तग्रहणं स्यादेवेति भाष्यासङ्गतिरत आह—*तत्रेति* । विशेष्येष्वित्यर्थः । *तादृशम्*—शब्दोपस्थितम् । *क्वचित्सति गमक इति* । यथा "सर्वादीनि" इत्यादौ ; अत्र च गमकं "द्वन्द्वे च" इत्यादि बोध्यम् । *अतादृशम*-सूत्रघटकपदानुपस्थितम् । ननु यस्मिन् परतो विधिस्तस्याकरणत्वे "वान्तो यि" इत्यादौ तदन्तविधेरपवादस्तदादिविधिर्न स्यात्; किञ्च अन्यस्येत्यस्यान्यस्मिन्नित्येतन्मात्रोपलक्षणत्वेऽपि यस्मात्परस्य विधिस्तस्य "ङः सि" इत्यादौ डादेः करणत्वापत्त्या तदन्तविधेर्दुर्वारताऽपीत्यतो बीजान्तरमाह—*तच्चेति*। *अन्तरङ्गत्वादिति*। तच्चाभेदस्यैकत्वात् स्वमतेऽभेदस्य संसर्गत्वानभ्युपगमेन तत्र संसर्गानवच्छिन्नविशेषणताया अपेक्षितत्वाच्च तादृशविशेषणस्य शीघ्रोपस्थितिकत्वादिति भावः । एवञ्चान्यस्येत्यस्योपलक्षणत्वेऽपि न किमपि फलमिति बोध्यम । ननु समानाधिकरणविशेषणग्रहणेऽपि "द्वितीयाटौस्स्वेन" इत्यादौ अनुदात्तस्यैने समानाधिकरणविशेषणत्वेन तदन्तविधौ अनुदात्तान्तैनादेशापत्तिरिति चेद्, न । तस्य विधेयविशेषणत्वेन कर्मत्वेनेह करणत्वेनाविवक्षणात् ।

नन्वेवम् "इन्हन्" इत्यत्रोपात्तेन्शब्दस्याङ्गविशेषणस्य तदन्त-

तत्र तदन्तविधौ सति तथा विशेषणत्वयोग्यताऽप्येतत्प्रवृत्तौ निमित्तम्। अत एव "इन् हन्" (पा०सू० ६-४-१२) इत्यादौ इनंशे तदन्तविधिः। न हि इन् अङ्गमित्यन्वयो भवति। तदन्तस्येत्यस्य तदन्तशब्दस्येत्यर्थः। नन्वेवम् "एरच्" (पा० सू० ३-३-५६) इति 'अयः' इत्यत्र न स्यादत आह-स्वस्य चेति। स्वमित्यनुवृत्तं षष्ठ्या विपरिणम्यते इति भावः। "स्वं रूपम्" (पा० सू० १-१-६८) इत्यस्य प्रत्याख्याने तु तदन्तस्य चेति पाठ्यमिति बोध्यम्।

---

ग्राहकतेष्यते; सा च नोपपद्यते इनोऽङ्गत्वाभावादत आह-*तत्रेति*। *योग्यताऽपीति*। तथा च अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकं तदन्तविध्युत्तरं तादृशप्रकारताप्रयोजकत्वेन सम्भावितञ्च यत्पदं तत्स्वबोध्यनिष्ठचरमावयवतानिरूपकसमुदायस्य संज्ञा स्यादित्यर्थः पर्यवसन्नः। *न हीनङ्गमिति*। न च अशब्दादिनि "यस्य" इति लोपे तत्सम्भव इति वाच्यम्? एकाज्भ्य इन्ठनोः प्रतिषेधस्य भाष्य उक्तत्वात्। यदि तु इनमततीति इनात् ततो णिचि टिलोपे ततः क्विपि णिलोपे इनङ्गस्य सम्भवः; न च तत्र णिलोपः स्थानिवद् दीर्घविधौ तन्निषेधादित्युच्यते, तदेदमुपलक्षणम् "इनः स्त्रियाम्" इति सूत्रविषये इन्रूपबहुव्रीहेरसम्भवस्येति बोध्यम्। *शब्दस्येति*। इदमधिकम्। शब्दचरमावयवकत्वस्य शब्द एव सम्भवेन तल्लाभादिति बोध्यम्। *तदन्तस्य तस्य चेति*। तदन्तस्य चेति पाठः, चकारात्केवलस्यापि ग्रहणबोधनात्। ननु "स्वं रूपम्" इत्यस्यारम्भे स्वस्यानुवृत्तेः तत्प्रत्याख्याने तत्पाठस्य च न किमपि फलं, व्यपदेशिवद्भावेनैवेष्टसिद्धेः। न च लोकन्यायसिद्धस्य व्यपदेशिवद्भावस्य वचनेन बाधः स्यादिति वाच्यम्? तदन्ते कार्यबोधनेन सार्थक्येन बाधकत्वायोगादिति चेद्, न। "रोणी"सूत्रविषये वाचनिकतदन्तविधौ "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति व्यपदेशिवद्भावप्रतिषेधाद् 'रौण' इत्यादावणर्थं तस्यावश्यकत्वात्।

परे तु-व्यपदेशिवद्भावनिषेधकपरिभाषायाः सूत्रोपात्तान्तादिशब्दविषयकत्वेन "रोणी"सूत्रे व्यपदेशिवद्भावेनैवेष्टसिद्धावविदं चिन्त्यम्। न च येन विधिसूत्रविषयेऽपि व्यपदेशिवद्भावाभ्युपगमे अर्थवत्सूत्रे-

समासप्र (का-वा.)इति । विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदम् । एवञ्च "द्वितीयाश्रित" (पा० सू० २-१-४) इत्यादौ श्रितादयोऽधिकारप्राप्तसमर्थैरित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत्प्रकृतिके लक्षणया 'सुपा'इत्यनेनान्वयः । तेन 'कृष्णं परमाश्रितः' इत्यत्र न समासः । "नडादिभ्यः फक्" (पा० सू० ४-१-९९) इत्यादावपि नडादिविशेष्यं, प्रातिपदिकं विशेषणमिति सौत्रनाडिरित्यत्र न फक् ।

उगिद् (का. वा.) इति । तेन "अतिभवती" इत्यत्र "उगितश्च" (पा० सू० ४-१-६) इति ङीप्, 'दाक्षिः' इत्यत्र "अत इञ्" (पा० सू० ४-१-९५) च सिद्धः । एवञ्चोक्तनिषेधः प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण "गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्ति" इत्यनेनैकवाक्यत्वलाभात् । "उगिद्वर्ण" (का.वा.) इति त्वेकदेशानुवाद इति बोध्यम् । अत एव "वनोऽप्रत्ययपदात्वृत्तिपरग्रन्थासङ्गतिः, व्यपदेशिवद्भावेनैवेष्टसिद्धेरिति वाच्यम् ? प्रत्ययस्य मुख्यधर्मवद्घटकत्वेन व्यपदेशिवद्भावाप्रवृत्तेः । तादृशभाष्यप्रामाण्येन प्रत्ययग्रहणपरिभाषोपस्थिततदादिविशेषकतदन्तविधिविषये व्यपदेशिवद्भावाप्रवृत्तिकल्पनेऽपि सामान्यतस्तदप्रवृत्तिकल्पने फलाभावाच्चेत्याहुः ।

---

समासेतिवचनाङ्गीकारे गौरवादाह-*विशेषणेति* । *सौत्रनाडिरिति* । अनुशतिकादित्वादुभयपदवृद्धिः । *प्रत्ययांश इति* । समासांशे तु न मानमिति भावः । *एकवाक्यत्वलाभादिति* । परिभाषैकवाक्यतया वार्त्तिकस्य गृह्यमाणप्रातिपदिकाविषयत्वं वार्त्तिकैकवाक्यतया परिभाषायाः प्रत्ययविधिविषयत्वं नष्टाश्वदग्धरथन्यायेनेति भावः । तत्रोगिद्ग्रहणभिन्नत्वे सति वर्णग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्वे सति प्रातिपदिकवृत्तिविषयताप्रयोजकत्वं गृह्यमाणप्रातिपदिकत्वमिति बोध्यम् । *एकदेशानुवाद इति* । गृह्यमाणप्रातिपदिकस्वलक्षणे प्रतियोगिविधया प्रविष्टमिति भावः । तेन प्रत्ययस्याप्युपलक्षणमिति बोध्यम् । *अत एवेति* । वार्त्तिकपरिभाषयोरेकवाक्यत्वादेवेति, उगिद्वर्णग्रहणमित्यस्यैकदेशानुवादत्वादेवेति चार्थः ।

र च" (पा० सू० ४-१-७) इत्यादौ "प्रत्ययग्रहणे तदन्तग्रहणम्" (प. २३) इत्यस्य नायं निषेध इति दिक् ।

विरामः (पा० सू० १-४-११०) । भावे घञ् । शब्दानुशासनप्रस्तावादाह–वर्णानामिति । उच्चारणाभाव इत्यर्थः । स च व्याख्यानात्किञ्चिद्वर्णोच्चारणान्तरकालिक एव गृह्यते । प्रदेशाः

---

*विरामोऽवसानम्* । वर्णानां नित्यत्वात्तदभावस्यासम्भवादन्यथा व्याचष्टे—*उच्चारणेति* । ननु वाक्यादौ यत्र पदान्ते रेफो झल् अण् वा, तत्र वर्णाभावसत्त्वादवसानसञ्ज्ञायां विसर्गचर्त्वानुनासिकाः स्युरत आह—*स चेति* । उच्चारणाभावश्चेत्यर्थः । तत्र प्रमाणमाह—*व्याख्यानादिति* । व्याख्यानं च"र्वोरुपधायाः"इत्यादौ रेफादेः "खरवसानयोः"इत्यादिषु सर्वत्रावसानकार्येषु परसप्तमीत्वेनावसानपरत्वाभावादेव विसर्गाद्यप्राप्त्या फलाभाव एवेति बोध्यम् । तदेव सूचयन् वक्ष्यति—*प्रदेशा इति*, *अभावस्यापीति च* । *किञ्चिद्वर्णोच्चारणानन्तरेति*। ननु यत्किञ्चिद्वर्णोच्चारणाभावस्य तत्त्वे अश्व इत्यादौ अकारोच्चारणाभावस्यापि तथात्वादवसानत्वापत्तौ "अणोऽप्रगृह्यस्य"इत्यनुनासिकापत्तिः, यावद्वर्णोच्चारणाभावस्य च प्रलयकालोच्चरितरेफादौ सम्भवो नान्यत्र । यदि तु विवक्षितार्थबोधकवाक्यघटकवर्णोच्चारणाभावो विवक्ष्येत, तदाऽपि यत्र रामादित्युच्चार्यार्द्धमात्राऽधिककालमतीत्य आनयेति प्रयुज्यते तत्रेष्टमपि चर्त्वं न स्यात् । यत्र वा देवदत्तेन रामादित्युक्तम् अनन्तरमर्द्धमात्रामध्य एव काले यज्ञदत्तेनानयेत्युक्तं, तत्राप्यवसानकार्यं न स्यात् । यदि तु यत्किञ्चिद्वर्णोच्चारणाभावो ध्वंसात्मकः स्वीक्रियते; ध्वंसश्च वर्णान्तरोच्चारणासमानाधिकरणो गृह्यत इत्युच्यते; तदाऽप्यन्यदीयवर्णोच्चारणसामानाधिकरण्येनाव्याप्तिर्दुर्वारैवेति चेत्, सत्यम् । स्वविशिष्टक्षणवृत्तित्व स्वप्रतियोगिकत्वोभयसम्बन्धेन वर्णोच्चारणविशिष्टोऽभावोऽवसानसंज्ञ इत्यर्थः । संसर्गघटकवैशिष्ट्यं च—स्वकर्त्तृकर्त्तृकोच्चारणानधिकरणत्व स्वाधिकरणकालविशिष्टत्वोभयसम्बन्धेन । वैशिष्ट्यञ्च स्वोत्तरत्व स्वोत्तरार्द्धमात्राऽधिककालानुत्तरत्वोभयसम्बन्धेन । तथा च न पूर्वोक्ताव्याप्त्यतिव्याप्तिप्रसर इति बोध्यम् । समन्वयश्च स्वयमूहनीयः । *प्रदेशा इति*। ननु निरुक्तासु निर्वक्ष्यमाणासु च बह्वीषु संज्ञासु क्वचिदपि प्रदेशानुक्तेरिह तदुक्तिः किमर्थिकेति चेद्, न । अवसानसंज्ञायाः प्रदेशाः केवलं

"वाऽवसाने" (पा० सू० ८-४-५६) इत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यं, वर्णवत् ।

परशब्दो नान्यार्थोऽन्यत्वस्याव्यभिचरितत्वादत आह-अतिशयित इति । स्वभावसिद्धार्धमात्राऽतिरिक्तकालव्यवायेन रहितः। तेन तद्व्यवायेन वाक्योच्चारणे सञ्ज्ञा न । सन्निकर्षश्च प्रायः

---

परसप्तम्यन्ता एवेति सूचयितुमेव तदुक्तेरिति केचित् ।

अन्ये तु—अन्यासां संज्ञानां प्रदेशाः सापादिकाः त्रैपादिकाश्च सन्ति; तत्र सापादिकेषु प्रदेशेषु कृतार्थां संज्ञां प्रति त्रैपादिकानामसिद्धत्वात्तेषु तासामप्रवृत्तिरपि संभाव्येत; अवसानसंज्ञायास्तु सर्वे त्रैपादिका एव प्रदेशास्तत्र च सामर्थ्यादसिद्धत्वाभावः कल्पनीयः, स च सामान्यतः संस्कारकदृष्ट्या संस्कार्यस्य नासिद्धत्वमित्येवंरूपेणैव तेनान्यासामपि संस्कारिकाणां संज्ञानां त्रिपाद्यां प्रवृत्तिः सिद्ध्यतीति सूचयितुं प्रदेशानिर्देश इत्याहुः ।

*वर्णवदिति* "यावद् ब्रह्मविष्ठितं तावती वाक्" इतिश्रुत्या वर्णानां सर्वदेशकालवृत्तित्वेन दैशिककालिकक्रियाऽसम्भवाद्यथा स्वोच्चारणाधिकरणकालप्राक्कालिकोच्चारणकर्मत्वाद्यात्मकं पूर्वत्वाद्याश्रीयते; तथा अभावस्यापि स्वाधिकरणकालप्राक्कालिकोच्चारणकर्मत्वादिरूपं तद्बौद्धमाश्रीयते इति तत्त्वम् ।

परःसन्निकर्षः । *अव्यभिचरितत्वादिति* । यत्किञ्चित्प्रतियोगिकभेदस्य केवलान्वयित्वादिति भावः । यावत्प्रतियोगिकभेदस्तु असम्भवीति बोध्यम्। वर्णान्तरोच्चारणेऽर्द्धमात्राकालव्यवायस्य नियतत्वेन तदधिककालव्यवायराहितत्वमेव वर्णयोः परः सन्निकर्षः, न तु सर्वथा व्यवायहितत्वमसम्भवात्तदाह—*स्वभावसिद्धेति* । नान्तरीयकेत्यर्थः । *प्रायः परेणेत्यादि* । अयं भावः—यथा परनिरूपितमनान्तरीयककालाव्यवायेन पूर्वत्वं संहिता; तथैव पूर्वनिरूपितमपि विनिगमनाविरहात् । संहितायामिति च कार्यिविशेषणं तदाश्रयत्वमेव च तद्विषयत्वं तदुभयमपि निमित्तोपादाने तन्निरूपितमेव प्रत्यासत्तेः । यथा "इको यणचि" "झयो हः" इत्यादौ आद्येऽजिनरूपितामिन्निष्ठम्पूर्वत्वं सा अन्त्ये झय्निरूपितं हकारनिष्ठम्परत्वं सा । एतेन दधीत्युच्चार्य घटिकानन्तरमानयेत्युच्चारणे धकारनिरूपितपरत्वात्मिकायाः संहितायाः सत्त्वाद्यणः शङ्काऽपि प्रत्युक्ता । निमित्तानुपादाने तु कि-

परेण, क्वचित्पूर्वेणापि । अत एवावसानकार्याणां संहिताऽधिकारे पाठः । न चावसानसञ्ज्ञया परसत्त्वे सावकाशायाः संहितासञ्ज्ञायाः "सत्यपि सम्भवे बाधनं भवति" इति न्यायेन

क्ष्मिन्निरूपितमेव कस्याप्यप्रत्यासन्नत्वात् । यथा "वावसान" इति । तत्र सप्तमीनिर्देशानां बहुत्वादुक्तम्-*प्राय इति* । पञ्चमीनिर्देशानामवसानकार्याणां चाल्पत्वादुक्तम्-*क्वचिदिति* । न्यायसिद्धेऽर्थे लिङ्गमप्याह-*अत एवावसानेति* । *संहिताऽधिकार इति* । "तयोर्य्वावचि संहितायाम्" इत्यतस्तदधिकार इत्यर्थः । *पाठ इति* । सङ्गच्छत इति शेषः । अन्यथाऽवसानस्थले परस्य वर्णस्यासत्त्वेन तत्पूर्वत्वात्मकसंहिताया असम्भवेन तदसङ्गतेरिति भावः । नन्वेवमप्यवसानकार्याणां संहिताऽधिकारे पाठोऽसङ्गत इत्याशङ्कते—*न चेति* । *सावकाशायाः संहितासंज्ञाया इति* । एतेनावसानसंज्ञा तु निरवकाशेति सूचितम् । *न्यायेन विषयभेदेऽपि बाधः स्यादिति* । तदनुवादकाकडारसूत्रेणेत्यर्थः । तस्य न्यायस्य संज्ञाविषयेऽप्रवृत्तेस्तत्सूत्रे वक्ष्यमाणत्वात् । अत एव समाधौ सूत्रस्यैव सङ्कोचः सङ्गच्छते ।

ननु अशब्दादेः सम्बुद्धौ वाक्यैकदेशन्यायेन प्रयोगे वर्णद्वयासत्त्वेन संहितासंज्ञाया अप्राप्त्या तत्र "अणोऽप्रगृह्यस्य"इत्यनुनासिकसम्पादनेनावसानसंज्ञा सावकाशेति चेद्, न । अवसानकार्याणां संहिताऽधिकारे पाठेनैकवर्णे तत्तत्कार्याणामप्राप्त्या तस्यानिरवकाशत्वस्य दुर्वारत्वात् । अत्र कथञ्चिदवसानसंज्ञायाश्चारितार्थ्येऽपि परत्वाद्बाधशङ्काया दुर्वारत्वेनानवकाशत्वाद्बाधप्रतिपादनस्योपलक्षणत्वाच्च । एतच्छङ्कापरभाष्यप्रामाण्येन संहितासंज्ञाऽविषयाणामवसानसंज्ञाविषयाणामनभिधानाच्च । वर्णावयवस्यापि "कृपो रोल"इत्यादिनाऽनुशासनलाभाद्वर्णेषु तदवयवत्वस्य व्यपदेशिवद्भावलभ्यत्वेन व्यापकत्वाद्वर्णावयवानां सन्निधेरेव संहितासंज्ञाविधानेनैकवर्णस्थलेऽपि संहितासंज्ञायाः प्राप्तेर्निरवकाशतायास्तादवस्थ्याच्च । नन्वेवमपि अत्र बाध्यबाधकभावोऽनुपपन्नः; व्याप्यधर्मावच्छिन्नोद्देश्यताकशास्त्रेण व्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाधाभ्युपगमेन प्रकृते वर्णसन्निधित्ववर्णोच्चारणाभावत्वयोर्वैयधिकरण्येन व्याप्यव्यापकभावाभावादिति चेद्, न । द्वितीयैकाज्द्विर्वचनेन प्रथमैकाज्द्विर्वचनस्य बाधोपपत्तये परम्परासम्बन्धेनापि व्याप्यव्यापकभावमाश्रित्य व्याप्यविषयताकशास्त्रेण व्यापकविषयता-

विषयभेदेऽपि बाधः स्यादिति तदसङ्गतिरेवेति वाच्यम् । तदधिकारे तेषां पाठेन "आकडार" (पा०सू० १-४-१) सूत्रस्य स्वशास्त्रीयसञ्ज्ञामात्रविषयत्वकल्पनात् । एते तु न तथा, लोकेऽपि सत्त्वात् । तदुक्तं वार्त्तिककृता—"संहिताऽवसानयोर्लोकविदितत्वात्" इति । न चावसानकार्येषु संहिताऽधिकारासम्बन्ध एवास्तु, अग्रे च मण्डूकप्लुतिरस्त्विति वाच्यम् । सत्यामुपपत्तौ मण्डूकानुवृत्तेरयुक्तत्वात् । ध्वनितश्चेदं "विसर्जनीयस्य सः" (पा०सू०८-

---

कशास्त्रस्य बाध इत्यस्यान्यत्र निर्णीतत्वेनेह विरामपदप्रयोज्यविषयतायाः स्वाश्रयप्रतियोग्युच्चारणकर्मत्वसम्बन्धेनाधिकरणे वर्णे सन्निधिपदप्रयोज्यविषयतायाः स्वाश्रयाश्रयत्वसम्बन्धेनाभावाभावेन व्यापकत्वोपपत्तेः ।

वस्तुतस्तु शङ्कासमाधाने अत्र निर्दले; संज्ञयोः स्वतो विरोधाभावाद् "आकडार" इति सूत्र एकापदश्रुत्या संज्ञान्तराऽसमानाधिकरणसंज्ञाया विधानेन विरोधोऽपि नेहोपपादयितुं शक्यः; समानावधिकसंज्ञयोर्विषय एव तत्प्रवृत्तेः । कथमन्यथा राज्ञ इत्यत्र सुबन्तस्य पदसंज्ञा नान्तस्य भसंज्ञया समाविशेत् ।

यत्तु—एकस्मिन्धर्मे एकसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्वमेव भवतीत्येवाकडारसूत्रस्यार्थः । अवच्छेदकता च साक्षात्परम्परासाधारणी गृह्यते, तथा च वर्णस्वरूप एकस्मिन्धर्मे एकसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्वमेव स्यादिति विरोधः स्पष्ट एवेत्याहुः; तदसत् । एवंसति समाससंज्ञापदसंज्ञयोः सुबन्तत्वरूपैकोद्देश्यतावच्छेदकत्वेन समावेशानुपपत्तेरिति बोध्यम् ।

*तदधिकारे* —संहिताधिकारे । *तेषाम्*–अवसानकार्याणाम् । *कल्पनादिति* । तथा च विरोधाभावेन न बाध्यबाधकभाव इति भावः । *एते*–अवसानसंहितासंज्ञे । *अग्रे इति* । "तोर्लि" इत्यादावित्यर्थः । *मण्डूकेति* । अग्निचिल्लुनातीत्यादौ संहिताभावे परसवर्णाभावार्थमिति भावः । *सत्यामुपपत्ताविति* । संहिताऽधिकारे पाठसामर्थ्येनेति भावः । *ध्वनितमिति* । तत्र हि अनवकाशत्वाद् बाधपक्षे पूर्वपरसन्निकर्ष एव संहितासंज्ञेति पक्षे च "अणोऽप्रगृह्यस्य" इत्यत्रोभयानुवृत्त्यादोष उक्तः । तेन च मण्डूकप्लुतिरयुक्तेति स्पष्टमेव लभ्यत इति भावः । सन्निकर्षश्च—न संयोगसमवाया-

३-३४) इति सूत्रे भाष्ये। सन्निकर्षः सामीप्यम्।

सुप्तिङ् (पा०सू०१-४-१४)। सुबिति सुपः पकारेण प्रत्याहारो व्याख्यानात्। यद्यपि "प्रत्ययग्रहणे तदन्तग्रहणम्" (प० २३) इत्युक्तेः शब्दरूपं विशेष्यमादाय तदन्तग्रहणं सिद्धम्। प्रत्ययेन स्वप्रकृत्यवयवकसमुदायस्याक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति न युक्तम्। 'इयान्' इत्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात्, आक्षिप्तस्य शाब्देऽनन्वयाच्च। तथाऽपि स-

---

दिः सम्बन्धः; गुणानां तदभावात्। नित्यविभुद्रव्यतापक्षेऽपि न; अजसंयोगनिराकरणादत आह—*सामीप्यमिति*।

*सुप्तिङन्तम*। *सुपः पकारेणेति*। न तु व्याप्तिन्यायात्कपः पकारेण "स्वादिषु" इति सूत्रे सुपीति वाच्ये स्वादिग्रहणसामर्थ्यात् "प्राग्दिशो विभक्तिः" इति सूत्रसामर्थ्याच्च। नापि टाबादेः; पकारेण सुपः पकारस्यैकसूत्रोपात्तत्वेन प्रत्यासन्नत्वात्; प्रथमोपस्थितत्यागे मानाभावाच्च। सुपः पकारोच्चारणसामर्थ्यात्तेनैव प्रत्याहार इति तु न युक्तम्; तस्य "रोः सुपि" इत्यत्र ग्रहणार्थत्वात्। तिङ्साहचर्यादेकसूत्रोपात्तेन पकारेणैव प्रत्याहार इत्यपि न युक्तम्; यङ्ण्यङादीनामपि सत्त्वात्तैः सह तिङ्प्रत्याहारवारणायापि व्याख्यानस्यैवाश्रयणीयत्वात्। *प्रत्याहार इति*। न तु सप्तमीबहुवचनमात्रस्य ग्रहणं; तिङ्साहचर्यात्, "न ङि सम्बुद्ध्योः" इति सूत्रसामर्थ्याच्च। तदेतत्सकलमभिप्रेत्याह—*व्याख्यानादिति*। *शब्दरूपमिति*। तदादीत्यत्रान्यपदार्थजिज्ञासायां तदध्याहारस्यावश्यकत्वात तदादीति शब्दरूपं विशेष्यमादायेति केचित्। कौस्तुभाद्युक्तिं खण्डयति—*प्रत्ययेनेति*। प्रत्ययः घटकतासम्बन्धेन स्वस्वप्रकृत्येतदुभयावयवकसमुदायविशिष्टः; प्रत्ययत्वात्, यन्नैवं तन्नैवमित्यनुमिति शरीरम्। *समुदायेनेति*। प्रतियोगित्वं तृतीयाऽर्थः; अभावो व्यभिचारपदार्थः। तथा च इयानित्यादौ तादृशसमुदायप्रतियोगिकाभावेन हेतोश्च सत्त्वेन व्याप्यत्वासिद्ध्याऽऽक्षेपासम्भवादित्यर्थः। ननु प्रक्रियायां तादृशसमुदायस्य सत्त्वेनेदानीमपि तदारोपेण स्वावधिकपरत्वावच्छिन्नविधेयताश्रयत्व स्वसमानकालिकत्वैतदुभयसम्बन्धेन स्वावधिकपूर्ववर्त्तिविशिष्टत्वस्य हेतुत्वोपगमेन हेतोरप्यत्रासत्त्वेन वा न व्यभिचार इत्यत आह—*आक्षिप्तस्येति*। *शाब्देऽनन्वयादिति*। विषयतया शाब्द-

ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावज्ञापनार्थमन्तग्रहणम् । तेन घसञ्ज्ञा तरप्तमपोरेव, न तदन्तस्य । तेन 'गौरिब्राह्मणितरा' इत्यत्र न ह्रस्वः। एतन्निषेधसामर्थ्यादेव, प्रदेशेऽपि न तदन्तविधिः । न च ज्ञापितेऽपि व्यर्थम्, पदप्रदेशे प्रत्ययग्रहणे तदन्तग्र-

---

धिर्यं प्रति विषयतया परवृत्तिज्ञानाधीनोपस्थितेर्हेतुत्वादिति भावः । *गौरिब्राह्मणितरेति*। अत्रवर्णा भवेद् गौरीति यमवचनाद् गौरीशब्दस्य वयोवाचित्वेन वैकल्पिकजातिकार्यभाक्त्वेन "जातेश्च" इति पुंवत्त्वनिषेधः। ननु घसंज्ञायां तदन्तविषयमात्रेऽपि प्रदेशेषु तदन्तविधौ पुनरुक्तदोषस्तदवस्थ एवेत्याशङ्कयाह—*एतन्निषेधेति*। "सञ्ज्ञाविधौ"इति निषेधेत्यर्थः। नन्विदमनुपपन्नम्, एतत्परिभाषासत्त्वे "घरूप" इत्यत्रोत्तरपदविशेष्यकघविशेषणकतदन्तविधेरुत्तरपदाधिकार इति निषेधात्तदादिविशेष्यकतदन्तविधेः "प्रत्ययग्रहणे चापञ्चम्याः" इति निषेधाद् 'गौरिब्राह्मणितर' इत्यत्र ह्रस्वो न भवति, एतदभावे तु संज्ञाशास्त्रे तदन्तविधेर्दुर्वारत्वेन प्रदेशे घादस्य प्रत्ययबोधकत्वाभावेन तयोः परिभाषयोरप्रवृत्त्या प्रवृत्तेराकिञ्चित्करत्वेन च तत्र ह्रस्वः स्यात् ।

यत्तु—"रात्रेः कृति"इत्यादौ तदन्तविधिनिषेधाभावायोत्तरपदाधिकार इति परिभाषाया ज्ञापकसाजात्याच्छ्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकप्रत्ययबोधकपदमात्रविषयकत्वकल्पनेन प्रकृते निषेधाप्राप्त्या परिभाषासामर्थ्यसम्भव इत्याहुः, तन्न। एवं सति "एकतद्धिते च"इत्यत्राप्यप्रवृत्त्यापत्तेरिति "रात्रेः कृति"इत्येतदनुरोधेन ज्ञापकसाजात्यात्कृन्मात्रवृत्तिविषयताप्रयोजकेतरप्रत्ययबोधकमात्रविषयकत्वकल्पनेन प्रकृते निषेधस्य दुर्वारत्वात् ।

यदि तु तत्सूत्रं "सर्वनाम्नो वृत्तिमात्र"इतिभाष्येष्ट्या गतार्थत्वान्नोक्तं साजात्यलब्धमर्थं त्याजयितुं ज्ञाप्यतीत्युच्यते, तदाऽपि "संज्ञाविधौ"इत्यस्याः "घः प्रत्ययस्य"इत्यत्र तदन्ताग्रहणायावश्यकत्वम् । यदि तु तत्र प्रत्ययपदस्य साक्षादुद्देश्यताप्रयोजकत्वाभावेन प्रत्ययबोधकत्वेन च न तत्परिभाषाविषय इत्युच्यते; तदाऽपि "ईदूदेद्"इत्यत्र दन्तविध्यभावाय परिभाषा सार्थिका । तत्र हि तदन्तविधौ 'कुमार्यगारम्'इत्यत्रेदन्तत्वस्य स्वतः सिद्धत्वाद् द्विवचनान्तत्वस्य प्रत्ययलक्षणलभ्यत्वेन प्रगृह्यत्वापत्तेः । न च तत्र प्रदेशे तदन्तविधिसम्भवः, प्रगृह्यपदस्य प्रत्ययमात्रग्रहणत्वाभावेन तदादेरनुपस्थितेः । यदि तु तत्र

हणेनैव सिद्धेरिति वाच्यम् । पदत्वस्य प्रकृतिसाधारणतया पदग्रहणे प्रत्ययग्रहणस्यैवाभावात् । "यस्मात्प्रत्ययविधिः" (पा०सू०

ईदन्तं यद् द्विवचनं तदन्तमित्याद्यर्थे तदन्तविधावपि न क्षतिरिति शब्दरत्नोक्तमनुस्रियते; तदाऽपि "क्तक्तवतू निष्ठा"इति सूत्रे तदन्तविधिनिषेधाय परिभाषा सार्थिका। तत्प्रदेशे"रदाभ्याम्"इत्यत्र "प्रत्ययग्रहणं चापञ्चम्याः"इति निषेधादिति चेत्? सत्यम्। एतन्निषेधसामर्थ्यादित्यत्रैतत्पदेन तदन्तविधेः परामर्शादेतस्य तदन्तविधेर्यो निषेधः, उत्तरपदाधिकार इति प्रत्ययग्रहणं चेति च तस्य यत्सामर्थ्यं बलं तस्मात् प्रदेशेषु "घरूप"इत्यादिषु "रदाभ्याम्"इत्यादिषु च न तदन्तविधिरित्यर्थात्। एतेन एतन्निषेधसामर्थ्यादित्याद्ययुक्तम् । न चेत्यादिशङ्का पराग्रिमग्रन्थविरोधादिति वदन्तोऽपि परास्ताः। पदसञ्ज्ञाविषये प्रदेशे तदन्तविधेः सर्वथाऽप्रसक्तिरेवेति सूचयितुं तथाशङ्कासमाधानयोरविरोधाच्चेति दिक्।

*प्रकृतिसाधारणतयेति*। "स्वादिषु"इत्यनेन प्रकृतेरपि तत्संज्ञाविधानादिति भावः। ननु अन्तग्रहणं कथं ज्ञापकम्; तत्सत्वे सुबन्तं यत्तदादितदन्तं पदमित्यर्थबोधनेन पदसमुदायस्य पदत्वार्थमन्तग्रहणमस्त्वित्यत आह—*यस्मादिति*। अथवा ननु परिभाषाज्ञापनोत्तरमन्तग्रहणे क्रियमाणे "कृत्तद्धित"इति सूत्रस्थभाष्यप्रामाण्येन संज्ञानिष्ठविधेयतया साक्षान्निरूपिता यत्र प्रत्ययनिष्ठोद्देश्यता तत्रैव निषेधस्य स्वीकर्तुमुचितत्वेन प्रकृते तदप्राप्त्या तदन्तविधौ पदसमुदायस्य पदत्वं दुर्वारमत आह--*यस्मादिति*। अथवा ननु तदन्तविधिनिषेधे तदादेरपि फलाभावेनानुपस्थितौ सुबन्तसमुदायस्य पदत्वापत्तिरत आह--*यस्मादिति*। तथा च समुदायस्य तदादित्वाभावेन न दोष इति भावः।

वस्तुतस्तु अनुवृत्तेरित्यस्य "यस्मात्प्रत्यय"इत्येतन्मूलकप्रत्ययग्रहणपरिभाषया तदाद्युपस्थितेरित्यर्थादाद्ययोरवतरणयोरदग्धदहनन्यायेन तदादित्वधर्ममात्रोपस्थित्या द्वित्तदन्तविधावपि पदसमुदाये संज्ञाया अप्रसक्तेर्ज्ञापकत्वादि सुयोजम्। एवं तृतीयेऽवतरणेऽपि तदाद्युपस्थित्यैव ग्रन्थः सुयोजनीयः; तत्र कल्पे तदन्तविधिनिषेधेऽपि तदनुपस्थितौ मानाभावात् । सूत्रघटकतदादिपदेऽनुवृत्त्यर्थकस्वरितत्वप्रतिज्ञाने तु न मानम्, किञ्चात्र तदनुवृत्त्या निर्वाहेऽपि "सनाद्यन्ता" इत्याद्यानुकरीतेरेवानुसर्तव्यतयाऽत्रापि तदनुसरणमेवोचितमिति बो

१-४-१३) इत्याद्यनुवृत्तेः पदसमुदायस्य न पदत्वम् ।

'इयान्' इत्यादौ यस्मात्प्रत्ययविधिस्तदादितद्धितान्तत्वं व्यपदेशिवद्भावेन बोध्यम् । तेनाशास्त्रीयस्याप्येकाच्त्वादेरतिदेशात् । विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि असहायेऽपि कर्त्तव्यानीति तदर्थात् । अत एव 'इयन्मात्रम्' इत्यादौ 'वत्वन्तात्स्वार्थे' इति मात्रच्सिद्धिः । 'हरिषु' इत्यादौ सोऽस्तु नैवं पदत्वं, "हलि सर्वेषाम्" (पा०सू०८-३-२२) इति निर्देशेन ससहाये तदप्रवृत्तेः । "निजौ चत्वार एकाचः" इति भाष्यन्त्वभ्युपेत्यवादेन । ध्वनितश्चेदम् "आदेच उपदेशे" (पा०सू०६-१-४५) "तास्यनुदात्तेत्" (पा०सू०६-

ध्यम् । *पदसमुदायस्य न पदत्वमिति* । तेन देवदत्तः पचति भवतीत्यादौ भवतीत्यादेः "तिङ्ङतिङ" इति निघातो नेति भावः । नन्वेवं संज्ञाविषये प्रत्ययग्रहणपरिभाषया तदाद्युपस्थितेरावश्यकत्वे "कृत्तद्धित" इति सूत्रेऽपि तदुपस्थितौ 'इयान्' इत्यत्र कार्यकालपक्षे कथं प्रातिपदिकत्वमत आह-*इयानित्यादाविति* ।

*व्यपदेशिवद्भावेनेति* । वस्तुतस्त्विदमनुपपन्नम्; सुब्लुगर्थं पूर्वप्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेनातिदेशात् । न हि कार्यकालपक्ष उपदेशेनैकवाक्यता नातिदेशेनेत्यत्र मानमस्ति, ध्वनितं चास्य तत्त्वं वत्वन्तात्स्वार्थे इति प्रयोजनान्तरं वदता ग्रन्थकृताऽपि । *तेनेति* । व्यपदेशिवदित्यनेनेत्यर्थः । *अशास्त्रीयस्यापीति* । शास्त्रस्थपदसङ्केतितावच्छेदकत्वं तत्त्वमित्यभिप्रेत्येदम् । वस्तुतस्तु एकाच्त्वादिशास्त्रीयमेवेत्यन्यत्र प्रपञ्चितम् । *अत एवेति* । विशिष्टनिष्ठव्यवहारनिमित्तककार्यस्य व्यपदेशिवद्भावलभ्यत्वादेवेत्यर्थः । *मात्रच्सिद्धिरिति* । इदमप्यन्यथासिद्धमेव, 'इ इयद्' इत्यवस्थायाम "अन्तरङ्गानपि" इति न्यायेन "यस्य" इति लोपं बाधित्वा पूर्वमेव मात्रचः प्रवृत्तेः । यदि तु अन्तरङ्गनिमित्तविनाशकलुक एव तेन प्राबल्यबोधनान्नैतद् युक्तमित्युच्यते, तदाऽपि प्रत्ययग्रहणपरिभाषाया अधिकमात्रव्यावर्त्तकत्वस्यैव कल्पनीयत्वेनेह मात्रच् सुलभ एव । नन्वेवं हरिष्वित्यत्रापि सोः पदत्वापत्तिरिति चेद्? न । "हलि सर्वेषाम्" इति निर्देशेन "लोपदाद्योः" इत्यत्र सातिग्रहणेन चाधिकस्य यस्माद्विहितस्तदादेः सङ्ग्रहसम्भवे न्यूनस्यापि व्यावृत्तिकल्पनादित्याचारिणः । न्यायसिद्धमप्यर्थं सप्रमाणयति—*हलि सर्वेषामिति* । *अभ्युपेत्यवादेनेति* । एकस्मिन्नित्य-

१-१८६) इत्यादौ भाष्ये । तत्र हि 'ढौकते' इत्यौकारस्य 'हतः' इत्यादावकारस्यैजन्तोपदेशत्वमकारान्तोपदेशत्वं व्यपदेशिवद्भावेनाशङ्क्यार्थवता व्यपदेशिवद्भाव इत्युक्तम् । यो वर्णोऽर्थवांस्तेन व्यपदेशिवद्भावः । वर्णस्यार्थवत्त्वञ्च 'इयाय' इत्यादावसहाये एव, न तु प्रकृते इति तदर्थः । एवञ्चैकस्मिन्नित्यस्यार्थवतेत्यनेनोक्ते इति दिक् ।

हलोऽनन्तराः (पा० सू० १-१-७) । 'गर्गाः शतं दण्ड्यन्ताम्' इत्यत्र समुदाये शतदण्डनवदत्र समुदायस्यैव सञ्ज्ञा, न प्रत्येकम्, अन-

---

स्यापर्यालोचनया ससहायेऽपि प्रवृत्तिरित्यभ्युपेत्यवादेनेत्यर्थः। *प्रकृत इति* । औकारे अकारे चेत्यर्थः ।

*हलोऽनन्तराः* । *समुदायस्यैवेति* । उद्देश्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकविधेयकत्वस्य संज्ञासु नियतत्वेन प्रकृते उद्देश्यतावच्छेदकसाहित्यप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यद् द्वित्वं तदेव संज्ञाप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमिति द्वयोरेव संयोगसंज्ञेति भावः । *न प्रत्येकमिति*। तथासति निर्यायादित्यत्र "वान्यस्य संयोगादेः" इत्येत्वं, सुदृषद्भातीत्यत्र "संयोगान्तस्य" इति लोपश्च स्यादिति भावः। ननु ब्राह्मणा भोज्यन्तामित्यत्र प्रत्येकं भोजनान्वयवदिहापि प्रत्येकमेव संयोगसंज्ञा किन्न स्यात्; शास्त्रे द्वयोरपि न्याययोर्व्यवस्थापितत्वादत आह—*अनन्तरा इत्युक्तेश्चेति* । न च समुदाये सत्येव प्रत्येकं यथा स्यात्; न तदभावे, तेन लिडित्यादौ न संज्ञेत्येतदर्थमेवानन्तरा इतीति वाच्यम् ? हलित्येव वाच्ये बहुवचननिर्देशेनैव तल्लाभसम्भवादित्यनन्तरग्रहणं व्यर्थं सत्समुदायस्यैव सञ्ज्ञित्वं प्रयोजयतीति वैद्यनाथसदाशिवभट्टौ ।

वस्तुतस्तु अनन्तरग्रहणवैयर्थ्यकल्पनाया नोपयोगः; किन्तु नास्त्यन्तरं येषामिति विग्रहनिष्पन्नेनानन्तरपदेन संयोगवह्निप्रयोगन्यायेनान्तर्याभाववद् द्वित्ववतामेव ग्रहणेन तावतैव प्रत्येकं संज्ञाभावः सिद्ध्यति । अथ किमिदमान्तर्यं यत्प्रत्येकं न विश्राम्यतीति चेत् ? स्वावधिकपरत्वसामानाधिकरण्य—स्वावधिकपूर्वत्वसामानाधिकरण्याभ्यां यत्किञ्चिद्वस्तुविशिष्टद्वित्वपर्याप्त्यधिकरणत्वं तत्त्वमिति गृहाण । तथा च यथा रामघटकरेफमकारयोराकारविशिष्टद्वित्वपर्याप्त्यधिकरणत्वेन

न्तरा इत्युक्तेश्च तस्य विशेषणताया एवौचित्यात् । यत्तु "संयुज्यन्ते वर्णा यत्रेत्यन्वर्थसञ्ज्ञाबलान्न प्रत्येकं संज्ञा" इति, तन्न, घटपटौ संयुज्येते यत्रेत्यादौ संयुज्यमानपदार्थातिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तदतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य सञ्ज्ञाऽऽपत्तावनिष्टापत्तेः । महासञ्ज्ञा तु प्राचामनुरोधादेव । तेन 'सुदृषद्ब्राति' इत्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः । 'हलः' इति बहुवचनं सौत्रम् ।

यद्वा, हलौ च हलश्चेत्येकशेषः । "स्वरितात्संहितायाम्" (पा० सू० १-२-३९) इति सूत्रेऽनुदात्तानामिति पदे तथैकशेषस्य

---

व्यवहितत्वव्यवहारः । एवमिह तदभाववन्तावपि द्वित्वपर्याप्त्यधिकरणीभूताविव गृहीतव्याविति न प्रत्येकं संज्ञाप्रसक्तिरिति बोध्यम् ।

ननु आनन्तर्यस्योपलक्षणत्वेन कदाचिदानन्तर्यस्य समूहे सत्त्वेन तदादायान्यत्रातिप्रसङ्गस्तदवस्थ एवेत्यत आह—*तस्येति* । आनन्तर्यस्येत्यर्थः । एवेनोपलक्षणत्वव्यवच्छेद इति टीककाः ।

केचित्तु—ननु हलः प्रत्येकं संयोगसंज्ञाः स्युः; अनन्तराश्च संयोगसंज्ञाः स्युरित्यर्थादतिप्रसङ्गस्तदवस्थ इत्यत आह—*तस्येति* । आनन्तर्यस्येत्यर्थः । एवेन वाक्यभेदस्य व्यवच्छेदः सम्भवत्येकवाक्यत्व इति न्यायादिति व्याचख्युः । तस्येत्यनेन हलपदैकशेषलभ्यसाहित्यस्य परामर्शादनन्तरा इत्युक्तेः साहित्यस्य विशेषणताया एवौचित्यादिति समुदित एव हेतुः समुदायस्य संज्ञायामिति तु मे प्रतिभाति । कैयटाद्युक्तिं खण्डयति—*यत्त्वित्यादिना* । *अनिष्टापत्तेरिति* । भवदुक्तरीत्या विप्रेतिसमुदायस्य संज्ञायां शोभनविप्रशब्दावयवनकाराकारस्य गुरुसंज्ञापत्तौ तस्य प्लुतापत्तिरूपानिष्टापत्तेरिति भावः । *तेनेति* । समुदायसंज्ञाकरणेनेत्यर्थः । ननु हल इति बहुवचननिर्देशाद् द्वयोर्हलोः समुदायस्य संज्ञा न स्यादत आह—*सौत्रमिति* । अनर्थकमिति भावः । एकहलस्तु अनन्तरा इत्यनेनैव व्यावृत्तिसम्भवात् ।

बहूनां समवाये द्वयोः संयोगसंज्ञा नेतिवदतां प्राचां मतेनाह—*यद्वेत्यादि* । ननु भिन्नवचनोपादानेन सहविवक्षाप्रदर्शनमयुक्तमन्यत्रादर्शनादत आह—*स्वरितादिति* । *तथैकशेषस्य*—अनु-

भाष्ये करणात् । तेन द्वयोरपीति 'शिक्षा' इत्यादौ "गुरोश्च हलः" (पा० सू० ३-३-१०३) इति अप्रत्ययः सिद्ध्यति । यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव न बहूनाम्, झलि परे संयोगादिलोपविधानात् । बहूनामपीति चिन्त्यमेव, फलाभावात् । तत्र तत्राङ्गपदधात्ववयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम् ।

---

वात्तस्य चानुदात्तयोश्चानुदात्तानामित्येवं प्रदर्शनेनैकशेषस्य । स्वमतमाह--*यत्रापीति* । न बहूनामिति संयोगवद्विप्रयोगन्यायेन परिष्कृतान्तर्याभाववतोर्द्वयोरेव ग्रहणादिति भावः । स्वयं प्रमाणान्तरमप्याह—*झलि परे इति* । *विधानादिति* । यदि तत्र बहूनामेव स्यात्तदा तत्र झलि परे संयोगादिलोपविधानं व्यर्थं; न हि तत्र परे तत्सम्भवः, भ्रस्जादिधातोः क्तप्रत्यये तत्सहितस्यैव संयोगसंज्ञाप्रवृत्तेरिति भावः । किञ्चैवं निर्ग्लेयादित्यत्र "वान्यस्य" इति न प्रवर्त्तेतेति लक्ष्यदोषोऽपि बोध्यः । नन्वेवं तर्हि बहूनामेवेति न वाच्यम् , बहूनामपीति तु वाच्यम् , तावतैव तत्सार्थक्यादत आह--*बहूनामपीति* । कैयटाद्युक्तिरेवेयम्, अपिरन्वर्थत्वादिसमुच्चायकः । *फलाभावादिति* । भूयादित्यत्र तु "स्कोः" इति सुटो निवृत्तौ पश्चात्तेनैव यासुटः सस्य निवृत्तिरिति भावः। ननु बहूनां संयोगसंज्ञायाः फलं द्वयोः संयोगसंज्ञाया व्यावृत्तिरेव भविष्यतीत्यत आह-*तत्र तत्रेति*। *तादृशस्य*-अङ्गाद्यवयवस्य । *अभावादिति* । तथा च शास्त्रबोध्यस्य तत्फलस्यासम्भवेन बहूनां निष्फलत्वान्न भविष्यतीति भावः । ननु मङ्क्त्यादावन्त्यात्पूर्वं नुमि संयोगादिलोपः फलमस्त्येव; न च तत्र सकारनकारयोः संयोगसंज्ञया जकारे परे स स्यादिति वाच्यम् ? काष्ठशक्स्थातेत्यादौ कलोपवारणाय सनः सकारमादाय महिङो ङकारेण सङ्प्रत्याहारमाश्रित्य "सङि" इति वार्त्तिकेन झलादौ सङि तद्विधानादिति चेत् ? अत्राहुः-मस्जोऽपि मिदन्त्यादचः पर एवास्तु; न चैवं मग्न इत्यादौ नलोपानापत्तिरिति वाच्यम् ? नलोपविधायक एव मस्जेः के इत्युक्त्याऽनुपधाभूतस्यापि नस्य लोपेन दोषाभावात् । यद्वा, नुम्विधायक एव योगविभागोऽस्तु ; नशो झलि मस्जेः स इति मस्जेः सकारस्य नुमादेश इत्यर्थः । "भ्रस्जोरोपध" इत्यत्रेव सकारस्य निवृत्तिरिति बोध्यमिति भट्टाः ।

आनन्तर्यं व्यवधानाभावः, व्यवधानञ्च विजातीयेनैवेत्याशयेनाह—अज्भिरिति । अत्र कुत्वं न्याय्यम् । अत एव "हयवरट्" (मा०सू० ५) सूत्रे "अचोऽक्षु" इति भाष्यप्रयोगे कुत्वं दृश्यते । स्वैरव्यवहिता इति तूचिता वृत्तिः । हलः किम् ? तितउ देव । अत्र "गुरोः" (पा०सू०८-२-८६) इति प्लुतः स्यात् । अनन्तराः

अन्ये तु—"अनिदिताम्" इति सूत्र उपधापदस्यान्त्यात्पूर्वमात्रोपलक्षणत्वेन मग्न इत्यादौ नलोपस्य सिद्धा "मस्जेरन्त्यात्पूर्व" इति वार्त्तिकस्यानावश्यकत्वेन मङ्क्त्यादौ सकारजकारयोः संयोगसंज्ञयैव दोषाभावः । न चैवमुपलक्षणत्वे तक्षतेः क्विपि जसि "नपुंसकस्य" इति नुमि तङ्क्षीत्यादौ नलोपापत्तिरिति वाच्यम् ? घटकनिमित्तकत्वेनान्तरङ्ग उपधानलोपे कर्त्तव्ये नुमोऽसिद्धत्वादित्याहुः ।

परे तु-अन्त्यात्पूर्वे नुमयपि नकारेण व्यवहितयोरपि सकारजकारयोर्विजातीयेनाचाऽव्यवधानात्संयोगसंज्ञाया निराबाधं प्रवृत्तेर्न दोषलेशोऽपीत्याहुः । एवञ्चानेकधानिर्वाहे सम्भवति फलाभावादित्यस्य मङ्क्त्यादिलक्ष्यासिद्धिभिया एकस्मिन् प्रयोगे द्वयोर्बहूनाञ्चेति संज्ञाद्वयस्वीकारे फलाभावादित्यर्थः । एवञ्च बहूनां समवधानेऽपि यत्र द्वयोः संज्ञायाः प्रयोजनमस्ति तत्र द्वयोरेव संज्ञा । यत्र तु बहूनामेव संज्ञायाः प्रयोजनमस्ति तत्र बहूनामेवेति श्रीधरोक्तं क्लिष्टं व्याख्यानम् । आचार्युक्तमेतदयुक्तत्वप्रतिपादनं च विफलमेव ।

यत्तु-बहूनां समवाये द्वयोः संज्ञाभावस्य "ससित स्वप्न" इत्यस्य धातोर्नुमि संस्ति संस्त इत्यत्र सकारस्य लोपाभावं फलमाहुः, तन्न । तस्य धातोश्छान्दसत्वेन छन्दसि सर्वविधीनां वैकल्पिकत्वेनेष्टसिद्धेरित्यलम् । *कुत्वं न्याय्यमिति* । ननु "अदाचूतरम्" इत्यादिनिर्देशात् प्रत्याहारबोधकेऽच्परे कुत्वाभावबोधनान्नैतदनुपपन्नमत आह—*अत एवेति* । तथा च तत्तन्निर्देशाद् वृत्तावेव कुत्वाभावः कल्पनीय इति भावः । ननु अग्भिरित्युक्ताविचामकां वाऽव्यवधानं विवक्षितमिति सन्देहः स्यादतोऽसन्देहार्थं यद्वक्तव्यं तदाह—*स्वैरिति* । वस्तुतस्तु अजनुनासिकः अजह्रस्वदीर्घप्लुत इत्यादिनिर्देशादचः पदान्ते सर्वत्र कुत्वाभावः कल्पनीयः । अक्षिवतिभाष्यप्रयोगात्सुपि परे कुत्वं कल्पनीयमित्युक्तनिर्देशोऽपि सङ्गत एवेत्याचारिणः । *तितउ देवेति* । तितउना दीव्यतीत्यर्थः । *प्लुतः स्यादिति* । तकाराकारयोः संज्ञायां

किम्? द्रप्सम्। अत्र सकारमकारयोः संयोगत्वे "स्कोः" इति लोपः स्यात्।

संयोगे गुरु (पा० सू० १-४-११) 'भेत्ता' इत्यादौ गुणस्तु क्नोः क्त्वसामर्थ्येन भूतपूर्वलघूपधग्रहणाद् बोध्यः।

---

तिमध्य इकारस्येति भावः।

ननु अनन्तरा इत्युक्तेर्विजातीयव्यवधानशून्यस्य सजातीयाक्षरसमुदायस्य संज्ञाविधानादिह न दोष इति चेद्, न। प्रत्येकं संयोगसंज्ञेति पक्षाभिप्रायेणोकारस्य संयोगसंज्ञायां तकाराकारस्य प्लुतापत्तेस्तात्पर्यविषयत्वात्। समुदायस्य संज्ञेतिमुख्यपक्षे तु प्लुतपदं संयोगान्तलोपस्योपलक्षणम्। यदि तु तत्र झलनुकृष्यते, तदा तितउ इवेति तितउ ऋच्छतीत्यस्योपलक्षणं बोध्यम्। तत्र हि उऋ इत्यस्य संज्ञायां तकाराकारस्य प्लुतापत्तिर्दोषः। अथवा तितओ इतीत्यस्योपलक्षणं, तत्र हि "सम्बुद्धौ शाकल्यस्य" इति प्रगृह्यत्वादुत्तरत्र सन्ध्यभावः। अथवा हे नर अ इति कुरु इति राम अइउणं पश्येति वोपलक्षणीयम्।

*द्रप्समिति*। "द्रप्सं दधिघनेतरद्" इत्यमरः। यद्यपि भाष्ये पनसामत्येतद्व्यावर्त्यमुक्तम्, तथाऽपि तत्र पञ्चम्यन्तस्य झल इत्यस्य "स्कोः" इति सूत्रेऽनुवृत्तिं कृत्वा सकारलोपाभावशङ्काऽपि स्यादित्यस्योपन्यासः। वस्तुतस्तु न तत्र झल इत्यस्य सम्बन्धः, अग्रेत्यादौ सकारलोपानापत्तेः। यदि तु तत्र षष्ठ्यन्तं झलपदं काक्यर्थं वास्यर्थमित्यत्र संयोगादिलोपाभावार्थमनुवर्त्य झलन्तो यः संयोगस्तदादेरित्यर्थं परिकल्प्य "पूर्वत्रासिद्धे न" इत्यस्य दोषभूते वार्त्तिके संयोगादिलोपग्रहणं न कर्त्तव्यमिति पक्ष आश्रीयते, तदा सदित्यादौ तदापत्तिर्बोध्या।

*संयोगे गुरु*। *क्त्वेति*। यत्तु अत्रोदयङ्करः—समप्रवृत्तया गुरुसंज्ञया लघुसंज्ञाया बाधेऽपि अन्तरङ्गायास्तस्याबाधे मानाभावः, "अपवादो यद्यन्यत्र चरितार्थः" इतिन्यायादित्याह, तच्चिन्त्यम्। परनिमित्तिकाया बहिरङ्गाया गुरुसंज्ञायाः क्वचिदप्यपवादत्वमन्तरेण चारितार्थ्याभावात्।

*भूतपूर्वलघूपधेति*। ननु भूतपूर्वो यो लघुस्तदुपधस्येति वा भूतपूर्वो यो लघूपधस्तस्येति वाऽर्थो वक्तुमशक्यः। आद्ये गुतेत्यादौ गुणापत्तेः, अन्त्ये इन्दतीत्यादौ गुणापत्तेश्च। न च प्रत्ययोपदेशकालिलघूपकलधस्य ग्रहणान्न दोष इति वाच्यम्? एवं सति तोतोर्चीत्यादौ

तिप्प्रत्ययोपदेशकाले लघूपधत्वाभावेन गुणानापत्तेः । न च "राल्लोपः" इत्यत्र विषयसप्तम्याश्रयणेन पूर्वमेव वलोपे न दोष इति वाच्यम् ? एवंसति "कुरुच्छपिबां प्रतिषेधः" इति वार्त्तिकाद् अन्तादेशतपरकरणाभ्यां गुणाभावेन तत्प्रत्याख्यानपरभाष्याच्च विरोधापत्तेः, करोतिपिबत्योः प्रत्ययोपदेशेऽलघूपधत्वाद् रियति अमुमुवदित्यत्रान्तरङ्गत्वादियङुवङोः साधनपरभाष्यविरोधाच्च, भवितेत्यादौ गुणाभावार्थं "दीधीवेवी" इति सूत्रस्थेड्ग्रहणवैयर्थ्याच्च, सीदतीत्यादौ गुणापत्तेश्च । न च सीदतीत्येतदर्थं गुणप्रयोजकप्रत्ययोपदेशकालिको लघूपधो गृह्यते इति वाच्यम् ? पटतीत्यादौ शबुपदेशकालिकलघूपधत्वाभावेन गुणानापत्तेः । एवमपि प्रागुक्तदोषकदम्बस्यानिराकरणाच्चेति चेद् ? न । प्रकृतिप्रत्ययोभयारब्धसमुदायवृत्तिसंयोगत्वप्रयुक्तगुरुसंज्ञया लघुसंज्ञाया बाधाभावकल्पनेन सर्वसामञ्जस्यात् ।

अथवा तत्सामर्थ्यात्तत्र सूत्रे लघूपधपदेन ह्रस्वोपधस्य ग्रहणबोधनान्न कोऽपि दोषः ।

अथवा भूतपूर्वो यो लघुस्तदुपधस्येत्येवार्थोऽस्तु, गुतेत्यादौ गुणस्तु न शङ्क्यः, "गाङ्कुटादिभ्य" इत्यत्र विहितपञ्चम्याश्रयणेन ङादेशस्य ङित्त्वाद्, गुणनिषेधस्य सिद्धेः । तोतोर्त्तीत्यत्रापि न क्षतिः; यङ्लुकश्छान्दसत्वेन तावतैव गुणसिद्धेः । न च तुर्वैर्वेनिपि "लोपो व्योः" इति वलोपे तोर्वैत्यत्र गुणो न स्यादिति वाच्यम् ? "लोपो व्योः" इति सूत्रे वकारप्रत्याख्यानपरभाष्यप्रामाण्येनेदृशस्यानभिधानादिति बोध्यम् ।

अथ "ह्रस्वं लघु" इति सूत्रे सत्याकडारीयत्वाद् गुरुसंज्ञया लघुसंज्ञाबाधः स्यादतो ज्ञापकमाश्रयणीयं; तदेव न । ऊकालसूत्रे ह्रस्वग्रहणमपनीय तत्स्थाने लघुग्रहणस्यैव करणेन लघुसंज्ञाया अनाकडारीयत्वेन समावेशसम्भवात् । यत्र यत्र ह्रस्वग्रहणं तत्र सर्वत्र लघुग्रहणमेवास्त्विति चेद् ? न । "संयोगे गुरु" इतिसूत्रेऽनुवृत्त्यर्थं ह्रस्वग्रहणस्यावश्यकत्वात् । न च 'संयोगे लघुगुरु' इत्येव सूत्रमस्तु इति वाच्यम् ? तथासति अत्र सूत्रे लघोरुद्देश्यत्वेन लघुगुरुसंज्ञयोः समावेशापत्तेः । न चेष्टापत्तिः; अचिक्षमदित्यत्र "दीर्घो लघोः" इति दीर्घापत्तेः । न च तत्र सूत्रे लघुग्रहणस्यैवंसति वैयर्थ्यापत्तिरिति वाच्यम् ? स्वाभाविकस्य लघोः परिग्रहार्थत्वात् । तथासति सूत्रस्य प्रवृत्तिरततक्षदित्यत्र स्यादप्रवृत्तिश्चाबीभवदित्यत्र स्यात ; अनिष्टफलस्यापि सूत्रे लघुग्रहणेन कल्पनसम्भवात । एवमततक्षदित्यादौ सन्वद्भावे "सन्यत" इतीत्वस्यापत्तिः स्यादिति भैरवमिश्राः ।

इति सञ्ज्ञेति । प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां सञ्ज्ञानां प्रकरणमिति समाप्तमित्यर्थः । तेनाम्रेडितप्रगृह्यभसञ्ज्ञालोपसञ्ज्ञाद्यनुपन्यासेऽपि न क्षतिः । "अ अ" (पा० सू० ८-४-६८) इत्याद्युपन्यासस्तु प्रासङ्गिकः ।

## इति सञ्ज्ञाप्रकरणम् ।

---

*प्रथमाध्यायस्थानामिति* । एतद्विशेषणफलमाम्रेडितेत्यादेरनुपन्यासेऽपि क्षतिविरहः । द्वितीयविशेषणस्य तु फलं प्रगृह्यसंज्ञाद्यनुपन्यासेऽपि क्षतिविरह इति भावः ।

अत्र वदन्ति-यद्यपि लोपसंज्ञा "एतत्तदोः" "रोरि" इत्यादौ सन्धिकार्योपयोगिनी । यदि च सन्धिकार्ये कार्यितया निमित्ततया वा नोपयोगिनी सा संज्ञेति ब्रूषे ; तर्हि वृद्धिसंज्ञाऽपि न तथेति न वक्तव्या । भवति च "लोऽचि लोपे चेत्" "ढ्लोपे" इत्यनयोर्लोपसंज्ञाऽपि निमित्ततयोपयोगिनी । किञ्च लघुसंज्ञा न कथञ्चिदपि सन्धिकार्योपयोगिनी । यदि च गुरुसंज्ञाया बाध्यतया तदुपन्यासः; तदा पदसंज्ञाबाधकतया भसंज्ञाऽप्युपन्यस्यताम् । किञ्च "स्वादिषु" इति पदसंज्ञाऽपि मान्धातेत्यादौ सन्धिकार्योपयोगिनीति तदनुपन्यासान् न्यूनता । एवं टिसंज्ञाया अनुपन्यासेनाऽपि न्यूनता । एवं निपातसंज्ञाऽपि न सन्धिकार्योपयोगिनीति साऽपि न वक्तव्या स्यात् । एवं सम्प्रसारणसंज्ञा "सम्प्रसारणाच्च" इति सन्धिकार्योपयोगिनीति वक्तव्या ; तथाऽपि प्रायेण सन्धिकार्योपयोगिनीनां प्रकरणं प्रायेण समाप्तमित्यर्थान्न कश्चिद्दोषः । शेखरोक्तविशेषणे तु व्यर्थ एव तद्दानेऽप्यननुगमादित्याचारिणः। *अ अ इत्यादीति* । आदिना "पूर्वत्रासिद्धम्" इत्यस्य सङ्ग्रह इति सर्वेष्टसिद्धिः ।

## इति सञ्ज्ञाप्रकरणम् ।



इको गुण (पा०सू०१-१-३) । परिभाषेयं व्याख्यानात् । गुणवृद्धिशब्दाभ्यामिति । गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादिति भावः । अनुवर्त्तमानश्च सञ्ज्ञिपरमेव स्यात्; सञ्ज्ञाकरणेनान्यत्र सञ्ज्ञिपरत्वात् । यद्वा, तदप्यनुवर्त्य गुणो वृद्धिरिति योजनयैतल्लाभः । "स्वादिषु" (पा०सू०१-४-

---

*इको गुणवृद्धी* । *व्याख्यानादिति* । अन्यासम्भवरूपाद् व्याख्यानादित्यर्थः । तथा हि-न तावत् संज्ञा; समानविभक्त्यन्तत्वाभावात्, 'वृद्धिरादैच् इकश्च' 'अदेङ् च गुण' इत्येवसिद्धे "इको गुणवृद्धी" इत्यस्यारम्भाच्च, "जाग्रोऽविचि" इत्यारम्भाच्च । नापि विधिः; "ओर्गुण" इत्यादेरारम्भात् । न च "ओर्गुण" इत्यादेरत्र गुण एवेति नियमार्थत्वमस्त्विति वाच्यम् ? एवं विधित्वकल्पने गौरवात्, बहुलक्ष्यविसंवादाच्च, पूर्वोत्तरसाहचर्येण गुणशास्त्रत्वस्य युक्तत्वाच्च । नापि नियमः; अन्यैरगतार्थत्वात्, वाक्यभेदाद्यापत्तौ गौरवाच्च । न वा अतिदेशः; समानविभक्त्यन्तत्वस्य वतेश्चानिर्देशात् । नापि अधिकारः; तथासति "इको गुणवृद्धी" "न धातु" इतियोगविभागवैयर्थ्यात् । नापि निषेधः; नञाऽघटितत्वादिति । *सामर्थ्यादितिभाव इति* । एवञ्चैतत्सूत्रघटको गुणवृद्धिशब्दो गुणवृद्धिशब्दबोध्याकारादौ लाक्षणिक इति भावः । तथा च—गुणपदावच्छिन्नविधेयताप्रयोजकं गुणपदं वृद्धिपदावच्छिन्नविधेयताप्रयोजकं वृद्धिपदं वा यत्रास्ति तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इति फलितोऽर्थः । विधेयतयोर्गुणवृद्धिपदावच्छिन्नत्वविशेषणाद् गुणवृद्धिसंज्ञासूत्रयोर्नास्याः प्रवृत्तिः । विधेयत्वविशेषणाद् "अतो गुण" "वृद्धिर्यस्य" इत्यादावनुवादे नास्याः प्रवृत्तिः । गुणवृद्धिपदनिवेशात् "त्यदादीनामः" "पथिमथि" इत्यादौ नास्याः प्रवृत्तिः।

ननु पूर्वसूत्रयोर्गुणवृद्धिपदयोः संज्ञापरत्वादनुवृत्तावपि संज्ञिबोधनार्थमुपक्षीणयोरिहत्यगुणवृद्धिपदयोः सामर्थ्याभावात्कथं लक्षणेत्यत आह—*अनुवर्त्तमानं चेति* । *संज्ञिपरमेवेति* । शब्दाधिकारादिति भावः । ननु अनुवृत्तमपि पदपदं "स्वादिषु" इति सूत्रे संज्ञापरमेवात आह—*यद्वेति* । *तदप्यनुवर्त्त्येति* । गुणवृद्धिग्रहणमप्यनुवर्त्त्येत्यर्थः । अनुवर्त्तमानञ्च शब्दस्वरूपपरमर्थाधिकारानुरोधादिति भावः । *योजनयेति* । इतेः प्रत्येकमन्वयः । उच्चार्येति शेषः । तस्य च विधानेऽन्वयः । अतो न द्वन्द्वासाधुत्वम् । गुणो गुणो वृद्धिर्वृद्धिरिति योजने तु तत्वं

१७) इति सूत्रेऽनुवृत्तपदपदस्य सञ्ज्ञापरताया एव दृष्टत्वात्। "ष्णा- न्ताः" (पा० सू० १-१-२४) इति सूत्रे संख्यापदस्य तदन्तत्वा- सम्भवादर्थपरतेति बोद्धव्यम्। लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः। तत्र 'प्रतिपदोक्तस्य' इत्यस्य साक्षादुच्चारितस्येति सा-

स्यात्। *दृष्टत्वादिति*। संज्ञाकरणेनान्यत्र संज्ञिपरत्वमिति नियमस्तु संज्ञाशास्त्राद्यत्र संज्ञापदमनुवर्त्तते तद्भिन्नस्थल एवेति भावः। ननु संज्ञासूत्रादनुवर्त्तमानसंज्ञापदस्यार्थाधिकारानुरोधाच्छब्दस्वरूपपरत्वा- ङ्गीकारे "ष्णान्ता" इतिसूत्रेऽनुवर्त्तमानसंख्यापदस्यापि तथात्वापत्ति- रित्याशङ्क्याह—*ष्णान्तेति*। *तदन्तत्वेति*। षान्तत्वनान्तत्वेत्यर्थः।

परे तु—संज्ञापरे गुणवृद्धिपदे अनुवर्त्य योजनाया नोपयोगः। पूर्व- सूत्राभ्यामदेङ्पदमादैच्पदञ्चानुवर्त्य यत्रेमे विधीयन्ते, तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इत्येतावतैव सिद्धे गुणवृद्धिग्रहणसामर्थ्यादु- क्तार्थलाभसम्भवात्। यद्वा, संज्ञाविधायकशास्त्रीयविधेयतावच्छेद- कधर्मेतरधर्मावच्छिन्नविधेयताप्रयोजकशास्त्रे संज्ञाशास्त्रादनुवर्तमान- स्यापि संज्ञिपरत्वमेवेति नियमेन "स्वादिषु" इतिसूत्रे संज्ञापरत्वेऽपि "ष्णान्ता" इत्यत्र संज्ञिपरत्वस्य सिद्धिवदिहाप्यनुवर्त्तमानगुणवृद्धिप- दयोः संज्ञिपरत्वेन सिद्धेः गुणवृद्धिग्रहणसामर्थ्येनोक्तार्थलाभसम्भ- वादित्याहुः।

*साक्षादुच्चरितस्येति*। उच्चरितस्येत्यस्योच्चारणप्रयोज्यबो- धीयविषयताश्रयस्येत्यर्थः। विषयता च विधेयताख्या। साक्षादित्य- नेन च विधेयतायामुच्चार्यमाणवृत्तिधर्मेण साक्षादवच्छिन्नत्वं विवक्षि- तम्। तथा चोच्चार्यमाणवृत्तिधर्मेण साक्षादवच्छिन्नविधेयताश्रयत्वं तत्त्वमिति भावः। *साक्षात्तच्छब्दानुवादेनेति*। यत्किञ्चिच्छास्त्री- योद्देश्यतावच्छेदकज्ञानसम्पादकत्वेनोपयुज्यमाना याऽऽनुपूर्वी तदव- च्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्वं तत्त्वमिति भावः। तथा चैवमुक्तं भवति प्रतिपदोक्तत्वम्—यत्र शास्त्रे लक्षणप्रतिपदोक्तपरिभाषासञ्चा- रणीया तच्छास्त्रजन्यबोधोपयोगिनी या आनुपूर्वी तद्विशिष्टत्वम्। वैशिष्ट्यञ्च—स्वेन साक्षादवच्छिन्नविधेयताश्रयत्व स्वप्रकारकज्ञान- प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन। आद्यस- म्बन्धदानाद् "घुमास्था" इत्यत्र पापदेन पापान इत्यस्यैव ग्रहणं न तु 'पै' इतिकृतात्वस्य। तथा हि—"घुमास्था" इतिशास्त्रजन्यबोधोपयो-

क्षात्तत्तच्छब्दानुवादेन विहितस्येति वाऽर्थात् । ध्वनितञ्चेदमत्रैव भाष्ये । अस्याश्च विधेयसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्गं, तदाह—

गिनी या पात्वरूपानुपूर्वी तया साक्षादवच्छिन्ना या पापान इत्येतच्छास्त्रीया विधेयता तदाश्रयः पानार्थकः पा एव न त्वात्वनिष्पन्नः पाः । तस्य पैत्वावच्छिन्नाया आदन्तत्वावच्छिन्नाया वा विधेयताया आश्रयत्वेऽपि तदभावात् । द्वितीयसम्बन्धदानाद् "विभाषा दिक्समासे" इत्यत्र "दिङ्नामान्यन्तराले" विहित समासस्यैव ग्रहणं न तु अन्यस्य । तथा हि—"विभाषा दिक्" इतिशास्त्रजन्यबोधोपयोगिदिक्त्वरूपानुपूर्वीप्रकारकज्ञानप्रयोज्या या उद्देश्यता सा दिग्वाचकशब्दत्वावच्छिन्ना; तन्निरूपितविधेयताश्रयः स एवेति तस्यैव ग्रहणम् । एवमेव "तृतीयासमासे" इत्यत्र तृतीयासमासपदेन "पूर्वसदृश" इति विहितः समास एव गृह्यते न तु तदन्यः । तथा हि—"तृतीयासमासे" इत्यत्र "सर्वादीनि" इत्यस्यानुवृत्तेस्तदुपयोगिन्यानुपूर्वी पूर्वत्वं तज्ज्ञानप्रयोज्योद्देश्यता 'पूर्वसदृश' इतिशास्त्रीयैव, न तु "तृतीयातत्कृतार्थ" इत्यादिशास्त्रीयेति न दोषः । प्रकृते तु "इको गुण" इति शास्त्रजन्यबोधोपयोगिगुणत्ववृद्धित्वरूपानुपूर्व्या साक्षादवच्छिन्नविधेयताश्रयत्वस्य तदानुपूर्वीप्रकारकज्ञानप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वस्य वा क्वचिदप्यदेङादावभावाल्लक्षणप्रतिपदोक्तयोरुभयोः सम्भव एव तत्प्रवृत्तेरत्राप्रवृत्तिरिति भावः । *इति वार्थादिति* । इति चार्थादिति युक्तः पाठः, समुच्चयस्येष्टत्वात् । स्यादेतत्, एवं प्रतिपदोक्तत्वस्वीकारे गणयतीत्यत्र दीर्घे न स्थानिवदिति निषेधापत्तिः, वृद्धेरपि दीर्घत्वादिति चेद् ? न । 'अनुस्वारदीर्घजश्'इत्यत्र पूर्वोत्तरसाहचर्येण तच्छब्दविहितस्यैव तस्य ग्रहणात् । "यलोपौ"इतिवार्त्तिकेऽपीयङादिसाहचर्यादन्यतरोपादान उभयत्र न स्यादित्युभयोपादानमिति बोध्यम् । *ध्वनितमिति* । लक्षणप्रतिपदोक्तपरिभाषया विवक्षितार्थकथनाभावेन ध्वनितमित्यर्थः । अत एव "क्तोऽधिकरणे च" इत्यादिविहिते क्ते निष्ठाप्रयुक्तकार्यं, "लटःशतृ"इतिविहितशतरि सत्कार्यम्, शालादौ वृद्धकार्यं, पचन्तीत्यादौ गुणकार्यं; दीर्घपदाविहितेऽपि शालादीनामाकारदीर्घे चेति गुरुत्वम्, ह्रस्वपदाविहितेऽपि देवदत्तादिघटकह्रस्वे "संयोगे गुरु"इतिगुरुत्वञ्च सिध्यति । परिभाषाणां लिङ्गवत्त्वानियमादाह—*अस्याश्चेति* । *विधेयसमर्पकेति* । गुणवृद्धिपदावच्छिन्नविधेयताप्रयोजकेत्यर्थः । तेन गुणवृद्धिसञ्ज्ञाविधौ नोपस्थि-

विधीयेते इति । अत एव "अतो गुणे" (पा०सू०६-१-९७) "वृद्धिर्यस्य" (पा०सू०१-१-७३) इत्यादौ न दोषः । एतेन "शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठते इत्यर्थेन "त्यदादीनामः" (पा०सू०७-२-१०२) इत्यादिष्वावृत्तौ सिद्धायामिह गुणवृद्धी इति व्यर्थम्" इत्यपास्तम् । एतन्मूलक एव "विधौ परिभाषोपतिष्ठते, नानुवादे" इत्युद्घोषः । एवञ्च पदोप-

तिरित्यवोचाम । ननु "अचोऽञ्णिति" इत्यत्र स्थानिनिर्देशाद्विधेयसमर्पकेऽपि निर्दिष्टस्थानिकेऽनुपस्थितिकल्पने "पुगन्त" इत्यत्रापि पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधेति समासपक्षे निर्दिष्टस्थानिकत्वात्कथमेतदुपस्थितिरिति चेद् ? न । "अचोऽञ्णिति" इत्यत्राज्ग्रहणेन यत्राच्त्वव्याप्यधर्मपुरस्कारेण वर्णरूपस्थानिनिर्देशस्तत्रैव तदनुपस्थितिकल्पनात् ।अथवा परिभाषाया अनियमे नियमकारकत्वेन "अचोऽञ्णिति" इत्यादावनियमाभावादप्रवृत्तिः । "पुगन्त" इत्यत्र पुगन्तांशेऽनियमात्तदुपस्थितिः, लघूपधांश उपधात्वस्य वर्णमात्रविश्रान्तेरनियमाप्रसक्तेस्तदनुपस्थितावपि न दोषः, अकारस्य गुणेऽपि फलेऽविशेषात् । *विधीयेते इतीति* । गुणवृद्धी भवत इत्यर्थके गुणवृद्धिपदे यत्र श्रूयन्ते इत्यर्थः । एवम् अचश्च इत्यत्राज्भवतीत्यर्थकानि ह्रस्वदीर्घप्लुतपदानि यत्र श्रूयन्त इत्यर्थो बोध्यः । एतेन गुणादीनां लक्ष्ये विधानेन तत्रैकारादोपस्थितिः स्यादित्यपास्तम । *अत एवेति* । तथा च भवन्ति शालीय इत्यादौ न दोषः । अन्यथा एधे औपगवीय इत्यादावेव तौ स्यातामिति भावः । *अपास्तमिति* । एतेन विधीयेते इतिपदाध्याहारे इदमेव लिङ्गमिति बोध्यम् । ननु "विधौ परिभाषोपतिष्ठते" इतिपरिभाषयैवेष्टसिद्धौ विधीयेते इत्यध्याहारो विफल इत्यत आह— *एतन्मूलक इति* । *उद्घोष इति* । एतेन तस्या "उदीचामात" इतिसूत्रस्थस्थानग्रहणज्ञापितत्वं नेति सूचितम् । अथ "विधौ परिभाषा" इति परिभाषायाः कोऽर्थः ? यदि विधेयताप्रयोजके पदे एव परिभाषोपस्थितिरित्यर्थस्तदा "स्थानेऽन्तरतम" इत्यादिकतिपयपरिभाषाऽतिरिक्तपरिभाषाणां निर्विषयत्वापत्तिरिति चेद् ? न । परिभाषाणां यावत्या परम्परया विधेयोपकारकत्वं नाप्रासं तदधिकपरम्परया विधेयोपकारकत्वं न भवतीत्यर्थात् । तथा च "षष्ठी स्थाने" इत्यस्याविधेये साक्षाद्विशेषणं यद् "इको यणचि" इत्यादाविगादि तत्रैव प्रवृत्तिः, न तु "उदीचाम्" इत्य-

स्थापकपरिभाषाविषये 'विधीयते' इत्यस्यैवाध्याहारो बोध्यः । एवञ्च "तस्मिन्निति निर्दिष्टे" (पा०सू०१-१-६६) "षष्ठीस्थाने" (पा०सू०१-१-४९) इत्यादेरनुवादेऽपि प्रवृत्तिः । तेन "प्रत्ययस्थात्कात्पूर्वस्य" (पा०सू०७-३-४४) "उदात्तस्वरितयोर्यणः" (पा०सू०८-२-४) इत्यादौ न दोषः । "उदीचामातः स्थाने" (पा०सू०७-३-४६) इति स्थानेग्रहणन्तु स्पष्टार्थमेव । तत्र विधिवा-

---

क्येति स्थानेग्रहणं चरितार्थम् । ननु "विधौ"इतिपरिभाषाऽभावे "अचश्च"इत्यस्या अनुवादेऽपि प्रवृत्तिः स्यादत उपसंहरति-*एवञ्चेति* । *इत्यादेरिति* । आदिना "तस्मात्"इतीत्यादेः सङ्ग्रहः । *अनुवादेऽपीति* । अनूद्यमानविशेषणविशेषणेऽपीत्यर्थः । *प्रत्ययस्थेति* । अत्रापीत्यत्र "तस्मिन्"इत्यस्याः 'असुप'इत्यत्र "तस्मात्"इत्यस्याश्चोपस्थितिरिति भावः । *उदात्तस्वरितयोरिति* । अत्र "षष्ठी स्थान"इत्यस्याः प्रवृत्तिः । *इत्यादौ न दोष इति* । आदिना "अल्लोपोऽन"इत्यत्र । तत्र हि 'अनन्त्यविकार'न्यायखण्डनपक्षे अनस्तक्षणेत्यत्राद्याकारलोपाभावायासर्वनामस्थान इत्यस्यान्विशेषणत्वं भाष्ये सिद्धान्तितम् । *स्पष्टार्थमेवेति* । परिभाषामङ्गीकुर्वतस्तव मते विधीयेते इत्यध्याहारे तात्पर्यग्राहकं प्रकृतसूत्रे गुणवृद्धिग्रहणमिवेत्यर्थः । न च मम "विधौ" इतिपरिभाषाऽनित्यत्वज्ञापनार्थं तत्, तेन "उदात्तस्वरितयोः"इत्यादौ न दोष इति वाच्यम् । एवंसति तामनङ्गीकृत्यैव स्थानग्रहणेन परिभाषासामान्यस्यैवानित्यत्वज्ञापनेन स्वाभीष्टस्य साधयितुमुचितत्वादिति भट्टाः ।

यत्तु-"विधौ परिभाषा"इतिपरिभाषाया "अचः परस्मिन्"इत्यत्र पूर्वत्वस्य नित्यसाकाङ्क्षत्वेनाकाङ्क्षाशमकोपस्थितत्वात्पदे "तस्माद्"इतिपरिभाषाया अनुपस्थितेर्व्यवहिताव्यवहितसाधारणपूर्वत्वग्रहणं फलमुक्तं पाठकेन ; तच्चिन्त्यम् । "अचः परस्मिन्"इत्यस्य गुणत्वात्तत्र पञ्चम्या अश्रुतत्वाच्चोत्तरांशानुपस्थितौ सन्नियोगशिष्टन्यायविरोधाच्च स्वरे निषेधाच्च गणयतीत्यत्र स्थानिवत्त्वेन वृद्धिवारणपरभाष्यप्रामाण्याच्चाव्यवहितत्वांशानुपस्थितेस्तत्र सिद्धत्वात् । नन्वेवं पदोपस्थापकत्वेऽपि "मिदेर्गुण"इत्यादौ दोष एव । स्थानषष्ठीनिर्णयस्येव गुणवृद्धिपदे विधेयसमर्पकत्वनिर्णयस्यापि वाक्यार्थबोधोत्तरभावित्वेनालोन्त्यपरिभाषाऽपेक्षयाऽस्याप्यन्तरङ्गत्वाभावात् । किञ्च वाक्या-

न्वये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वानिर्णयः। अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता। तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः। इयञ्च 'एधिता' इत्यादौ व्यञ्जनानां गुणव्यावृत्त्यर्थं, 'भिन्नम्' इत्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पत्त्यर्थञ्चेति दिक्।

प्लुतशब्दैरिति। "ऊकाल" (पा०सू०१-२-२७) इति सूत्राद् ह्रस्वदीर्घप्लुत इति, अजिति चानुवर्त्तते; ह्रस्वेत्यादिपदञ्च तृतीयया विपरिणतमिति भावः। तेन "दिव उत्" (पा०सू०६-१-१३१) "अष्टन आ विभक्तौ" (पा०सू०७-२-८४) इत्यादावेतदनुपस्थितिः। शेषं प्राग्वत्।

---

र्थबोधे विधेयसमर्पकत्वानिर्णये:, तन्निर्णय परिभाषोपस्थितिस्तदुपस्थितौ च, अप्रामाण्यज्ञानानास्कन्दितवाक्यार्थबोध, इति चक्रकापत्तिश्चेत्यत आह— *तत्रेति*। पूर्वं वाक्यार्थबोधाभावेऽपि विधेयताप्रयोजकत्वग्रहे प्रतिबन्धकाभावविशिष्टप्रथमान्तपदमात्रदर्शनस्य हेतुत्वेन तत्त्वज्ञानं सुलभमिति भावः। "वृद्धिर्यस्य" इत्यादौ तु यच्छब्दयोगस्य प्राथम्यस्य च प्रतिबन्धकत्वं बोध्यम्। प्राथम्यञ्च—प्रथमान्तपदान्तरापेक्षयैव विवक्षितम, तेन "गुणो यङ्लुकोः" इत्यादौ गुणपदे प्राथम्येऽपि परिभाषोपस्थित्या 'चेच्छिद्यत' इत्यादावनन्त्यस्येको गुणसिद्धः। ननु कौस्तुभोक्तरीत्या डउप्रत्यये ङित्वसामर्थ्याद् व्यञ्जनस्य गुणाभाव इति कल्पनेन एधितेत्याद्यर्थत्वमस्या अयुक्तमत आह-*भिन्न इत्यादाविति*। *इग्लक्षणत्वसम्पत्त्यर्थञ्चेति*। सामान्यतो निषेधस्वीकारे तु 'लैगवायन' इत्यादौ "तद्धितेष्वचाम्" इति प्राप्ताया अपि वृद्धेर्निषेधापत्तिरिति भावः। ननु तत्र गित्साहचर्यात् क्ङितोरपि धात्वाधिकारीययोरेव ग्रहणान्न 'लैगवायन' इत्यत्र निषेधसम्भवति इति चेद्? न। एवमपि कमेर्णिङि कामयत इत्यत्र "अत उपधायाः" इति प्राप्तवृद्धिनिषेधाभावाय तदावश्यकत्वात्। एतन्मते तत्र गकारप्रश्लेषस्य फलाभावेन साहचर्यस्यासम्भवाच्चेति बोध्यम्। वस्तुतस्तु व्यञ्जननिवृत्त्यर्थमपीदमावश्यकं, कौस्तुभोक्तं तु न युक्तम्। उणादीनामव्युत्पन्नत्वेन डऔङित्वस्य ज्ञापकत्वासम्भवादिति चिदस्थिमालाकृतः।

अचश्च। *शेषं प्राग्वदिति*। पदोपस्थापकत्वं शब्दव्या-

आद्यन्तौ (पा०सू०१-१-४६) । यद्यप्यत्र मिलितस्य नैकत्रान्वय इति द्वन्द्वो न प्राप्नोति, तथाऽपि समूहयोरन्वयबोधोत्तरं "यथासंख्यम्" (पा०सू०१-३-१०) इतिसूत्रारम्भसामर्थ्यात्पुनः प्रत्येकान्वयः । लोके त्वेवंरीत्या प्रयोगोऽसाधुरेवेति भाष्ये स्पष्टम् । अत्रैव "यथासंख्य" (पा०सू०१-३-१०) सूत्रोपन्यासो

---

पाराश्रयणम्, विधीयत इति पदाध्याहारश्चेति भावः । तथा च–ह्रस्वादिपदावच्छिन्नविधेयताप्रयोजकह्रस्वदीर्घप्लुतान्यतमपदघटिते शास्त्रेऽच इति षष्ठ्यन्तं पदमुपतिष्ठत इति फलितोऽर्थः । तेन "ऊकाल" इत्यत्र "त्यदादीनाम" इत्यादौ "छे च" इत्यादौ च न दोषः । अन्यथा ह्रस्वादिसंज्ञाऽचः स्थाने जातानामेव स्यात्, "त्यदादीनाम" इत्यत्वमन्त्यस्य हलो न स्यात्, "छे च" इति तुक् अपिच्छत्रमित्यत्रैव स्यात्, न देवच्छत्रमित्यत्रेति बोध्यम् ।

*आद्यन्तौ* । *एकत्रेति* । एकधर्मावच्छिन्न इत्यर्थः । तेन धवखदिरौ छिन्धीत्यादौ धवखदिरयोर्भिन्नच्छिदयोरन्वयेऽपि नानुपपत्तिः । *द्वन्द्व इति* । इच्छन्द एकशेषस्याप्युपलक्षणमिदम् । *सूत्रारम्भसामर्थ्यादिति* । "हलो यमाम्" इत्यादौ स्थानाख्यलौकिकप्रमाणेनैव सिद्धेरिति भावः । *एवं रीत्येति* । समूहयोरन्वयबोधोत्तरं प्रत्येकमन्वय इति रीत्येत्यर्थः । *पुनः प्रत्येकमन्वय इति* । अन्यथा "गापोष्टक्" इति टक्पर्यायेणादावन्ते च स्यात्, नान्ये टितः कितो वेति भावः । *भाष्ये इति* । तत्र हि—"अजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ज्ञायते कस्याजाधनं कस्याव्य इति" इत्युक्तम् । तत्र गमकाभावेन प्रत्येकमन्वयः । इह तु "यथासंख्यम्" इतिसूत्रमेव गमकमिति तत्त्वम् ।

परे तु—साहित्यरूपैकधर्मावच्छिन्नेऽनेकस्यान्वयित्वमात्रेण साहित्यसत्त्वेन द्वन्द्वस्य साहित्यावच्छिन्ने क्रमेणान्वयेन यथासंख्यान्वयस्य चोपपत्तौ द्विधाबोधाश्रयणं विफलमेव । न चैवमजाविधनावित्यत्रापि क्रमेण साहित्यावच्छिन्नयोरन्वयसम्भवादुक्तभाष्यविरोध इति वाच्यम्? शास्त्रे यथासंख्यसूत्रस्य क्रमिकान्वयनियामकत्वेऽपि लोके तथानियामकाभावेन भाष्यतोऽविरोधात् । न च लोके स्थानाख्यप्रमाणेन तदापत्तिर्वाच्या; तस्यात्र विषयाभावादिति विस्तरेण "यथासंख्य"सूत्रे निरूपयिष्याम इत्याहुः ।

युक्तः। द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येकं सम्बन्धः। पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः। प्रत्ययपरत्वन्तु परत्वादमुं बाधते; तेन चरेष्टादयः परा एव भवन्ति। अत एव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते; तदाह—यस्योक्ताविति। आद्यन्ताक्षिप्तोऽवयवी यच्छब्दार्थः। यथासंख्यसिद्धमर्थमाह—क्रमादिति। इताविति किम्? टुक् पर्यायेणाद्यन्तयोर्माभूत्।

मिदचो (पा०सू०१-१-४७)। अयं बाध्यसामान्यचिन्तया स्थानेयोगत्वप्रत्ययपरत्वयोरपवादः, "तृणहः" (पा०सू०७-३-

---

*परत्वादमुं बाधत इति*। न च "गापोष्टक्" इत्यादिकित्प्रत्यये उभयोरपि समावेशसम्भवाद्विरोधाभावेन विप्रतिषेधसूत्राप्रवृत्तावन्त्यत्वेन धातुत्वे आधि प्रधिमित्यादौ "एरनेकाच" इति यण्प्रसङ्ग इति वाच्यम्? तेन तस्यैवावश्यवधिमद्भावस्यावयवावयविभावस्य च लोकतन्त्रविरुद्धत्वादिति भट्टाः।

आचार्यास्तु—"प्रत्ययः" "परश्च" इत्यनयोः पदैकवाक्यतयाऽन्वयस्य वक्ष्यमाणत्वेन वाक्यार्थबोधात्पूर्वमेव प्रवृत्तेः। अस्य च टकितौ यमुद्दिश्य विहितौ तदाद्यन्तौ भवत इत्यर्थेन वाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोर्यौगपद्याभावादिदमुक्तमित्याहुः।

*तत्रैवेदमिति*। उत्सर्गसमानदेशत्वादपवादस्येति भावः। *यथासंख्यसिद्धमिति*। "गुणानां च परार्थत्वात्" इति न्यायस्तु नात्र शास्त्र आश्रीयते; एतत्सूत्रस्थभाष्यप्रामाण्यात्। *इताविति किमिति*। टकावित्येवास्तु आद्यजन्तमस्त्वित्यभिप्रायेण प्रश्नः। न चैकेनैव ककारेण कुकोऽन्त्यावयवत्वे सिद्धे ककारद्वयोच्चारणमेवेत्संज्ञकेनैव पूर्वपरावयवत्वबोधनं नान्येनेति ज्ञापकं भविष्यतीति प्रकृत इद्ग्रहणं व्यर्थमिति वाच्यम्? ककारांश एव विशेषापेक्षज्ञापकत्वसम्भवात्, कुकः ककारस्याकरणेन लाघवमित्येतत्पर्यन्तं प्रष्टुराशयकल्पनाच्चेति दिक्।

*मिदचोऽन्त्यात्*। ननु पूर्ववद्विशेषचिन्तैवात्राप्यस्तु; सामान्यचिन्ताङ्गीकारे किं मानम्? न च श्नमो मित्त्वं तत्र मानं, तस्य श्रवणार्थत्वस्यापि सम्भवात्। न च "श्नान्नलोप" इति सूत्रं तथेति वाच्यम्? सामर्थ्यात्तस्य व्यवहितेऽपि प्रवृत्तिकल्पनादत आह—*तृण-

९२) इति निर्देशात् । निर्धारणे इति । यस्य समुदायस्य मिद्विहितस्तस्याचां मध्ये इत्यर्थः, सौत्रमेकवचनमिति भावः । तस्यैवेति । यस्य विहितस्तस्यैवेत्यर्थः । अत एव "समुदायभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुम्" इति भाष्यं सङ्गच्छते । अन्तावयव इति । पूर्वसूत्रात्सप्तम्यन्तपदमेकदेशे स्वरितत्वप्रतिज्ञाबलादनुवर्तते इति भावः । 'मुञ्चति' इत्यादिविषये तु फ-

---

हेति* । *सौत्रमिति* । निर्द्धारणविभक्तेः समूहवाचकादुत्पत्तेर्वक्ष्यमाणतयाऽचपद एकशेषावश्यकत्वेन तस्य च समाहारद्वन्द्वविषयेऽप्रवृत्त्या द्विवचनं बहुवचनं च तत्र न्याय्यं ; कारक इत्यत्र निर्धारणसप्तम्यन्तत्वे 'कारकेषु' इतिवदेदिति भाष्येण निर्धारणविभक्तेर्बहुवचनरूपाया एव साधुत्वमित्यपूर्वार्थकल्पनं तु वृथेति भट्टाः ।

परे तु—अन्त्यादित्येतत्समानाधिकरणमच इति पञ्चम्यन्तमेव । तत्रान्त्याच्त्वस्य नित्यसाकाङ्क्षत्वेन स्वान्तसमुदायस्याक्षेपादजन्तसमुदायान्त्यादचः परः प्रत्यासत्त्या तादृशसमुदायावयवो मित्कार्यं भवतीत्यर्थलाभसम्भवात्सौत्रत्वकल्पनं विफलमेव । अत एव भाष्ये अत्र निर्धारणषष्ठीचर्चा एकवचनस्य युक्तत्वायुक्तत्वविचारचर्चा च न दृश्यत इत्याहुः । यस्य विहितस्तस्यैवेति अन्त्याचस्तु न परामर्शः; ततः परत्वस्य तदवयवत्वस्य चैकत्र विरुद्धत्वात् । न्याय्येऽर्थे लिङ्गमप्याह—*अत एवेति* । *इति भाष्यमिति* । पञ्चारत्नीनित्यादौ नुमि कृते "इगन्तकाल" इति सूत्रसिद्धपूर्वपदप्रकृतिस्वराभावमाशङ्क्येदमुक्तम् । परग्रहणं कुर्वतः सूत्रकृतोऽपि समुदायभक्तत्वमेव सम्मतम् । अन्यथा 'मिदचोऽन्त्यस्य'इत्येव वदेदिति बोध्यम् । *इति भाव इति* । मूलकृत इति भावः । वस्तुतस्तु "उरण्रपर" इति सूत्रे स्ववक्ष्यमाणरीत्या परशब्दस्यैवावयववाचकत्वेन 'पूर्वं नाभेः कायस्य' इत्यत्रेनान्त्याजवधिकपरत्ववान् समुदायावयवो मिद्भवतीति सूत्रार्थः । अन्त्यपदानुवृत्तिपरसूत्रद्वयभाष्यं त्वेकदेशिन इति बोध्यम् । ननु मुञ्चतीत्यादौ मुच्धातोरुकारात्परत्वं तद्धात्वन्त्यावयवत्वं च नुमि बाधितमत आह—*मुञ्चतीत्यादिविषये त्विति* । ननु समुदायानिरूपितत्वचरमत्वोभयविशिष्टावयवत्वस्यान्तपदार्थतावच्छेदकत्वेन विशिष्टस्यायोग्यत्वेऽपि अवयवत्वमात्रबोधस्तु योग्यत्वात्स्यात्तत्राह—*फलाभावादिति* । तन्मध्यपतितन्यायेनैव तत्त्वसिद्धेरिति भावः । विशिष्टाभि-

लाभावादयोग्यत्वाच्चान्तावयव इत्यंशाप्रवृत्तिः ।

परिभाषाणामनियमे नियमकारिणीत्वादाह—अनिर्धारितेति । तेन "ऊदुपधाया गोहः" (पा०सू०६-४-८९) इत्यत्र स्थानेयोगत्वं न । उपधापदसन्निधानेनावयवषष्ठीत्वानिर्णयात् ।

---

प्रायेणाह—*अयोग्यत्वादिति* । *इत्यंशाप्रवृत्तेरिति* । न च विनिगमकाभावादन्त्यादचः परत्वांशस्यैवाप्रवृत्तिरस्त्विति वाच्यम् ? तद्बोधनवैयर्थ्यस्यैव गमकत्वात् । न च हलन्तेऽप्रवृत्तिरेव तद्बोधनफलम् । तावन्मात्रफलकत्वे मिदजन्त्यस्येत्येव वाच्येऽधिकस्य वैयर्थ्यादिति भावः । अवयववाचिपरशब्दाश्रयणे तु नायोग्यत्वमिति बोध्यम् ।

षष्ठी स्थानेयोगा । अनुवृत्त्याद्यभावादनिर्धारितेत्येतल्लाभोपायमाह—*परिभाषाणामिति* । *अनियम इति* । सन्देहे सति निश्चयप्रयोजकत्वादित्यर्थः । यथा अस्थानपदार्थनिरूपितः सम्बन्ध एतत्षष्ठीप्रयोज्यबोधविषयो न वेति सन्देहे सति तया निश्चीयते ।*परिभाषाणामिति* प्रतीकमुपादाय आचारिणस्तु—इदमयुक्तम् , "अलोऽन्त्यस्य" "आदेःपरस्य"इत्येतयोरन्त्यस्यानन्त्यस्यादेरनादेश्चाप्राप्तेः सन्देहनियामकत्वाभावात् । न चावयवषष्ठ्यादिषु सन्देह इति प्रकृतसूत्रस्थभाष्यन्तु सामान्येनार्थोपदेशस्य संशयस्थल एव प्रवृत्तिरित्यभिप्रायकम् । 'लौकिकोऽयं दृष्टान्तः । तद्यथा-लोके कश्चित् कञ्चित्पृच्छति, ग्रामान्तरं गमिष्यामि, पन्थानं मे भवानुपदिशत्विति स तस्मा आचष्टे अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः, अमुष्मिन्नवकाशे हस्तवाम इति यस्तत्र तिर्यक्पथो भवति, न तत्र सन्देह इति नासावुपातिष्ठते; एवमिहापि सन्देहनियम"इतिभाष्येण तथैव लाभात् । यद्वा,पाक्षिकप्राप्तिकबाधेनोपपत्तौ नियतप्राप्तिकबाधो न न्याय्य इत्यभिप्रायकं भाष्यमित्याहुः । *अनिर्धारितेति* । सम्बन्धविशेषविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वप्रकारकसन्देहविशेष्या षष्ठी स्थानपदार्थनिरूपितसम्बन्धार्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वप्रकारकनिश्चयविशेष्या भवतीत्यर्थः । *अवयवषष्ठीत्वेति*। अवयवत्वनिरूपितनिरूपितत्वार्थकषष्ठीत्वेत्यर्थः । *निर्णयादिति* । स्वघटकत्व स्वघटकान्त्यालवधिकपूर्वत्वोभयसम्बन्धेन समुदायविशिष्टवर्णत्वस्योपधापदार्थत्वेनोपधात्वस्य स्वघटितसमुदायरूपनिरूपकांशे नित्यसाकाङ्क्ष-

'स्थानेयोगा' इत्यस्य स्थानपदार्थनिरूपितसम्बन्धार्थिकेत्यर्थः । स्थानेन योगो यस्या इति विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात् । 'अस्तेरनन्तरे' इत्यादेरपि अनन्तरादिनिरूपितसम्बन्धे इत्येवार्थः । षष्ठीमात्रोच्चारणे स्थानपदाद्यध्याहार इत्यन्यत्र विस्तरः । प्रसङ्ग इति । "दर्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यादौ तथादर्शनात् । भावे ल्युट् स्थानशब्दे । प्रसङ्गश्च सति सम्भ-

त्वेन निरूपकांशे नित्यसाकाङ्क्षपदार्थे निरूपकस्य येन सम्बन्धेनान्वयेनाकाङ्क्षाशान्तिस्तदितरसम्बन्धाबोधकत्वस्य तत्समभिव्याहृतषष्ठ्यां नियमेनात्र षष्ठ्या निरूपितत्वेतरसम्बन्धाबोधकत्वेन सन्देहाभावादित्यर्थः । *निपातनात्साधुत्वस्येति* । एतव्यधिकरणबहुव्रीहेरित्यादिः । स्थानत्वस्यैव सम्बन्धत्वे तु स्थानं योगोऽस्या इत्येव वदेदिति भावः । ननु "अस्तेर्भूः" इतिसूत्रघटकषष्ठ्यंशेऽस्तेरनन्तरे समीपे वेत्यादिभाष्ये अनन्तरादिपदोपादानेन तेषां षष्ठ्यर्थत्वं कल्प्यते । तथा च स्थानात्मक एव सम्बन्धः षष्ठ्यर्थो भविष्यतीत्यत आह—*अस्तेरनन्तर इति* । ननु प्रसङ्गार्थकः स्थानशब्दोऽन्यत्र न दृष्टोऽत आह—*दर्भाणामिति* । अभिचारात्मक इष्टिविशेष इदम् । *शराः*—स्थूलतृणविशेषाः । *प्रस्तरः*—मुष्टिविशेषः । *भावे ल्युडिति* । तथा च वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता स्थानपदार्थः । वृत्तित्वं द्वितीयावच्छेदकतायां विशेषणम्, वृत्तित्वान्वयिनिरूपितत्वं षष्ठ्यर्थः । स्थानपदार्थस्य चाश्रयत्वसम्बन्धेन विधेयेऽन्वयः । यथा दर्भाणामित्यत्र दर्भनिरूपितवृत्तितावती या विशेष्यतावच्छेदकतावच्छेदकता, सा दर्भकरणकं प्रस्तरणमिष्टसाधनत्वप्रकारकभ्रमविषयतावत्, इत्याकारकज्ञानीयप्रस्तरणनिष्ठविशेष्यतानिरूपितकरणत्वनिष्ठावच्छेदकतानिरूपिता तादृशावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकनिरुक्तज्ञानीयविशेष्यतावच्छेदकप्रस्तरणत्वावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकं यज्ज्ञानं तच्छरकरणकं प्रस्तरणमिष्टसाधनत्वप्रकारकप्रमाविषयत्ववत्; इत्याकारकं तदीयविशेष्यतावच्छेदकतावच्छेदकताश्रयाः शरा इति समन्वयः। एवम् "इको यण्" इत्यादावपि अजव्यवहितपूर्वत्वविशिष्टकर्मकमुच्चारणमिष्टसाधनत्वप्र-

कारकभ्रमविषयतावदिति यणकर्मकोच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयत्ववदिति च ज्ञानद्वयमादाय समन्वयः स्थानपदार्थः। अत्र ज्ञानमुच्चारणादिक्रियाकर्तृसमवेतं ग्राह्यम्। तेन यत्र कश्चिद् अनेन मूर्खेण यणः स्थान इगुच्चार्यत इतिप्रयुङ्क्ते तत्र स्थानपदघटितवाक्यप्रयोक्तरि तादृशज्ञानाभावेऽपि न क्षतिः। अथ "जराया जरस्" इत्यादावीदृशस्थानपदार्थस्वीकारे जरे इत्यादेः साधुत्वं न स्यात्, जराकर्मकोच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयतावदित्याकारकज्ञानस्यापि स्थानपदार्थसमन्वयाय कल्पनीयत्वादिति चेद्?

अत्र केचित्-स्थानपदस्य वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारतायां वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारतायां ज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतायां च खण्डशक्तिस्वीकारेण नित्यविधिस्थले प्रथमप्रकारतांशमोषेण द्वितीयप्रकारतामात्रस्य निरूपकत्वेन ज्ञानेऽन्वयः। विकल्पविधिस्थले तु द्वितीयप्रकारतांशमोषेण प्रथमप्रकारतामात्रस्य निरूपकतया ज्ञानेऽन्वयः। तत्र तात्पर्यग्राहकं विभाषादिपदमेव। तथा च विकल्पविधिस्थलेजराकर्मकोच्चारणेऽपीष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानाविशेष्यत्वेनोभयोरपि पुण्यजनकत्वान्नानुपपत्तिरित्याहुः।

अन्ये तु-अभाव एव स्थानपदार्थः स्वप्रयोज्यत्वप्रतियोगिकत्वं षष्ठ्यर्थः। अभावस्य स्वाश्रयफलजनकत्वसम्बन्धेन विधेयेऽन्वयः। तथा च "इको यणचि" इत्यादाविक्प्रयोज्यत्वप्रतियोगिकाभाववदिष्टफलजनको यण् भवतीति बोधः। विकल्पस्थले त्वभावस्यापि विधेयत्वेन जरस् तदभावश्च जराप्रयोज्यत्वाभाववत्फलजनको भवतीत्यर्थेन जरसादेशाभावस्यापि पुण्यजनकत्वेनेष्टसिद्धिरित्याहुः।

केचित्तु—क्रियेच्छाजनकेच्छाविषयीभूतफलजनकक्रिया स्थानपदार्थः। क्रिया चोपस्थितोच्चारणप्रस्तरणादिर्विवक्षिता। क्रियाऽन्वयीकर्मतानिरूपकत्वादिः षष्ठ्यर्थः। क्रियायाश्च विधेये कर्मत्वादिनाऽन्वयः। तथा चेक्कर्मकोच्चारणेच्छाजनकेच्छाविषयीभूतं यत् स्वर्गादिफलं तज्जनकोच्चारणक्रियाकर्मीभूतो यण् भवतीत्यर्थः। दर्भाणामित्यत्रापि दर्भकरणकप्रस्तरणेच्छाजनकेच्छाविषयीभूतयज्ञसम्पत्तिरूपफलजनकप्रस्तरणकरणीभूताः शरा इत्यादिबोध इत्याहुः। तद्विकल्पविधिस्थले दोषादुपेक्ष्यम्। यद्यपि स्थीयतेऽस्मिन्निति व्युत्पत्त्या काल एव

वेऽर्थवत एव, अर्थप्रत्यायनार्थं शब्दप्रयोगात् । "इको यण्" (पा० सू० ६-१-७७) इत्यादेरच्परेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघटितः प्रयोक्तव्य इत्यर्थः । "एरुः" (पा० सू० ३-४-८६) इत्यादेश्च 'तस्तुः' इति; अतो न शब्दनित्यताहानिः । किञ्च इकारबुद्धिप्रसङ्गे यकारबुद्धिरित्यर्थः । अत एव "अचः परस्मिन्" (पा०सू०१-१-५७) इत्यादि सङ्गच्छते । स्पष्टञ्चेदं "दाधाघु" (पा०सू०१-१-२०) इति सूत्र"स्थानिवत्" (पा०सू०१-१-५६)सूत्रयोर्भाष्ये ।

---

स्थानपदार्थः, स्वोच्चारणाधिकरणत्वादिः षष्ठ्यर्थः । तथा चेक्कर्मकोच्चारणाधिकरणकालवृत्युच्चारणकर्मयण् भवतीत्यादिरूपेणार्थमाहुः । तदपि न, युगपद् इग्यणोरुच्चारणप्रसङ्गात् । द्विमात्रेकाराद्युच्चारणाधिकरणकालेऽर्द्धमात्रिकयकाराद्युच्चारणासम्भवाच्चेति दिक् । *प्रसङ्गश्च सति सम्भव इति* । एवञ्च आरेत्यादावुरदत्वोत्तरं हलादिशेषदीर्घयोः कर्त्तव्ययोरनर्थकस्यापि प्रसङ्गोऽसम्भवाद् ग्राह्य इति भावः । *अर्थबोधनाय प्रसङ्ग इति* । आनुमानिकस्थान्यादेशभावकल्पकं वाक्यं स्थान्यर्थबोधनसमर्थस्यैव कल्पकमिति भावः । *तस्तुरिति* । इदञ्च न शाब्दं, किन्तु फलितम् । एवञ्च सर्वत्र स्थानिवाचकादेशवाचकयोस्तद्घटिते लक्षणया इकारघटितस्योकारघटित इत्येवं क्रमेणैकरूप एव शाब्दोऽर्थ इति बोध्यम् । *अत इति* । आनुमानिकस्थान्यादेशभावस्योक्तरूपप्रसङ्गस्य च स्वीकारादित्यर्थः । *बुद्धिप्रसङ्ग इति* । स्थान्यादेशसमर्पकयोः स्वबुद्धिलक्षकत्वमिति भावः । *इत्यप्यर्थ इति* । इदन्तु बोध्यम्-पचत्वित्यादौ पदत्वार्थावश्यकतद्घटितलक्षणयैव नित्यत्वोपपत्तौ प्रक्रियानिर्वाहकशक्यार्थमादाय "अचः परस्मिन्" इत्यादेः सङ्गतौ च बुद्धिलक्षकत्वं निष्फलमेवेति । *अत एवेति* । बुद्धिलक्षकत्वस्य शक्यार्थस्य चाङ्गीकारादेवेत्यर्थः । "अचः परस्मिन्" इत्यस्य 'निगाल्यते' इत्यादावर्थवति सार्थक्यादाह-*आदीति* । तेन "न पदान्त"सूत्रस्थवरेयलोपादिग्रहणं सङ्गृह्यते । *भाष्य इति* ।आद्ये "सर्वे सर्वपदादेशा" इत्युक्तम् । अन्त्ये कार्यविपरिणामात्सिद्धमित्युक्तमिति बोध्यम् ।

स्थानेऽन्त (पा०सू०१-१-५०)। षष्ठीत्यनुवृत्त्या यत्र स्थानषष्ठी तत्रेदमुपतिष्ठते इति विध्येकवाक्यतयैवास्य नियामकत्वं न तु विहितानां नियमः, 'भुक्तवन्तम्' इतिन्यायविरोधात्। फलितमाह—प्रसङ्ग इति। सदृशतम इति। अर्थात्प्राप्यमाणानां मध्ये एव। अत एव 'गङ्गोदकम्' इत्यादौ त्रिमात्रो न। तमप् किम्? 'वाग्घरिः' इत्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयो मा भूत्, किन्तु नादवान् महाप्राणश्चतुर्थो 'घ' एव यथा स्यादिति। स्थानेऽन्तरतमे इति सप्तम्यन्तपाठस्तु दीर्घेषु यणासिद्ध्या दुष्ट इति भाष्ये स्पष्टम्। यत्रानेक इति। स्थानेग्रहणे एकदेशानुवृत्त्याऽनुवर्त्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे सति सम्भवे स्थानत ए-

---

*स्थानेऽन्तरतमः*। *त्रिमात्रो नेति*। "स्थानेऽन्तर" इत्यस्यापूर्वविधायकत्वाभावादिति भावः। *नादेति*। इदमुपलक्षणं स्वसमनियतसंवारघोषयोरपि। ननु "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठे तमब्ग्रहणसत्त्वेऽपि स्ववृत्तित्व स्वघटितदलाभिन्नदलीयवृत्तित्व स्वघटितदलाभिन्नदलीयस्वस्थानित्वेनाभिमतस्थानीतरस्थान्यवृत्तित्वैतत्त्रितयसम्बन्धेनादेशविशिष्टधर्मवति स्थानिन्यादेशो भवतीत्यर्थाद् घकारविशिष्टनादमहाप्राणप्रयत्नवत्त्ववत् खकारविशिष्टमहाप्राणवत्त्वधर्मस्यापि हकारे सत्त्वात् खकारापत्तिर्दुर्वारैवेत्यत आह-*स्थानेऽन्तरतमे इतीति* *दीर्घेषु यणसिद्ध्येति*। यकारादिरूपादेशविशिष्टमात्राद्वयन्यूनकालिकत्वसमानाधिकरणतालुस्थानजन्यत्वादिधर्मवति ह्रस्वेकारादौ स्थानिन्येव यण् स्यात्; न तु दीर्घेष्वित्यभिप्रायेण दूषित इति भावः। प्रथमान्तपाठे तु-स्ववृत्तित्व स्वस्थानिकादेशवृत्तित्व स्वस्थानिकादेशत्वेनाभिमतेतरयावदादेशावृत्तित्वैतत्त्रितयसम्बन्धेन स्थानिविशिष्टधर्मवानादेशो भवतीत्यर्थाद्ध्रस्वस्य दीर्घस्य च स्थाने तालुस्थानजन्यत्वरूपधर्मविशिष्टयकारादिरूपादेशासिद्धेः वाग्घरिरित्यादौ नादमहाप्राणप्रयत्नवत्त्वधर्मवतो घकारादेरेव सिद्धेश्च न दोष इति बोध्यम्। *एकदेशानुवृत्त्येति*। एकदेशस्यानुवृत्तिर्यया तया स्वरितत्वप्रतिज्ञयेत्यर्थः। *स्थानेग्रहणमिति*। इदं स्थानपदं तात्वादिस्थानपरमिति

वान्तरतम इत्यर्थमिति भावः । स्थानत इति । स्थानेनेत्यर्थः । तत्र स्थानतः "इको यणचि" (पा० सू० ६-१-७७) इति । अर्थतः "तृज्वत्क्रोष्टुः" (पा०सू०७-१-९५) इति, इह क्रोष्टुशब्दस्थाने पक्तृछब्दो नादेशः । गुणतस्तु 'वाग्घरिः' इत्यादौ । प्रमाणतः "अदसोऽसेः" (पा०सू०८-२-८०) इत्यादौ ।

तस्मिन्निति (पा०सू०१-१-६६) । अत्र 'तस्मिन्' इति उत्तरत्र 'तस्मात्' इति च सप्तम्यन्तपदपञ्चम्यन्तपदार्थकः स्वतन्त्रस्य सर्वनाम्नो निर्देशो व्याख्यानात्, बहुलक्ष्यसंस्कारानुरोधाच्च ; न तु तत्तत्पदपरम् । अन्यथा "तस्मिन्नणि च" (पा०

भावः । *तृज्वदिति* । नन्वत्र स्थान्यादेशभावविरहादिदमुदाहरणमयुक्तमिति चेत् ? न । रूपातिदेशस्य स्थान्यादेशभावे विश्रान्तेः क्रोष्टुरित्यस्यानुकरणत्वेऽपि प्रकृतिवदतिदेशात्षष्ठ्यां तृज्वद्भावसिद्धत्वेन तृज्वदित्यस्य मत्वन्तत्वेन क्रोष्टुशब्दस्य स्थाने तृज्घटित आदेशो भवतीत्यर्थाच्चानुपपत्तिविरहात् । यदि तु अस्य प्रयोगनियमार्थत्वमाश्रीयते; तदा अर्थत आन्तर्यस्यापि "इको यणचि" इत्याद्येवोदाहरणम् । तत्र हि आनुमानिकस्थान्यादेशभावकल्पे दधीत्यादीग्घटितस्य स्थाने कदाचिन्मध्वित्यादियण्घटितोऽपि प्रसज्येतेत्यर्थत आन्तर्याद्ध्य् इत्येवादेशो भवतीति बोध्यम् । *गुणत इति* । स्थानार्थप्रमाणातिरिक्तं सर्वमेवात्र गुणपदेन गृह्यत इति बोध्यम् ।

*तस्मिन्निति* । *सप्तम्यन्तपञ्चम्यन्तपदार्थक इति* । सप्तम्यन्तपञ्चम्यन्तपदान्यर्थौ यस्य स इत्यर्थः । इदञ्च इतिशब्दमपर्यालोच्योक्तम् । तत्पर्यालोचने तु यथाऽर्थस्तथा वक्ष्यते । *स्वतन्त्रस्येति*। अनुकरणस्येतिशब्दपारतन्त्र्यादस्य तत्त्वम् । एतेन 'तस्मिन्' इति सप्तम्यन्तानामनुकरणमिति मनोरमोक्तमयुक्तम्। अनुकार्यानुकरणयोः समानानुपूर्वीकत्वनियमेन "तस्मिन्नणि च" इत्यादावेव प्रवृत्त्यापत्तेरिति सूचयति । *व्याख्यानादिति* । शब्दपरत्वे "तस्मिन्नणि च" इत्यत्रैवास्योपस्थितौ लाघवात् 'तस्मिन्निर्दिष्टे पूर्वयोर्युष्माकास्माकौ' इत्येव कर्त्तव्य एतदारम्भसामर्थ्यादत्र सूत्रे एतत्साहचर्यात् "ते प्राग्धातोः" इत्येतदपवादभूत"व्यवहिताश्च" इति सूत्रसामर्थ्याच्चोत्तरत्र च शब्दपरत्वाभावबोधनादिति भावः । *तत्तत्पदपरमिति* । तत्त-

सू० ४-३-२) "तस्मान्नुडचि" (पा० सू० ६-३-७४) "तस्माच्छसो नः" (पा० सू० ६-१-१०३) इत्यत्रैव प्रवर्त्तेयाताम् । सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय, तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय च । इतिशब्दः पुनस्तस्य तदर्थपरत्वं बोधयति । निःशब्दो नैरन्तर्ये, दिशिरुच्चारणे । एवञ्च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उप-

---

स्पदानुकरणमित्यर्थः । *अन्यथा*-अर्थपरत्वानङ्गीकारे । *इत्यत्रैवेति* । इदमुपलक्षणं "तस्मान्नुड्द्विहल" इत्यस्यापि । ननु तच्छब्दस्यैव सप्तम्यन्तार्थकत्वे सप्तमीनिर्देशो व्यर्थ इत्यत आह—*सप्तमी त्विति* । *बोधनायेति* । तत्रैव तात्पर्यग्राहिकेति भावः । एवमेव "तस्मात्" इत्यत्र पञ्चम्यपीति बोध्यम् । नन्वेवं 'सप्तमीनिर्दिष्ट' इत्येवास्त्वित्यत आह—*तद्बोध्यार्थस्येति* । ननु तच्छब्दस्य सप्तम्यन्तपदवाचकत्वेन तस्य निरन्तरोच्चरितस्य कार्यिणोऽसम्भवेनेदमसङ्गतमत आह—*इति शब्द इति* । *तस्य*—तच्छब्दस्य । *तदर्थपरत्वं*—सप्तम्यन्तपदार्थपरत्वम् । *एवञ्च*—तच्छब्दस्य सप्तम्यन्तार्थपरत्वे च । *सप्तम्यन्तार्थ इत्यादि* । अव्यवहितोच्चारितसप्तम्यन्तार्थनिरूपितोपश्लेषविशिष्टस्य प्रसक्तं यत्कार्यं तत्पूर्वस्य भवतीत्यर्थः । अत्रेदमवधेयम्—सप्तम्यन्तार्थेऽव्यवहितोच्चारिते इत्यर्थस्तावदनुपपन्नः; अव्यवहितोच्चारितत्वस्योद्देश्यकोटौ निवेशयितुमशक्यत्वात् । पूर्वस्य भवतीत्येतावन्मात्रस्य विधेयत्वे उद्देश्यतावच्छेदकरूपेणोद्देश्यासिद्धरपक्षणेन तस्या अत्राभावात् । सप्तम्यन्तार्थ उच्चारिते उपश्लिष्टस्य यत्कार्यं तदव्यवहिते पूर्वस्येत्यर्थोऽपि न युक्तः । एवंसति निर्दिष्ट इत्यस्य विधेयकोटिप्रविष्टत्वेन निर्दिष्ट इत्यनेन सामानाधिकरण्याय चेतिग्रन्थासङ्गतेः । यदि तु उद्देश्यसिद्धेरन्यथाऽनुपपत्त्या सप्तम्यन्तार्थे उपश्लिष्टस्य यत्कार्यं तदव्यवहिते भवतीति वाक्यान्तरं कल्प्येत, तदा तदेव गौरवम् । तस्मात् 'तस्मिन्' इतिसप्तम्यन्तानामनुकरणं बोधकं वाऽस्तु । यत्र औपश्लेषिकाधिकरणबोधकं पदं तत्र निर्दिष्टे पूर्वस्येति पदद्वयमुपातिष्ठत इति अस्यार्थः । एवं यत्र दिग्योगलक्षणपञ्चम्यन्तं पदं, तत्र निर्दिष्टादुत्तरस्येति पदद्वयमुपातिष्ठत इति द्वितीयस्यार्थः । न च पञ्चम्यन्तपदस्य परिभाषालिङ्गत्वे "पुमः खय्यम्परे" इति सूत्रे पञ्चम्यन्तपदाभावान्निर्दिष्टांशानुपस्थितावमा-

श्लिष्टस्य पूर्वस्य कार्यमिति वाच्योऽर्थः । एवञ्चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य पञ्चम्यन्तपदस्य चार्थौ लिङ्गम् ।

अत्र सूत्रे उपश्लिष्टपदाध्याहारेण निर्दिष्टे इति औपश्लेषिकेऽधिकरणे सप्तम्येवोचिता "उपपदविभक्तेः" ( प० १०२ ) इति न्यायात्, न तु सतिसप्तमीति "तत्र च दीयते" ( पा०सू०५-१-९६ ) इति सूत्रे कैयटे स्पष्टम् । "स्नुक्रमोः" ( पा० सू०७-२-३६ ) इति सूत्रे च कैयट आह—"तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यम्" इति । उपश्लेषः समीपवृत्तित्वं, तच्च वर्णयोर्बौद्धं द्रष्टव्यम् । एवम्

---

व्यवहितेऽपि खयि पुमो रुत्वापत्तिरिति वाच्यम् । पदोपस्थितिवादिनां मते तत्र लक्ष्यानुरोधादम्परपदेऽव्यवहितत्वांशान्तर्भावेणैवैकार्थीभावाभ्युपगमात् । यद्वा, "तस्मिन्" इतिपरिभाषायामिति पदमौपश्लेषिकाधिकरणसप्तम्यन्तार्थोपश्लिष्टकार्यपरम् । एवं "तस्मात्" इतिपरिभाषायामिति पदं दिग्योगलक्षणपञ्चम्यन्तार्थान्वयिसम्बन्धिकार्यपरम्; तस्मिन्निति तस्मादिति च तात्पर्यग्राहकम् । तथा चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टस्य कार्यमव्यवहितपूर्वस्य भवतीति दिग्योगलक्षणपञ्चम्यन्तार्थान्वयिसम्बन्धिकार्यमव्यवहितोत्तरस्य भवतीति च क्रमेण वाक्यार्थबोध इत्यलम् । *पदस्य चार्थ इति* । सप्तम्यर्थविशिष्टप्रकृत्यर्थो लिङ्गमित्यर्थः ।

नन्वस्य सूत्रस्यौपश्लेषिकाधिकरणबोधकस्थल एव प्रवृत्तिरिति कुतो लब्धमत आह—*अत्र सूत्र इति* । *उपपदविभक्तेरिति* । केचित्तु—"तस्मिन्निति" इत्यस्याधिकरणसप्तमीत्वं निर्दिष्ट इत्यस्य सत्सप्तमीत्वं च वक्तुं युक्तम् । अन्यथा उत्तरसूत्रे निर्दिष्ट इत्यस्य पञ्चम्यन्तत्वेन विपरिणामस्य कर्त्तव्यत्वापत्तेः । निर्दिष्ट इत्यंशे "उपपदविभक्तेः" इतिन्यायस्त्वानित्यत्वान्न प्रवर्त्तत इत्याहुः ।

*बौद्धमिति* । अयम्भावः—सामीप्यं पौर्वापर्यं च कालिकदैशिकभेदाद्द्विविधम् । तच्च युगपदवस्थितानामेवेति शब्देऽनित्यत्वकल्पे यौगपद्यासम्भवेन द्वयोरप्यसम्भवः । यद्यपि लोके 'चैत्रात्पूर्वः फाल्गुन' इत्यादौ भिन्नकालिकयोरपि कालिकं पौर्वापर्यं प्रतीयते । तथाऽपि शास्त्रे तथावक्तुमशक्यम्; प्रत्ययनिमित्तककार्याणां प्रत्ययोत्पत्तेः पूर्वमपि

"इको यणचि" ( पा०सू०६-१-७७ ) इत्यादावपीयमेवेति "संहितायाम्" ( पा०सू०६-१-७२ ) इति सूत्रे भाष्ये। तत्रोपश्लेषः पूर्वस्येव परस्याव्यवहितस्येव व्यवहितस्य चेति पूर्वस्यैवेति नियमार्थमिदमव्यवहितस्यैवेति च। अत एव लक्ष्यानुसारात् क्वचित्सतीत्यध्याहारात् सत्सप्तम्याश्रयणे नास्याः प्रवृत्तिरिति "श्नान्नलोपः" ( पा०सू०६-४-२३ ) इत्यत्र भाष्ये उक्तम्। अत एव "कर्तृकर्मणोः कृति" ( पा०सू०२-३-६५ ) इत्यत्र नास्याः प्रवृत्तिः, कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठीति तदर्थात्। "तस्मात्" ( पा०सू०१-१-६७ ) इति सूत्रे निर्दिष्ट इति निर्दिष्टादित्यर्थकं विभक्तिविपरिणामात्। सा चोत्तरस्येति दिग्योगलक्षणा इति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः। "उदः स्था" ( पा०सू०८-४-६१ ) इत्यादौ च 'उदः' इति दिग्योगलक्षणा पञ्चमी। तत्रानियतदिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति "तस्मात्" ( पा०सू०१-१-६७ ) इत्यनेन नियम्यते। अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येति तदर्थः। तत्फलितमाह—सप्तमीनिर्देशेन इत्यादि।

यदि तु अर्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते, तदा निर्दिष्टपदं संहिताऽधिकारश्च विफल इति "संहितायाम्" ( पा०सू०६-१-७२ ) इति सूत्रे भाष्ये

---

कालिकतत्पूर्वत्वमादाय प्रवृत्त्यापत्तौ बहूपप्लवापत्तेः। नित्यत्वकल्पेऽपि न तत्सम्भवः; स्वोत्पत्त्यधिकरणक्षणसमीपक्षणोत्पत्तिकस्य कालिकसामीप्यस्यासम्भवात्। किन्तु स्वज्ञानाधिकरणक्षणसमीपक्षणवृत्तिज्ञानविषयत्वमेवेत्युपश्लेषो बुद्धिकृत एव पर्यवसन्न इति। *एवमिति* निर्दिष्ट इत्यत्रेवेत्यर्थः। *इयमेव*—औपश्लेषिकाधिकरणसप्तम्येव। *दिग्योगलक्षणपञ्चम्यामेव प्रवृत्तिरिति*। तेनानुनासिकात्पर इत्यादावप्रवृत्तिः फलम्। *दिग्योगलक्षणाऽपीति*। अत्र व्याख्यानमेव शरणम्।

अन्ये तु-अत्र निर्दिष्ट इति निर्दिष्टादित्यर्थकमित्यादि सर्वं चिन्त्यम्;

स्पष्टम् । अवग्रहे च संप्रदाय एव शरणमिति आनङादिवि-षये आदेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक् । अकृतव्यूहपरि-भाषा त्वनित्या, नास्त्येव वा । "न लक्षणेन पदकारा अनुव-र्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्" इति भाष्येण तदनुरो-धेन शास्त्रासङ्कोचस्य शास्त्रकरणाभावस्य च स्पष्टमुक्तत्वाच्च । एतेन संहिताऽधिकारस्तद्बहिर्भूतानामर्धमात्राधिककालव्यवाये प्रवृ-त्तिज्ञापनार्थम् । तेन 'अग्नाविष्णू' इत्यादाववग्रहे आनङादिसिद्धि-रित्यपास्तम्, "प्रत्ययः" (पा०सू०३-१-१) "परश्च" (पा०सू० ३-१-२) इत्यादौ तूत्तरांशविकला "तस्मात्" (पा०सू०१-१-६७) इति परिभाषा प्रवर्त्तते । तेन न प्रत्यया व्यवहिताः । अत एव "छन्दसि परेऽपि" 'व्यवहिताश्च" इति सूत्रं सार्थकम् ।

आगमविधावपि "आने मुक्" (पा०सू०७-२-८२) इत्यादौ "तस्मिन्" (पा०सू०१-१-६६) इति परिभाषया पूर्व-सम्बन्धित्वनिर्णयः । अत एवात्र पूर्वस्येत्यादि न स्थानषष्ठी ।

---

दिग्योगाभावेन पञ्चम्यसम्भवात् । उत्तरस्येत्यस्य विधेयकोटिनिविष्ट-त्वात्, किन्तु तस्मादित्येवोद्देश्यम् । तच्च उत्तरस्येतत्प्रत्यासत्त्या दि-ग्योगलक्षणपञ्चम्यन्तं निर्दिष्ट इति सप्तम्यन्तं यथाश्रुतमेवानुवर्त्तते । तथा च-दिग्योगलक्षणपञ्चम्यन्तार्थसम्बन्धिकार्यमव्यवहितोच्चारितनि-रूपितोपश्लेषविशिष्टस्योत्तरस्य भवतीत्यर्थः । अव्यवहितोच्चारितश्च पञ्चम्यन्तार्थ एवेत्याहुः ।

ननु पदानामर्द्धमात्राधिककालव्यवायेनोच्चारणमवग्रहः, स च पद-काले भवति, तत्रावग्रहेऽपि 'अग्नाविष्णू' इत्यादावानङ् भवति, त्वदुक्त-नियमे स न स्यादत आह-*अवग्रह इति* । सम्प्रदायमेव विशदयति-*आनङादीति* । नन्वकृतव्यूहपरिभाषयाऽवग्रहणोपश्लेषाभावस-म्भावनायां पूर्वमानङादि न स्यादत आह-*अकृतेति*। *न लक्षणेने-ति*। लक्षणानुरोधिनः पदकारा भवन्ति, न तु तदनुरोधि लक्षणं भव-तीति भावः। *उत्तरांशविकलेति*। एतत्परिभाषाद्वयविषये यावानंशः सिद्धो बाधितो वा भवेत्; तावन्तं विहायैवान्यांशोपस्थितिस्वी-करादिति भावः । *व्यवहिताश्चेतिसूत्रं सार्थकमिति* । अन्यथा "ते

तत्तद्विधिभिरेव सम्बन्धस्य निर्णीतत्वेन "षष्ठी स्थाने" ( पा० सू०२-१-४९) इत्यस्याप्रवृत्तेः। "गाङ्कुटादिभ्यः" ( पा०सू०१-२-१) इत्यादावपि षष्ठ्यंशविकलैतत्परिभाषाप्रवृत्तिर्बोद्ध्या । परिभाषाणां नियमत्वन्तु यदि परिभाषासूत्रं न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक्

अलोऽन्त्यस्य ( पा०सू०१-१-५२) । षष्ठी स्थाने इत्यनुवर्त्तते; तदाह—षष्ठी इत्यादि । स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थः । स्थाने इत्यादि किम् ? इट् तृच ऋकारात्पूर्वो मा भूदिति । अन्त्यस्येति साहचर्यादल इति षष्ठ्यन्तम् ,

---

प्राग्" इत्यत्र प्राक्पदसत्त्वेनोत्तरांशस्य बाधादनुपस्थिताव्यवहितत्वांशस्याप्यनुपस्थित्या व्यवहितप्रयोगसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

अत्रेदमवधेयम्—परिभाषाद्वयस्य पूर्वत्वमव्यवहितत्वं षष्ठ्यंशः उत्तरत्वमव्यवहितत्वं षष्ठ्यंशश्चेति प्रत्येकमंशत्रयं क्रमेणोपस्थाप्यम। तत्र "शि तुक्" इत्यत्र "ङः सि धुट्" इत्यत्र च यथायथं यावदंशोपस्थितिः। "इको यणचि" "उदः स्था" इत्यादौ षष्ठ्यंशस्य सिद्धत्वादंशद्वयोपस्थितिः । "प्रत्ययस्थात्" इत्यत्र पूर्वत्वस्य सिद्धत्वेनोत्तरत्वस्य बाधितत्वेन षष्ठ्यंशस्यापि सिद्धत्वेनाव्यवहितत्वांशस्यैवोपस्थितिः *एवं*-प्रत्ययाधिकारेऽपि । ननु साक्षाल्लक्ष्यसंस्कारकयोः "शेषो ध्यसखि" "पतिः समास एव" इत्याद्योर्भवतु नियम्यनियामकभावः; परिभाषाणां तु विधिवाक्येन सहैकवाक्यत्वं विना लक्ष्यसंस्कारकत्वाभावान्नियामकत्वासम्भव इत्यत आह—*परिभाषाणामिति* । एवञ्चार्थिको नियमत्वव्यवहार इति भावः ।

*अलोऽन्त्यस्य* । *इत्यनुवर्त्तत इति*। उभयमनुवर्त्तत इत्यर्थः। *निर्दिष्टेति*। एतच्चावयवत्वान्वयिनिरूपकत्वार्थकं षष्ठ्यन्तमध्याहृतम् , अनुवृत्तं षष्ठीपदं तृतीयया विपरिणमितम्। तथा चोक्तार्थलाभ इति बोध्यम । एतेन मूलेऽपि षष्ठीनिर्दिष्टान्त्यस्येति पाठः सूचितः। 'षष्ठीनिर्दिष्टोऽन्त्यस्य' इति तु अपपाठः । *स्थानेत्यादि किमिति*। स्थान इत्यस्यानुवृत्तिः किमर्थेति प्रश्नः। *ऋकारात्पूर्व इति* । एतदनुवृत्त्यभाव उद्देश्यांशेऽपि प्रत्यासत्त्या षष्ठीनिर्देशेन विधीयमानमात्रस्य लाभात् "आद्यन्तौ टकितौ" "अलोऽन्त्यस्य" इत्यनयोः समावेशः स्यादिति भावः। *षष्ठ्यन्तमिति* । न तु जसन्तमादेश-

अन्त्यस्याल इत्यर्थः । अल इति किम् ? पदस्येति विधीयमानं "वसुस्रंसु" ( पा० सू० ८-२-७२ ) इति दत्वं 'स्वनडुद्भ्याम्' इत्यादावन्त्यस्य पदस्य मा भूत् । स्थाने विधीयमान इति प्रत्यासत्तिलब्धम् । एवञ्चाल एवेति, अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायबोधकपदोत्तरं स्थानषष्ठी अस्या लिङ्गम् । अत एव "इटोऽत्" (पा० सू० ७-१-८६) इत्यादौ नास्याः प्रवृत्तिः । पथ्यादीनामित्यस्यावयवषष्ठीत्वाद्, इत इत्यस्याल्समुदायोत्तरत्वाभावाच्च ।

ङिच्च (पा० सू० १-१-५३) । अनेकाल्र्थमिदम् ।

---

विशेषणं "पादस्य लोप" इत्यादावव्याप्त्यापत्तेरिति भावः । *पदस्य विधीयमानमिति* । "पदस्य" इत्यधिकृत्य विधीयमानमित्यर्थः । *पदस्य माभूदिति* । तस्याप्यनुडुह्शब्दान्तपदान्त्यत्वादिति भावः । *प्रत्यासत्तिलब्धमिति* । वस्तुतस्तु नास्योपयोगः । न चोद्देश्यासिद्धिः; स्थानषष्ठ्या एवोद्देश्यत्वात् । स्थानपदार्थानुयोगिकसम्बन्धार्था षष्ठी स्वप्रकृत्यर्थनिरूपितान्त्याल्प्रतियोगिकसम्बन्धार्थिका भवतीत्यर्थेन सामञ्जस्यादिति बोध्यम् । *नियमद्वयमिति* । इदमयुक्तम्, सिद्धे सत्यारम्भाभावात् ।

अन्ये तु—अनेकालादेशानां सर्वादेशत्वे "अनेकाल्शित्सर्वस्य" इत्यस्यारम्भसामर्थ्यादेकालादेशस्य स्थानषष्ठीनिर्दिष्टावयवस्थानकत्वं कल्पयित्वा नियामकत्वं वर्णयन्ति; तन्न युक्तम् । इतः पूर्वं नियमेनानेकालित्यस्य वाक्यार्थबोधकल्पने तद्वैयर्थ्यमूलकोक्तार्थकल्पने चातिगौरवेण लघुभूतविधित्वस्यैवौचित्यात् । परिभाषाणामनियमे नियमकारकत्वमिति प्रवादस्तु यदि परिभाषात्वसामानाधिकरण्येन तदोमिति ब्रूमः । यदि तदवच्छेदेन तदुक्तिस्तदा निर्युक्तिकः प्रवादो नादर्त्तव्य इति ब्रूम इत्याचारिणः । परिभाषाणां फलविशेषसत्व एव प्रवृत्तिरित्येतल्लभ्यमाह—*अल्समुदायेति* । अल्समुदायबोधकेत्यर्थः । *नास्याः प्रवृत्तिरिति* । यद्यपीत्पदे प्रवृत्तावपि व्यपदेशिवद्भावेन क्षतिविरहः, तथाऽपि फलाभावान्न प्रवृत्तिरिति तात्पर्यम् ।

*ङिच्च* । *अनेकाल्र्थमिति* । एकाल्सु "अलोऽन्त्यस्य" इत्यनेनैव सिद्धिरिति भावः ।

आदेरिति । आदेरल इत्यर्थः । तेन 'द्वीपम्' इत्यादौ पान्त-समुदायस्य न ईत्वम् । अत्र परस्येत्यावर्त्तते तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं, तत्रैवेदम् । तेन "नित्यं ङितः" (पा० सू० ३-४-९९) इत्यादौ न दोषः । तत्र विकरणव्यवधाने प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वात् ।

अनेकाल् शित् (पा० सू० १-१-५५) । शित उदाहरणम् "इदम इश्" । ननु शकारोच्चारणसामर्थ्याद् भूतपूर्वानेका-ल्त्वमादाय सर्वादेशत्वे सिद्धे शिदिति व्यर्थम् । किञ्च सानुबन्ध-कनिर्देशो यथा नालः स्थानित्वं "भोभगो" (पा० सू० ८-३-१७)

---

*आदेः परस्य* । *आदेरल इति* । अलग्रहणानुवृत्तेरयमर्थः । *पान्तसमुदायस्येति* । न च व्यपदेशिवद्भावेनाकारान्तस्यापि तदा-दित्वात्तत्रैव तदापत्तिः कुतो नोक्तेति वाच्यम् । मुख्यधर्मवत्पान्तघ-टितत्वेनातिदेशाप्राप्तेः । अलोऽन्त्यस्यापरस्येति वाच्य"आदेः परस्य" इत्यारम्भेणानतिदिष्टादित्व एवैतस्याः प्रवृत्तिस्वीकाराच्च । पान्तं परित्यज्याकारान्तानुधावनस्य निर्बीजत्वाच्च । *नित्यं ङित इत्यादौ न दोष इति* । न चात्र "आदेः परस्य" इत्यस्य प्रवृत्तावपि सकारा-न्तस्य ङिदुत्तमस्यावयवो यो निर्दिश्यमानादिस्तस्य लोप इत्यर्थात्स-कारस्यैव निर्दिश्यमानत्वात्तदादित्वस्यापि तत्रैव व्यपदेशिवद्भावेन सत्त्वान्न दोष इति वाच्यम् । अत्रैवं निर्वाहेऽपि "तासस्त्योः" इत्यादौ दोषस्य दुर्वारत्वात् । *धातोरित्यस्य विहितेति* । इदं च धातोरि-त्यस्य फलाभावेऽप्यनुवृत्तिशङ्कायाम् । वस्तुतस्तस्याननुवृत्तिरेव युक्ता । यद्यपि विहितपदाध्याहारे पञ्चम्युपपत्तये परशब्दस्याप्यध्याहार इत्य-ङ्गसंज्ञासूत्र उद्योत उक्तम् , तथाऽपि तत्र परो यो विहित इत्यर्थादुपल-क्षण परत्वम् । प्रकृतसूत्रस्य तु मुख्यविशेषणत्वे प्रवृत्तिरिति न दोषः ।

*अनेकाल्शित्* । *शकारोच्चारणसामर्थ्यादिति* । स्थानि-वत्त्वं तु न; अल्विधित्वात् । ननु शकारोच्चारणसामर्थ्यादित्संज्ञालोप-योरभाव एव कल्प्यताम्, उभयत्रापि शास्त्रबाधस्य साम्येऽप्यारोपस्यैव गुरुत्वादत आह—*किञ्चेति* । *अल इति* । अनुबन्धाघटितालवृत्य-ल्त्वव्याप्यधर्मस्येत्यर्थः । *स्थानित्वमिति* । स्थानितावच्छेदकत्व-

इति सूत्रे भाष्ये उक्तम्, तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति तदर्थम् । विधौ निर्दिष्टो योऽनेकालस सर्वस्येति सूत्रार्थः। उद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयता तु अनुबन्धविनिर्मुक्तस्येति न "अणुदित्"(पा०सू०१-१-६९) सूत्रभाष्यविरोधः । "श्नसोः" (पा० सू० ६-४-१११) इति लोपस्य "लोपो यि" (पा० सू० ६-४-११८) इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः । अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्तमिति चेत् ? न, "नानुबन्धकृतमनेकाल्त्वम्" (१०५)इति ज्ञापनेन चारितार्थ्यात् । तेन "दिव औत्" (पा० सू० ७-१-८४) इत्यादीनां न सर्वादेशत्वम् । अस्य च यथेत्संज्ञा तथा वक्ष्यते । "नानेकाल्

मित्यर्थः । *आदेशत्वमपीति* । आदेशतावच्छेदकत्वमपीत्यर्थः । *सूत्रोपात्तस्येति* । सूत्रोपात्तवृत्तिधर्मस्येत्यर्थः । यथाश्रुतेऽणुदित्सूत्रस्थाण्त्वात्सवर्णग्रहणं प्राप्नोतीति भाष्यविरोधात् । एतस्य लक्ष्यवृत्तित्वस्यारोपाद् बोध्यम् । *विधाविति* । विधिशास्त्र इत्यर्थः । *निर्दिष्ट इति* । निर्दिष्टवृत्तिरित्यर्थः । *अनेकालिति* । अनेकाल्वृत्तिधर्म इत्यर्थः। *स इति* । तद्धर्मावच्छिन्नविधेयताश्रय इत्यर्थः । *सूत्रेति*। "अनेकाल्" इतिसूत्रेत्यर्थः । अनुबन्धघटितधर्मस्य स्थानितादेशतावच्छेदकत्वेऽपि स्थानित्वादेशत्वे अनुबन्धविनिर्मुक्तस्यैवेत्याह—*उद्देश्यत्वेति* । *विषयतयेति* । अभेदस्तृतीयार्थः । तथा चोद्देश्यत्वविधेयत्वाख्यविषयताऽभिन्नशाब्दबोधविषयतेत्यर्थः । *अणुदित्सूत्रेति* । तत्र हि "अप्रत्ययादेशटितकिन्मित" इतिवार्त्तिकव्याख्याऽवसरे आदेशोदाहरणम्—"इदम इश्" अण्त्वात्सवर्णग्रहणं प्राप्नोतीत्युक्तम् । ननु शित्ग्रहणाभावे "श्नसोः" इतिविहितलोपस्य सर्वादेशत्वार्थं यद् द्विशकारको निर्देश इत्युक्तं तद्विरोध इत्यत आह—*श्नसोरितीति* । नन्वनुबन्धानामनेकान्तत्वेनेशो नानेकाल्त्वमिति नानेकाल्त्वात्सिद्धिरित्याशङ्क्याह-*अनुबन्धानामित्यादि* । *चारितार्थ्यादिति* । इशोऽनेकाल्त्वाभावादिश्त्वस्यानेकाल्वृत्तित्वाभावादिति भावः । ननु औतस्तकारस्योच्चारणार्थत्वात्कथमित्संज्ञेत्यत आह—*अस्य चेति* । *वक्ष्यत इति* । उच्चारणार्थानामित्संज्ञां विना निवृत्त्यसम्भवादिति वक्ष्यत इत्यर्थः । मात्रालाघवाभिप्रायकशङ्कायामाह-*नानेकालिति* ।

शित्" इति तु नोक्तम्, "अनन्तरस्य" इतिन्यायेन "आदेः परस्य" (पा० सू० १-१-५४) इत्यस्यैव निषेधापत्तेः । परत्वाद् इति। "आदेः परस्य" इत्यस्यावकाशः "द्व्यन्तरुपसर्गेभ्यः" (पा० सू० ७-१-९), द्वीपम् । शित्सर्वस्य "इदम इश्" (पा० सू० ५-३-३) एवम् "अतो भिसः" (पा० सू० ७-१-९) इत्यादिविषये "अनेकाल्" (पा० सू० १-१-५५) इत्यनेन "आदेः परस्य" (पा० सू० १-१-५३) इति परत्वाद् बाध्यते। एतेन "ङिच्च" (पा०सू० १-१-५४) इत्यत्र ङिदेवानेकालन्त्यस्येति नियमेन सिद्धेऽनेकाल्ग्रहणं व्यर्थम्" इत्यपास्तम् ।

स्वरितेन (पा०सू०१-३-११) ।, इत्थंभूतलक्षणे तृतीया।

---

*इत्यस्यैव निषेधापत्तेरिति* । ननु "ङिच्च" इत्यस्यारम्भात्सामान्यचिन्तामाश्रित्य "अलोऽन्त्यस्य" इत्यस्यापि बाधान्न दोष इति चेद् ? न। निर्दिश्यमानपरिभाषाया अपि बाधापत्तौ निर्जरसावित्यादावङ्गस्यादेशापत्तेः । नन्वेवमपि 'आदेः परस्याशिदनेकाल्' इत्येव वक्तव्ये न "अनेकाल्" इत्यादिसूत्रकरणेन "अनन्तरस्य" इतिन्यायबाधान्न दोष इति चेद्? न। तथासति सकललक्ष्यप्राप्तस्य "अलोऽन्त्यस्य" इत्यस्यैव सामर्थ्यान्निषेधापत्तेः। न च "अलोऽन्त्यस्याशिदनेकाल्" इतिवक्तव्ये पृथक्करणसामर्थ्यादुभयोर्निषेधान्न दोष इति वाच्यम् । तथासति मानगौरवापत्त्या "अनेकाल् शित्" इति यथाश्रुतस्यैव लघुत्वात् । यदि तु 'ङिच्चलोऽन्त्यस्य' ततः 'अशिदनेकाल्' अलोऽन्त्यस्येत्यनुवर्त्तते । तत "आदेः परस्य" अशिदनेकालिति अल इति चानुवर्त्तत इति न दोष इत्युच्यते ; तदा तथैवास्तु । ननु "अष्टाभ्य" इत्यत्र औशः शित्वसामर्थ्यात्सर्वादेशो भविष्यतीत्यत आह—*एवमिति* । एतेन "ङिच्च" इत्यत्र ङिदेवानेकालिति अत्रानेकालितिपदाभावात्कथमस्य लाभ इति नाशङ्कनीयम् "ङिच्च" इतिसूत्रस्यानङाद्यर्थमेवारम्भेण तेषामनेकाल्त्वात् । *अपास्तमिति* । ङिदेवानेकालन्त्यस्येति "ङिच्च" इतिशास्त्रकृतनियमेन ङिदतिरिक्तानेकालादेशस्थले "अतो भिस" इत्यादौ "अलोऽन्त्यस्य" इत्यस्याप्रवृत्तावपि "आदेः परस्य" इत्येतत्प्रवृत्तेर्दुर्वारत्वेन तद्व्यावृत्तयेऽनेकाल्ग्रहणस्यावश्यकत्वादिति भावः ।

*स्वरितेन* । *इत्थंभूतेति* । अत्र सूत्र इत्यादिः । तदर्थश्च

स्वरितत्वज्ञाप्योऽधिकारो विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दोषविशेषरूपमङ्गलसाधारणं स्वररूपमाधिक्रियमाणपदघटकाज्निष्ठं वा । तच्चानुनासिक्यवत्प्रतिज्ञागम्यम् । विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः, क्वचित्पूर्वत्रापि । कियद्दूरमधिकार इत्यत्रासति गमके व्याख्यानमेव शरणम् । किं च स्वरितेनाधिकारगतिः । तेन "गोस्त्रियोः" (पा०सू०१-२-४८) इत्यादावस्यधिकारस्थप्रत्ययग्रहणमित्याद्याकरादवसेयम् । एतेन "व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति, आकाङ्क्षायान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य न्याय्यत्वाच्च किं सूत्रेण" इत्यपास्तम् । स्पष्टं चेदं भाष्ये । परानित्य इति (प०) । परं विप्रतिषेधसूत्राद्

---

ज्ञाप्यत्वं स्वरितशब्दश्च धर्मपरस्तदाह-*स्वरितत्वेति* । अधिकारत्वं प्राप्तस्येदं स्वरितत्वं लक्षणं तदाह—*ज्ञाप्येति* । अधिकारशब्दो भावसाधन इत्याशयेनाह—*विनियोग इति* । मूलन्तु फलितार्थपरं बोध्यम् । वस्तुतस्तु कर्मसाधनेऽपि न क्षतिरिति बोध्यम् । *साधारणमिति* । तथा च विशिष्टनिष्ठम् । अत एव दोषेतिविशेषणमुक्तमिति भावः । ननु स्वरितत्वस्य दोषविशेषरूपत्वे गौरवमत आह—*स्वररूपमिति* । अत्र पक्षे शब्दस्वरूपस्य मूलोक्तस्वरितत्वयुक्तत्वं स्वाश्रयघटितत्वरूपपरम्परया बोध्यम् । सम्प्रति तस्य दुर्ज्ञानत्वाज्ज्ञानोपायमाह—*तच्चेति* । अपकर्षसङ्ग्रहायाह—*प्रायेणेति* । तत्फलमाह—*क्वचिदिति* । यथा "रायो हलि" इत्यत्रत्यहलीत्यस्य पूर्वत्र "अष्टन आ विभक्तौ" इत्यत्रोपस्थितिः । *असतीति* । अङ्गस्येत्यादौ । "प्राग्दीव्यत" इत्यादौ तु गमकमस्त्येवेति न व्याख्यानापेक्षेति भावः । अधिकारशब्दस्य मुख्यार्थमाह—*किञ्चेति* । अस्मिन् पक्षेऽधिकारशब्दस्याधिककार्यकारित्वज्ञानमर्थ इति भावः । *तेन*—उक्तार्थाङ्गीकारेण । *स्यधिकारस्थेति* । टाबादीत्यर्थः, न तु स्त्रीबोधकसामान्येत्यर्थः; तत्र स्त्रीपदे स्वरितत्वप्रतिज्ञानात् । इदमुपलक्षणं तदाह—*इत्यादीति* । तेन तत्तत्पूर्वपूर्वशास्त्रे स्वरितत्वप्रतिज्ञानादुत्तरोत्तरशास्त्रापेक्षप्राबल्यबोधकानां पूर्वविप्रतिषेधानां गौणाधारस्याधिकरणसंज्ञायाः यथासंख्येन सम्बन्धस्य च सङ्ग्रहः । *एतेन*—किञ्चेत्यादिनाऽर्थान्तरकरणेन ।

बलवत् । नित्यं कृताकृतप्रसङ्गि, तद्विपरीतमनित्यम् । तत्राक्लृप्ता-भावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् । अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदाय-मध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । तदीयनि-मित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । तस्य बलवत्त्वे बीजमाह—असिद्धमिति । इयञ्च "वाह ऊठ्" (पा० सू० ६-४-१३२) इति सूत्रेण ज्ञापिता । यद्यपि "प्रत्यङ्गवर्त्ती लोको दृश्यते, मनु-ष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः सम्बन्धिनाम्" इतिन्यायमूलकत्वमस्या "अचः परस्मिन्" (पा० सू०१-१-५७) इति भाष्ये उक्तम्, तथाऽपि तेन न्यायेन युगपत्प्राप्तिविषयतैव स्यात् ; ज्ञापकेन तु सर्वविषयता बोध्यते इति "वाह ऊठ्" (पा०सू०६-४-१३२) इति सूत्रे कैयटे स्पष्टम् । अ-न्यथा वाहः संप्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे "वृद्धिरेचि" (पा०सू०६-१-८८) इति वृद्धौ 'प्रष्ठौहः' इत्यादिसिद्धावूठ्विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति न 'अयजे इन्द्रम्' इत्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रामाण्याद्बलवान् । अकृत (५०) इति । न कृतो विशिष्ट ऊहस्तर्को नि-मित्तविनाशेऽपि कार्यस्थितिरूपः, यथा दण्डविनाशेऽपि घटस्थि-तिः, स यैस्ते इत्यर्थः । तदाह—निमित्तम् इत्यादि । तत्प्रयुक्तं कार्यं जातमपि न कुर्वन्ति नोच्चारयन्तीत्यर्थ इति कैयटादयः । अन्ये तु व्यूहोऽन्तरङ्गशास्त्रं बहिरङ्गापोहनरूपत्वात् । तद् निमि-

---

*असिद्धम्* । *प्रत्यङ्गेति* । अन्तरङ्गेत्यर्थः । *शरीरेति* । तस्य सुखादिसाक्षात्कारायतनत्वात् । *सुहृदामिति* । सुहृत्त्वस्य प्रथमोपस्थितिहेतुत्वात् । *सम्बन्धिनामिति* । अवश्यकर्त्तव्यत्वात् ।

*अकृतव्यूहाः* । *व्यूहोऽन्तरङ्गशास्त्रमिति* । प्रकृतस्य व्यू-हपदस्याचारक्विबन्तप्रकृतिकाच्प्रत्ययान्तत्वाद् यथा लौकिकव्यूहस्य रचनाविशेषविशिष्टस्य सेनासमूहस्य परबलनिवारकत्वं, तथा परिभा-

त्वविनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशखरे निरूपितम् ।

इति परिभाषाप्रकरणम् ।

---

स्यात् इति । कार्यशब्दवादे इदम् । संहितायां विषये इति । इदं कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः । स्थानत इति । इदं "यथासंख्य" ( पा० सू० १-३-१० ) सूत्रे

---

षाबलादन्तरङ्गशास्त्रस्यापीति भावः । *बहिरङ्गापोहनरूपत्वादिति* । बहिरङ्गस्यापोहनं दूरीकरणं रूपं स्वरूपं यस्य तत्त्वादित्यर्थः । *इति परिभाषेति* । ननु "उरण्परः" "यथासंख्यम्" इत्यादिपरिभाषाणामनुक्त्या न्यूनता, तासामपि प्रथमाध्यायस्थत्वात् सन्धिकार्योपयोगित्वाच्च । किञ्च ज्ञापकन्यायसिद्धानां वाचनिकीनाञ्च कासाञ्चित् त्यागः कासाञ्चिदुपादानमित्यर्द्धजरतीयम "इको गुणवृद्धी" इत्यादीनां सन्धिकार्यानुपयोगिनीनाञ्चात्र कथनं व्यर्थमिति चेत् ? न । प्रथमाध्यायस्थानां संज्ञानां प्रायेण सन्धिकार्योपयोगिनीनां प्रायेण कथनस्य प्रक्रान्तत्वेन तथाभूतानां परिभाषाणामपि प्रायेण कथनं कर्त्तव्यमित्यभिप्रायेण तासां कथनस्य कृतत्वात् । "परनित्यान्तरङ्गापवादानाम्" इति तु परत्वादनेन बाध्यत इत्याद्युपपादनायेत्यादिक्रमेण सूत्रभिन्नपरिभाषाकथनस्योपपत्तिः कथञ्चिच्चिन्त्या ।

इति परिभाषाप्रकरणम् ।

---

*इको यणचि* । ननु यण् स्यादितिव्याख्यानेन यणकर्त्तृकं भवनं प्रतीयते ; तन्नोपपद्यते शब्दानां नित्यत्वादत आह—*कार्यशब्देति* । नित्यशब्दवादे तु इग्घटितस्य प्रसङ्गे यण्घटितं साधु इत्यर्थो बोध्यः । ननु पूर्वेणापि संहिताया उक्तत्वाद्दधि आनयेतिप्रयोगानापत्तिरेकपदे तस्यानित्यत्वेन प्रकारेण तस्याः सत्त्वात् "संहितायाम्" इत्यस्य विषयसप्तमीत्वेन विषय इतिपुनरुक्तं चात आह—*कार्यीति* । *विषयभूतेति च* । *यथासंख्यसूत्रे भाष्य इति* । तत्र हि—"किमुदाहरणम् ? इको यणचि दध्यत्र मध्वत्र नैतदस्ति, स्थानेऽन्तरत-

बलवत् । नित्यं कृताकृतप्रसङ्गि, तद्विपरीतमनित्यम् । तत्राक्लृप्ता- भावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् । अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदाय- मध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । तदीयनि- मित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । तस्य बलवत्त्वे बीजमाह— असिद्धमिति । इयञ्च "वाह ऊठ्" (पा० सू० ६-४-१३२) इति सूत्रेण ज्ञापिता । यद्यपि "प्रत्यङ्गवर्त्ती लोको दृश्यते, मनु- ष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः सम्बन्धिनाम्" इतिन्यायमूलकत्वमस्या "अचः परस्मिन्" (पा० सू० १-१-५७) इति भाष्ये उक्तम्, तथाऽपि तेन न्यायेन युगपत्प्राप्तिविषयतैव स्यात् ; ज्ञापकेन तु सर्वविषयता बोध्यते इति "वाह ऊठ्" (पा० सू० ६-४-१३२) इति सूत्रे कैयटे स्पष्टम् । अ- न्यथा वाहः संप्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे "वृद्धिरेचि" (पा० सू० ६-१-८८) इति वृद्धौ 'प्रष्ठौहः' इत्यादिसिद्धावूठ्विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति न 'अग्रजे इन्द्रम्' इत्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रामाण्याद् बलवान् । अकृत (प०) इति । न कृतो विशिष्ट ऊहस्तर्को नि- मित्तविनाशेऽपि कार्यस्थितिरूपः, यथा दण्डविनाशेऽपि घटस्थि- तिः, स यैस्ते इत्यर्थः । तदाह—निमित्तम् इत्यादि । तत्प्रयुक्तं कार्यं जातमपि न कुर्वन्ति नोच्चारयन्तीत्यर्थ इति कैयटादयः । अन्ये तु व्यूहोऽन्तरङ्गशास्त्रं बहिरङ्गापोहनरूपत्वात् । तद् निमि-

---

*असिद्धम्* । *प्रत्यङ्गेति* । अन्तरङ्गेत्यर्थः । *शरीरेति* । तस्य सुखादिसाक्षात्कारायतनत्वात् । *सुहृदामिति* । सुहृत्त्वस्य प्रथमोपस्थितिहेतुत्वात् । *सम्बन्धिनामिति* । अवश्यकर्त्तव्यत्वात् ।

*अकृतव्यूहाः* । *व्यूहोऽन्तरङ्गशास्त्रमिति* । प्रकृतस्य व्यू- हपदस्याचारक्विबन्तप्रकृतिकाच्प्रत्ययान्तत्वाद् यथा लौकिकव्यूहस्य रचनाविशेषविशिष्टस्य सेनासमूहस्य परबलनिवारकत्वं, तथा परिभा-

त्त्विनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम् ।

इति परिभाषाप्रकरणम् ।

---

स्यात् इति । कार्यशब्दवादे इदम् । संहितायां विषये इति । इदं कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः । स्थानन्त इति । इदं "यथासंख्य" ( पा० सू० १-३-१० ) सूत्रे

---

षाबलादन्तरङ्गशास्त्रस्यापीति भावः । *बहिरङ्गापोहनरूपत्वादिति* । बहिरङ्गस्यापोहनं दूरीकरणं रूपं स्वरूपं यस्य तत्त्वादित्यर्थः । *इति परिभाषेति* । ननु "उरण्परः" "यथासंख्यम्" इत्यादिपरिभाषाणामनुक्त्या न्यूनता, तासामपि प्रथमाध्यायस्थत्वात् सन्धिकार्योपयोगित्वाच्च । किञ्च ज्ञापकन्यायसिद्धानां वाचनिकीनाञ्च कासाञ्चित् त्यागः कासाञ्चिदुपादानमित्यर्द्धजरतीयम "इको गुणवृद्धी" इत्यादीनां सन्धिकार्यानुपयोगिनीनाञ्चात्र कथनं व्यर्थमिति चेद् ? न । प्रथमाध्यायस्थानां संज्ञानां प्रायेण सन्धिकार्योपयोगिनीनां प्रायेण कथनस्य प्रक्रान्तत्वेन तथाभूतानां परिभाषाणामपि प्रायेण कथनं कर्त्तव्यमित्यभिप्रायेण तासां कथनस्य कृतत्वात् । "परनित्यान्तरङ्गापवादानाम्" इति तु परत्वादनेन बाध्यत इत्याद्युपपादनायेत्यादिक्रमेण सूत्रभिन्नपरिभाषाकथनस्योपपत्तिः कथञ्चिच्चिन्त्या ।

इति परिभाषाप्रकरणम् ।

---

*इको यणचि* । ननु यण् स्यादितिव्याख्यानेन यणकर्तृकं भवनं प्रतीयते; तन्नोपपद्यते शब्दानां नित्यत्वादत आह—*कार्यशब्देति* । नित्यशब्दवादे तु इग्घटितस्य प्रसङ्गे यण्घटितं साधु इत्यर्थो बोध्यः । ननु पूर्वेणापि संहिताया उक्तत्वाद्दधि आनयेतिप्रयोगानापत्तिरेकपदे तस्यानित्यत्वेन चकारेण तस्याः सत्त्वात् "संहितायाम्" इत्यस्य विषयसप्तमीत्वेन विषय इतिपुनरुक्तं चात आह—*कार्यीति* । *विषयभूतेति च* । *यथासंख्यसूत्रे भाष्य इति* । तत्र हि—"किमुदाहरणम् ? इको यणचि दध्यत्र मध्वत्र नैतदस्ति, स्थानेऽन्तरत-

भाष्ये स्पष्टम् । जातिपक्षे यथासंख्येनापि निर्वाह इति "स्थानेऽन्तरतम" ( पा० सू० १-१-५० ) सूत्रे भाष्ये स्पष्टम् । अनुनासिकस्थानेऽपि निरनुनासिक एव, विधीयमानत्वेन सवर्णाग्राहकत्वात् । गुणाभेदकत्वपक्षोऽपि न विधेयाणिवषये । दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवेति "अणुदित्" (पा० सू० १-१-६९) सूत्रे भाष्ये स्पष्टम् । अत एव सर्वतकारादीनां झलत्वादिसिद्धिः "स्वादयः" ( पा० सू० ८-२-४४ ) इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक् । व्याकरणस्य साध्वनुशासनत्वन्तु शब्दानित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या मृजिप्रसङ्गे मार्जिः साधुर्भवतीत्यादिवृद्धिसञ्ज्ञासूत्रस्थभाष्यप्रामाण्येन यदिह परिनिष्ठितत्वेन ज्ञाप्यं तत्साध्वित्यर्थापत्ति-

---

मेनाप्येतत्सिद्धम्" इत्युक्तम् । *जातिपक्ष इति* । "स्यतासी लृलुटोः" इत्यत्र व्यक्तीनामसाम्येऽपि जात्योः साम्याद्यथासंख्यसूत्रप्रवृत्तेरावश्यकतया इहापि जातिसाम्यात्तेनैव निर्वाह इति भावः । *स्थानेऽन्तरतम इति सूत्रे भाष्य इति* । तत्र हि-"इको यणचि" इत्यादिप्रयोजनान्यभिधाय संख्यातानुदेशेनैतत्सिद्धमित्युक्तम् । नन्वनुनासिकान्तदधिशब्दस्यानुकरणे दधि अत्रेत्यत्र "स्वौजस्" इत्यत्र चानुनासिकेकारौकारयोः स्थानेऽनुनासिकस्य यणः प्रवृत्तये जातिपक्षेऽपि स्थानत आन्तर्यस्यावश्याश्रयणीयतया न यथासंख्येन निर्वाहोऽत आह-*अनुनासिकस्थानेऽपीति* । *न विधेयाणिवषय इति* । "भाव्यमानेन" इत्यस्य सर्वथाप्राप्तस्य निषेधकत्वादिति भावः । मनोरमोक्तां लक्षणां कटाक्षयन्नाह—*दीर्घादीनामिति* । इगादिषु लक्षणया कथञ्चिन्निर्वाहेऽपि झलादिषु लक्ष्यतावच्छेदकनिर्णायकाभावाल्लक्षणयाऽनिर्वाहात्तत्रावश्यापेक्षणीयेन जातिपक्षेण सर्वत्र निर्वाहे सम्भवत्यर्द्धजरतीयत्वमयुक्तमिति सूचयन् फलमुखेनाह—*अत एवेति* । *सिद्धिरिति* । तेन अवात्तामित्यत्र "झलो झलि" इति सलोपः सिद्ध्यति । ननु "इको यणचि" इत्यादीनामिगादेः स्थाने यणादीनां विधायकत्वे व्याकरणस्य साधुत्वप्रमाजनकत्वरूपसाध्वनुशासनत्वमनुपपन्नमत आह—*व्याकरणस्येति* । करणल्युटपरत्वा व्याकरणमत्र सूत्रम् । *साध्वनुशासनत्वन्त्विति* । *इह लक्ष्ये*—प्रवृ-

कल्प्यवाक्येन बोद्ध्यम् । कार्यशब्दवादे तु पूर्वभाष्योन्नीता नादि- तात्पर्यवशात्तत्कल्पनं बोद्ध्यम् । एतेन स्थानप्रमाणोभयान्तरमते ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं स्यादित्यपास्तम् । स्थानत आ-

---

न्त्रियेऽव्यसकलशास्त्रविषये । *परिनिष्ठितेनेति* । परिनिष्ठितत्वप्रयोजकचरमकालिकप्रवृत्तिमता शास्त्रेणेत्यर्थः । एतेन सर्वेषां साधुत्वबोधकतत्तद्वाक्यकल्पकत्वे परस्परं विरोधादनिर्णयापत्तिरिति शङ्काया निरासः । वस्तुतस्तु साधुत्वं द्विविधम्—शास्त्रान्तरप्रवृत्त्युपयोग्यात्मकं, प्रयोगार्हत्वात्मकञ्च । तत्र पूर्वपूर्वप्रवृत्तिमता शास्त्रेणाद्यं तद्बोध्यते ; अन्त्यन्तु चरमप्रवृत्तिमता शास्त्रेणेति बोध्यम् । अथ कार्यशब्दवादे कार्यसम्पादनेन चरितार्थस्य शास्त्रस्य कथं साध्वनुशासनत्वं, परिनिष्ठितेष्वेव साधुत्वव्यवहारेण यणादीनान्तदभावादत आह— *कार्यशब्दवादे त्विति* । पूर्वभाष्येति वृद्धिसंज्ञासूत्रादिस्थभाष्येत्यर्थः । *उन्नीतेति* । अनुमितेत्यर्थः । *तादिति* । यदिह परिनिष्ठितेन ज्ञाप्यं तत्साध्विति वाक्येत्यर्थः । वस्तुतः कार्यशब्दवादेऽपि वर्णोत्पत्तेः कण्ठाद्यवच्छिन्नवाय्वाघातादेरेव सम्भवेन साधूनामसाधूनां च शब्दानां सिद्धत्वात्सूत्रादुत्पत्तेरसम्भवाच्च तत्तच्छास्त्रवैयर्थ्यस्य दुर्वारत्वेन नित्यशब्दवादवत्साधुत्वपर्यन्तं सूत्रतात्पर्यस्य पर्यवसेयत्वेन पक्षयोर्भेदोक्तिरयुक्तैव । न च शब्दोच्चारणानुकूलप्रमाजननद्वारा तेषां शब्दोत्पादकत्वसम्भवेन कार्यवादेन वैयर्थ्यमिति वाच्यम् । नित्यवादेऽपि अभिव्यक्त्यनुकूलप्रमाजननद्वारा चारितार्थ्येन वैयर्थ्योपपादनस्याशक्यत्वात् । शब्दानां नित्यत्वेऽपि तदभिव्यक्तेरनित्यत्वस्य ध्रौव्यादिति बोध्यम् । *एतेनेति* । मुख्यजातिपक्षे "यथासंख्य"सूत्रेण परत्वाद् बाधात् "स्थानेऽन्तरतम" इत्यस्याप्रवर्त्तनेनेत्यर्थः । व्यक्तिपक्षेऽप्याह—*स्थानत इति* । नन्वेकत्र स्थानेऽनेकान्तर्यतोऽनेकप्राप्तौ यत्रानेकेत्यस्य विषयः । किञ्च मात्राद्वयन्यूनकालिकत्वविशिष्टतालुस्थानजन्यत्वेनान्तर्यस्यापि स्थानकृतत्वानतिरेक इति व्यक्तिपक्षे दोषो दुर्वारः । स्थानमात्रकृतान्तर्यं बलवदिति तु नार्थः सम्भवति ; वृक्षाभ्यामित्याद्यावुदात्ताकारस्य स्थाने कदाचिदनुदात्ताकारदीर्घापत्तेरिति चेद्? न । 'स्थानत' इत्यत्र स्थानशब्देऽर्श आद्यचा स्थानिप्रतियोगिकसादृश्यस्यादेशनिष्ठस्य कार्यप्रवृत्त्युपयोगित्वादित्यर्थात् । नन्वेतत् "स्थानेऽन्तरतम" इतिप्रथमान्तपाठ एव सङ्गच्छते । स एव नास्ती-

न्तर्यस्य सर्वतो बलवत्त्वात्, "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः ।

चो विध्यर्थः । ध्वनितश्चेदम् "एओङ्" (मा०सू ३) सूत्रे भाष्ये, तदाह-द्वे वा स्त इति । सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः । अवसाने द्वित्वसिद्धयेऽनचीति प्रसज्यप्रतिषेधः, तदाह-न स्याचि इति । इदं द्वित्वं षाष्ठद्वित्ववद् द्विःप्रयोग

---

स्याशङ्क्याह—*स्थानेऽन्तरतम इत्यादि* ।

*अनचि च* । *चो विध्यर्थ इति* । विधेरपि शाब्दत्वसूचक इत्यर्थः । अत एवाचः परस्यैव यरो द्वित्वं, न यत्र कुत्रेति भावः । तत्र प्रमाणमाह—*ध्वनितश्चेदमिति* । एतेन "अनचि" इतिनिषेधसामर्थ्याद्विध्यनुमानं; तस्य च यत्र कुत्रापि विद्यमानस्य यरो द्वित्वं भवतीत्यर्थः । निषेधस्य तु अचः परस्य यरोऽचि परे द्वित्वं नेत्यर्थ इत्यपास्तम् । *एओङिति सूत्र इति* । तत्र हि-"सन्ध्यक्षरेषु तपरोपदेश इति पक्षे प्लुतादिष्वज्विधिरिति वार्त्तिकं गोत्रात नौ३त्रात अनचि च अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति' इत्युक्तम् । तच्चैतस्याविध्यर्थत्वे न सङ्गच्छेतेति भावः । यत्तु-"एओङ्"सूत्रं यस्मिन्नाह्निक इतिबहुव्रीहिणा "हयवरट्"सूत्रे भाष्ये ध्वनितमिति भैरवमिश्रेणोक्तम् ; तच्चिन्त्यम् । "एओङ्"सूत्रभाष्यादपि तथार्थलाभे क्लिष्टकल्पनाया वैयर्थ्यात् । यदपि "एओङ्"सूत्रभाष्य इत्यपपाठः ; किन्तु "हयवरट्"सूत्रभाष्य इतिपाठः । तत्र तदप्रसङ्गादिति चिदस्थिमालाकृतोक्तं तदतिस्थवीयः; तत्रापि भाष्ये प्रसङ्गस्योक्तत्वात् । *द्वे वा स्त इति* । "यरोऽनुनासिक" इतिसूत्राद्वाग्रहणमनुवर्त्तत इति भावः । ननु शाकल्यमते द्वित्वनिषेधाद्रूपद्वयसिद्धौ वापदानुवृत्तिर्व्यर्थेत्यत आह—*शाकल्येति* । तस्य निषेधप्रकरणे पाठादाह—*द्वित्वाभावेति* । एवञ्च तन्मतेऽभावघटितस्य साधुत्वेऽप्यन्यमते तन्न स्यादतोऽनुवृत्तिरिति भावः ।

अन्ये तु—अनुवृत्तिमपेक्ष्य लाघवादाहेत्यवतरणमाहुः । *प्रसज्येति* । हलीति वक्तव्येऽनचीति गुरुनिर्देशाद्वाक्क् वाग्गिति भाष्योदाहरणाच्चेति भावः । यदि तु पदार्थत्वेनाच्सादृश्यं गृहीत्वाऽवसानेऽपि द्वित्वसिद्धिरित्युच्यते ; तदा मास्त्वसमर्थसमासादिक्लेशकृत्प्रसज्यप्रतिषेध इति परे । *इदमिति* । आद्यमिकं वर्णद्वित्वमि-

एव । 'यरः' इत्यादेरध्याहृतोच्चारणक्रियानिरूपितकर्मषष्ठीत्व- स्यौचित्यात् । इति धस्येकार इति । न तु द्वित्वे पूर्वस्थाने जश्त्व- निष्पन्नदस्यापि "लक्ष्ये लक्षणम्" इति न्यायात् । विकारान्यत्वेन न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम् ।

स्थान्यादेशयोर्भेदात् "स्वं रूपम्" (पा०सू०१-१-६८)इत्यु- क्तेश्च "तत्स्थानापन्नस्तद्धर्मं लभते, यथा गुरोः स्थाने शिष्यो या- ज्यकुलानि गत्वाऽग्रासनादीनि लभते" इति लोकन्यायेन स्थानि-

---

स्यर्थः । *षष्ठी त्वौचित्यादिति* । "उपपदविभक्तेः" इतिन्यायादिति भावः । *विकारान्यत्वेनेति* । विकारप्रयुक्तभेदनेत्यर्थः । *न लक्ष्यभेद इति* । तेन उदवोढामिति सिद्ध्यतीति विस्तरेणान्यतोऽवसेयः ।

*स्थानिवदादेशः* । *भेदादिति* । स्वरूपतो भेदादित्यर्थः । अस्य च न स्यादित्यनेनान्वयः । तत्स्थानापन्न इति लोकन्यायेन सिद्धि- माशङ्क्याह—*स्वं रूपमित्युक्तेश्चेति* । चो हेतोः प्रसिद्धताद्योतकः । *लोकन्यायेनेति* । अस्यापीति शेष इतिटीकाऽनुसारिणः ।

अन्ये तु—स्थान्यादेशयोर्भेदादित्यपि लोकन्यायेनासिद्धावेव हेतुः, तस्य लौकिकस्थान्यादेशभावापेक्षया शास्त्रीयस्थान्यादेशभावस्य भेदादित्यर्थः । लोके हि यो यत्कार्यार्थं यस्य स्थाने नियुज्यते, स तस्य त- त्कार्यमेव कृत्वा निवर्त्तते न तु तदितरदपि । न हि याजनार्थं नियुक्तः शिष्यो गुरुकर्त्तव्यमुच्छिष्टदानादिसकलमपि कर्त्तुमीष्टे । शास्त्रे तु अर्थमवबोध- यितुमनुशासनेनानुज्ञप्तोऽप्यादेशः स्थानिकर्त्तव्यं निखिलमपि कार्य- जातं निष्पादयितुमिष्यत इति वैषम्यादन्तरेण वचनं न तत्सम्भवती- ति "स्वं रूपम्" इत्युक्तेरिति हेत्वन्तरम् । चः—समुच्चये । यद्यपि भाष्ये लोकन्यायमज्ञात्वा योगानारम्भपूर्वपक्षस्य स्थान्यादेशपृथक्त्वादिति समाधानोक्तेरिहापि तथैव व्याख्यातुमुचितम्, तथाऽपि तस्य हेतोरति प्रसिद्धत्वात्तथाव्याख्यानापेक्षया लोकन्यायज्ञानपूर्वकपूर्वपक्षसमाधि- हेतुत्वेन व्याख्यानस्यैवोचितत्वमित्याहुः ।

अथ स्वं रूपशास्त्रस्य लोकन्यायनिवर्त्तकत्वे प्रकृतसूत्रस्थभाष्यस- न्दर्भविरोधः । तत्र हि पूर्वं सामान्यतः सूत्रानारम्भपूर्वपक्षे स्थान्यादेश- पृथक्त्वादिति समाहितम् । ततो लोकन्यायेन सिद्धिमाशङ्क्य दृष्टान्त- स्यापि कश्चित्पुरुषारम्भो निवर्त्तको भवति, अस्ति चेह कश्चित् पुरुषा-

कार्यमादेशे न स्यादतः स्थानिवत्सूत्रम् । न तु स्थान्यल इति । प्रत्यासत्तिन्यायलभ्यमिदम् ।

---

रम्भो निवर्त्तकः अस्तीत्याह कः स्वरूपविधिर्नामेति समाहितम् । ततो "युष्मदस्मदोरनादेशे" इत्यनादेशग्रहणेन "अदो जग्धिर्ल्यप्ति" इतिल्यग्रहणेन च ज्ञापकेनेष्टं संसाध्यैतत्सूत्रं प्रत्याख्यातम् । तच्चैवमनुपपन्नं स्यात्, युष्मभ्यमित्यत्र भ्यस्वृत्तिविभक्तित्वस्य शब्दशास्त्रीयसंज्ञात्वेन "स्वंरूप"सूत्राप्राप्त्या लोकन्यायेन सौलभ्यादनादेशग्रहणवैयर्थ्यासम्भवादिति चेद् ? न । "स्वं रूपम्" इतिवद् "विभक्तिश्च" इत्येतत्पुरुषारम्भेण सुप्तिङ्भ्यामन्यत्र प्राप्तस्य न्यायेन विभक्तित्वस्य निवर्त्तयितुं शक्यत्वात् । न च तत्र भ्यस्गतं सुप्त्वमेव न्यायेनायायादितिवाच्यम् । तत्रापि "आदिरन्त्येन" इत्येतत्पुरुषारम्भस्य जागरूकत्वात् ।

अत्रेदमवधेयम्—दृष्टान्तस्यापि कश्चित्पुरुषारम्भो निवर्त्तको भवतीत्यादिभाष्यं लोकन्यायेन सर्वत्रासिद्धिमेव बोधयति । स्वरूपाश्रितेषु इन्तेरात्मनेपदादिषु "स्वंरूप" सूत्रस्यैव सुप्त्वाद्याश्रितेषु रामायेत्यादौ "सुपि च" इतिदीर्घादिष्वपि "आदिरन्त्येन" इत्यादिपुरुषारम्भतौल्यात् स्वरूपविधिर्नामेत्युपलक्षणं पुरुषारम्भान्तरस्यापीति । न च "स्वं रूप"सूत्रस्य प्रत्याख्यानात् स्वरूपविधिर्नामेत्ययुक्तमिति वाच्यम् । अस्यारम्भपक्षाभिप्रायकत्वात् । एतदुक्त्या गौरवग्रस्तप्रत्याख्यानापेक्षयाऽऽरम्भपक्षस्यौचित्यसूचनाच्च । प्रत्याख्यानपक्षे तदुपायभूतखण्डशक्त्याश्रयणस्य फलैक्याय दृष्टान्तनिवर्त्तकत्वकल्पनाच्च । अथ भाष्योक्तः प्रत्याख्यानपक्ष एवाश्रीयतामलं सूत्रारम्भेणेति चेद् ? मैवम् । 'स्थानिवदादेश' इत्यंशस्योत्तरार्थमावश्यकत्वेन तस्यैव योगविभागमात्रेणोपपत्तौ सत्यामर्थापत्तिकल्पकवचनकल्पनाया अयुक्तत्वात् । एवंस्थिते 'अनल्विधौ' इत्ययमप्यंशः स्पष्टप्रतिपत्तये क्रियते; उत्तरसूत्रे द्वितीयविधिग्रहणानुवृत्त्यर्थश्च । तत्प्रयोजनन्तु तत्रैव वक्ष्यते । एतदेव च सकलमभिसन्धाय भगवता प्रत्याख्यायाप्यारभ्यमाणेऽप्यस्मिन्योग इत्युक्तमिति कौस्तुभे स्पष्टम् । ननु रामायेत्यत्रापि यकारवृत्तियञ्त्वनिमित्तकेऽपि दीर्घे कर्तव्ये स्थानिवत्त्वार्थं स्थान्यालित्यावश्यकं तत्कथं लभ्यमित्यत आह—*प्रत्यासत्तीति* । यद्यपि सूत्रपाठापेक्षाऽऽदेशेनैव प्रत्यासत्तिस्तथाऽपि 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यत्रेव शाब्दक्रमादार्थक्रमस्य बलीयस्त्वेनादेशः स्थानिवदित्यनुसंहितार्थक्रमे स्थानिन एव प्रत्यासत्तेर्न दोषः । आर्थक्रमे बलवत्त्वन्तु शाब्दबोधाव्यवहितप्राक्का-

लिकत्वाद् बोध्यम् । कष्टायेत्यादिनिर्देशाश्चेह लिङ्गम् । अथानल्विधा-वितिप्रसज्यप्रतिषेधः पर्युदासो वा । आद्येऽसमर्थसमासाश्रयणादि-क्लेशः । अन्त्ये स्थानिसम्बन्ध्यल्वृत्तिधर्मभिन्नधर्माश्रयविधौ स्थानि-वद्भावे व्यूढोरस्केनेत्यादौ स्थान्यल्वृत्त्यदृत्त्वधर्मभिन्नत्वादिधर्माश्रये णत्वादिविधौ स्थानिवत्त्वापत्तिः । 'अल्विधौ प्रतिषेध' इतिभाष्यासङ्ग-तिश्चेति चेद्? न । अल्शब्दस्य विधिशब्देन समासोत्तरं नञ्समासे स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रयविधिभिन्नविधौ स्थानिवद्भाव इत्यर्थात्प-र्युदासे क्षतिविरहात् । 'प्रतिषेध' इतिभाष्यं न तु स्थान्यलाश्रयविधा-वितिमूलं च फलितार्थकथनपरं बोध्यम् । अत एव शास्त्रीयकार्यं प्रत्ययं स्थानिवद्भाव इत्यपि सङ्गच्छते ।

ननु स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रयविधिभिन्नविधावित्यर्थे रामाये-त्यादौ "सुपि च" इतिदीर्घेऽपि कर्त्तव्ये स्थानिवत्त्वानुपपत्तिः सुप्त्वस्य स्थान्यल्धर्मत्वादिति चेद्? न । कष्टायेतिनिर्देशेन स्थान्यल्धर्मस्यालमा-त्रवृत्तेरेव ग्रहणात् । न चैवमपि प्रदीव्येत्यादौ स्थानिवत्त्वेन वलादित्वनि-बन्धन इड् दुर्वारः, अल्मात्रवृत्तेः स्थान्यल्धर्मस्य वत्त्वस्येड्विधौ प्राधा-न्येनानाश्रयणादिति वाच्यम्? स्थान्यल्वृत्त्यल्मात्रवृत्तिधर्मघटितधर्मा-श्रयविधौ निषेधस्वीकारात् । एतदेव च आश्रयणं च यथाकथञ्चित्, न तु प्राधान्येनैवेत्याग्रह इत्यनेन मनोरमायां सूचितम् ।

अथ किन्तावदल्मात्रवृत्तित्वं—यदि अल्वृत्तित्वे सत्यलितरावृत्ति-त्वं तत्, तदा रामायेत्यादौ सुप्त्वेऽपि तत्त्वं दुर्वारम् । व्यासज्यवृ-त्तिधर्मावच्छिन्नानुयोगिताकप्रत्येकवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेद-स्यास्वीकारेणालितरत्वेन भ्यामादेरग्रहणादिति चेद्? न । अल्त्वप्रति-योगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियो-गित्वस्यैव तत्त्वेन सुप्त्वस्य भ्यास्त्वप्रतियोगिकपर्याप्त्यनुयोगिताव-च्छेदकसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वेनादोषात् । न चैकारादिवृत्त्यल्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्वाव-च्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्यापि सुप्त्वे सत्त्वेनापत्तिस्तदव-स्थैवेति वाच्यम् । अल्त्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकरूपाव-च्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वाभाववत्त्वस्यैव तत्त्वेन सुप्त्वस्या-ल्त्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकरूपावच्छिन्नानुयोगिताकप-र्याप्तिप्रतियोगित्वात्, अल्मात्रवृत्तित्वं विहायाल्त्वव्याप्यत्वनिवेशेनादो-षाच्च ।

अथ बभूविथेत्यत्रेडर्थं स्थानिवत्त्वमिष्यते; तच्च दुर्लभम् । इड्वि-

धेः स्थान्यलवृत्त्यलत्वव्याप्यवलत्वघटितवलादित्वाश्रयत्वात् । न च स्थान्यलवृत्तेरादेशालवृत्तेरलत्वव्याप्यस्य धर्मस्य विवक्षितत्वेन प्रकृते वलत्वस्यादेशालवृत्तित्वेन न दोष इति वाच्यम् । बभूवतुरित्यादावपि वलादित्वातिदेशापत्तेः । वलत्वस्यादेशावयवतकारालवृत्तित्वात् । न चादेशाद्यवयवालवृत्तेर्धर्मस्य ग्रहणेन न दोष इति वाच्यम् । अस्तेः क्विपि भूभावे सौ भूरित्यत्र किमः सौ क इत्यत्र च स्थानिवृत्तिहलन्तत्वातिदेशेन हल्ङ्यादिलोपापत्तेः । हल्त्वस्यादेशाद्यवयवालवृत्तित्वेन 'अनल्विधौ' इतिनिषेधाप्रवृत्तेरिति चेद् ? अत्र केचित्—स्थानिघटकाल्विशिष्टालत्वव्याप्यधर्मघटितधर्माश्रयविधौ नेत्यर्थः । वैशिष्ट्यं चालत्वव्याप्यधर्मे स्ववृत्तित्व स्वविशिष्टालवृत्तित्वाभ्यां स्ववैशिष्ट्यशालि स्वसजातीयत्व स्वघटितनिष्ठस्थानितानिरूपितादेशताश्रयावयवत्वाभ्याम् । साजात्यञ्च-प्रथमत्वद्वितीयत्वादिना । तथा च भूरित्यादौ स्वं सकारस्तद्घटितनिष्ठस्थानितानिरूपितादेशताश्रयावयवत्वस्य भकारे सत्त्वेऽपि द्वितीयत्वधर्मेण सकारसजातीयत्वाभावेन स्वविशिष्टालपदेन भकारस्याग्रहणेन हल्त्वस्य तादृशालवृत्तित्वमस्त्येवेति न दोषः ।

एवं बभूवतुरित्यत्र वलत्वस्य स्थानिघटकाल्विशिष्टत्वेन न दोषः । तत्राप्यतुसस्तकारस्य प्रथमत्वरूपधर्मेण स्थानिभूततस्घटकतकाररूपालसजातीयत्वाभावात् । बभूविथेत्यत्र तु स्थानिभूतसिब्घटकसकारवैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन थकारे सत्त्वेन वलत्वस्य तद्वृत्तित्वेन तद्घटितधर्माश्रयविधावपि भवत्येव स्थानिवत्त्वम् । स्थान्यादेशौ च श्रौतौ ग्राह्यौ । तेन 'द्यौः' 'पन्था' इत्यादौ हल्त्वस्यानुमानिकस्थान्यादेशभावमाश्रित्य स्थानिभूतदिव्शब्दघटकदकाररूपाल्विशिष्टे द्यौशब्दघटकदकारे पथिन्शब्दघटकपकारविशिष्टपन्थाशब्दघटकपकारे च सत्त्वेऽपि न स्थानिवत्त्वेन हलन्तत्वस्यातिदेश इत्याहुः, तदसत् । यूष्णेत्यादौ स्थानिवत्त्वेनादन्तत्वमादायेनादेशापत्तेस्तत्रात्वस्य स्थानिभूतयूषशब्दघटकाकाररूपालविशिष्टत्वाभावात् स्थानिघटकालवैशिष्ट्यस्य यूषन्घटकषकारोत्तराकारे सत्त्वात् ।

अन्ये तु—स्थानिघटकालवृत्त्यलत्वव्याप्यधर्मघटितो योऽतिदिदिक्षितो धर्मस्तद्धर्माश्रयविधिभिन्नविधावित्यर्थः । बभूविथेत्यत्र वलादित्वस्य सिद्धत्वेन सिद्धेरिच्छां प्रति प्रतिबन्धकत्वेनातिदेष्टुमनिष्टत्वान्न दोषः । बभूवतुरित्यादौ वलादित्वादेस्तु अतिदिदिक्षितत्वान्न स्थानिवत्त्वम् । अथवा स्थानिघटकालवृत्त्यलत्वव्याप्यधर्मघटितो य आदेशावृत्तिर्धर्मस्तद्धर्माश्रयविधिभिन्नविधावित्यर्थः । बभूविथेत्यत्र वलादित्वस्यादेश-

आदेशस्य स्थानिभूतो योऽल् तत्स्थानिसम्बन्धी च यो-

---

वृत्तत्वान्न दोष इत्याहुः । परन्त्वेवं निवेशे लक्ष्यासिद्ध्यभावेऽपि अल् चेह स्थान्यवयव एव गृह्यत इतिमनोरमाग्रन्थस्थान्यालित्युक्तेर्बभूविवेत्यत्र वलादिलक्षणेट्सिद्धिरिति वक्ष्यमाणप्रकृतग्रन्थयोरसङ्गतिर्दुष्परिहरैव । रामायेत्यादौ यवादित्वस्यानतिदिदिक्षितत्वेनै आदेशवृत्तित्वेनैव वा तन्निमित्तकेऽपि दीर्घादौ कर्त्तव्ये स्थानिवत्त्वस्य सौलभ्यादिति बोध्यम् ।

स्यादेतत्—भवतीत्यादौ लकारवृत्त्यार्द्धधातुकत्वस्य स्थानिवत्त्वेन तिप्यतिदेशादिट् कस्मान्नेति चेत् ? मैवम् । "आर्द्धधातुकं शेष" इत्यत्र शेषपदलब्धातिङ्पदेनाजहत्स्वार्थलक्षणया तिङतिङ्स्थान्युभयभिन्नबोधनेन लस्यार्द्धधातुकसंज्ञाया अप्राप्त्याऽऽर्द्धधातुकत्वस्य स्थानिन्यवृत्तेरतिदेष्टुमशक्यत्वादिति केचित् ।

अन्ये तु–'रुदादिभ्यः सार्वधातुकस्य' इड्विधिसामर्थ्याल्लकारवृत्त्यार्द्धधातुकत्वं नादेशानामिति ज्ञापनेन न भवतीत्यादाविट्प्रसक्तिः । न च रुदादिभ्यश्चेत्सार्वधातुकस्यैवेति विपरीतनियमार्थमेव तत्कुतो न स्यादिति वाच्यम् । एवंसति "रुदविद" इतिसूत्रेण रुद्धातोः परयोः क्त्वासनोः कित्त्वविधानवैयर्थ्यप्रसङ्गात् । त्वद्रीत्या रुद्धातोः क्त्वासनोरिडभावेन "न क्त्वासेट्" इति निषेधाप्रवृत्त्या क्त्वाप्रत्यय औपदेशिककित्त्वस्य सुस्थत्वात्, "हलन्ताच्च" इतिसूत्रेण झलादिसनः कित्त्वस्य सिद्धत्वाच्चेत्याहुः ।

इतरे तु–"लिट् च" इति सूत्रे "लङः शाकटायनस्य" इतिसूत्रादेवकारानुवृत्तिसामर्थ्याल्लकारवृत्त्यार्द्धधातुकत्वं नादेशानामिति कल्प्यते । अन्यथा स्थानिवत्त्वेनार्द्धधातुकत्वादेवेडादिषु सिद्धेषु "लिट् च" इत्येतदारम्भसामर्थ्यादेव सार्वधातुकसंज्ञाबाधे सिद्धे एवकारानुवृत्तिवैयर्थ्यं स्पष्टमेवेति वदन्ति ।

नन्वेवमपि एतेर्लुङि झौ जुसि "इणो गा लुङि" इतिगादेशेऽडागमे 'अगुः' इत्यत्र अ गा उस् इतिस्थितौ स्थानिवत्त्वेनेण्त्वात्परत्वान्नित्यत्वात्प्रतिपदोक्तत्वाच्च "इणो यण्" इति यणापत्तिः, इण्त्वस्यालत्वव्याप्यधर्मघटितत्वाभावादिति चेत्? न । "इणो यण्" इत्यत्र "अचि श्नु" इत्यतो 'य्वोः' इत्यनुवर्त्य इण्धात्ववयवेकारस्यैव यण्विधिलाभेनेण्त्वानयनेऽपि यणोऽप्राप्तेः । नन्वनयेऽप्यत्रैतदेव समाधानमवगन्तव्यम् । नन्वेवं 'धिन्वन्ति' इत्यत्र स्थानिवत्त्वेन यणार्द्धधातुकत्वादिडागमापत्तिरत आह—*आदेशस्य स्थानिभूतो योऽलिति* । आदेशस्येत्यस्य विधावित्यनेनान्वयः । स्थानिभूतो योऽलत्तद्वृत्तिधर्माश्रये आदेशस्य विधौ कर्त्तव्येने-

त्यर्थः। तथा च 'धिन्वन्ति' इत्यत्रेड्विधौ स्थानिभूताल्वृत्त्याद्यधातुकत्वाश्रयत्वेन न स्थानिवत्त्वप्रसक्तिरिति भावः। नन्वेतदर्थस्वीकारे 'रामाय' इत्यादावपि स्थानिवत्त्वं न स्यात्; अनुबन्धविनिर्मुक्तस्यैकारस्यैव स्थानितया सुप्त्वस्य स्थानिभूताल्वृत्तित्वादिति चेद्? न। स्थानिभूतो योऽल्तद्वृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्माश्रयविधौ नेत्यर्थेन रामायेत्यत्र स्थानषष्ठीप्रकृत्यर्थतावच्छेदकस्यैव स्थानितावच्छेदकताया भाष्यतो लाभान् ङेत्वस्यैव स्थानितावच्छेदकत्वेन तस्याल्त्वव्याप्यत्वाभावात्। न चैवमपि राम ए अत्रेत्यत्र वाक्यसंस्कारपक्षे स्थानिभूतो योऽल् एकारस्तद्वृत्तिर्योऽल्त्वव्याप्यो धर्म एत्त्वं तद्धर्मावच्छिन्ना या "एचोऽयव" इतिसूत्रीया स्थानिता तत्सामानाधिकरण्यस्य सुप्त्वे सत्त्वेन निषेधो दुर्वार इति वाच्यम्। स्थानिभूताल्वृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतधर्माश्रयविधौ नेत्यर्थाभ्युपगमेन सुप्त्वस्य तादृशारोपप्रकारीभूतत्वाभावेनादोषात्। नन्वेतन्मात्रार्थस्वीकारे 'प्रदीव्य' इत्यत्र स्थानिवत्त्वेन वलादिलक्षण इड्दुर्वार इत्यतः प्राचीनाभ्युपगतमप्यर्थमाह—*तत्स्थानिसम्बन्धी च योऽलिति*। अस्य च स्थानिघटकाल्वृत्त्यल्त्वव्याप्यधर्मघटितातिदिदिक्षितधर्माश्रयविधौ नेत्यत्र निरुक्तदिशा पर्यवसानं बोध्यम्। नन्वनल्विधावित्यस्यार्थद्वयस्वीकारे सकृदुच्चरितन्यायविरोध इतिचेद्? न। स्वघटकत्वसम्बन्धेन स्थानिविशिष्टो योऽलन्द्विशिष्टविधौ नेत्यर्थात्। वैशिष्ट्यञ्च—स्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताकत्व स्ववृत्त्यल्त्वव्याप्यधर्मघटितातिदिदिक्षितधर्मावच्छिन्नोद्देश्यताकत्वान्यतरसम्बन्धेन स्थानिभूतेऽलि स्थानिघटकत्वं च व्यपदेशिवद्भावाद् बोध्यम।

यत्तु—प्रसज्यप्रतिषेधेऽसमर्थसमासादिक्लेशादल्वैशिष्ट्यं विधौ स्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताकविधिभिन्नत्व स्ववृत्त्यल्त्वव्याप्यधर्मघटितातिदिदिक्षितधर्मावच्छिन्नोद्देश्यताकविधिभिन्नत्वान्यतरसम्बन्धेन नञ्पदं तात्पर्यग्राहकमित्याहुः, तदसत्। तथासत्यन्यतरसम्बन्धेनाल्वैशिष्ट्यस्य धिन्वन्तीत्यत्र प्रदीव्येत्यत्र चेडागमविधौ सत्त्वेन तत्र कर्तव्ये स्थानिवत्त्वापत्तेः। तस्मात्तादृशक्लेशपरिहाराय निरुक्तोभयसम्बन्धेन वैशिष्ट्यं स्वीकार्यं सोढव्यो वैतन्मतेऽसौ क्लेशसम्भारः। स्यादेतत्—एवमर्थस्वीकारो "हल्ङ्याब्" इति सूत्रेऽतिखट्वादौ सुलोपवारणाय दीर्घ-

ग्रहणं कुर्वतः पाणिनेः, "स्थानिवत्" सूत्रे अतिखट्वायेत्यत्र स्थानिव-त्वाभावाय "ङ्याब्ग्रहणेऽदीर्घ" इति वदतो वार्त्तिककृतः, तदुभयप्रत्या-ख्यानाय ङी ई आ आबिति प्रश्लेषयतः पतञ्जलेश्च विरुद्धः; "गोस्त्रियोः" इत्यत्राच्परिभाषोपस्थितेरल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपिता-देशतावद्धर्मिकारोपप्रकारीभूतङीत्वाप्त्वधर्मावच्छिन्नोद्देश्यताके सुलो-पादौ कर्त्तव्ये स्थानिवत्त्वाप्राप्तेर्निरुक्तयत्नत्रयस्य निष्फलत्वात् । किञ्च "कृन्मेजन्तः" इति सूत्रे 'आधये' 'चिकीर्षवे' 'कुम्भकारेभ्य'इत्यादौ गुणैत्वयोः स्थानिवत्त्वेन कृत्त्वात्प्राप्ताव्ययसंज्ञावारणार्थकाद् "अनन्यप्र-कृतेः" इतिवार्त्तिकात् तत्प्रत्याख्यायकात्सन्निपातपरिभाषाऽऽश्रयणपर-भाष्याच्च विरुद्धः,"घेर्ङिति" इत्यत्र "बहुवचने झलि" इत्यत्र च "अलोऽ-न्त्यस्य" इत्यस्योपस्थितेस्तत्तच्छास्त्रीयस्थानितयोरल्त्वव्याप्याल्त्वेना-वच्छिन्नत्वेन स्थानिवत्त्वाप्राप्तेः । यत्तु-'आधय' इत्यादावव्ययसंज्ञायां सत्यामपि "अव्ययादाप्" इतिसूत्रे विहितपञ्चम्याश्रयणादव्ययेभ्य आ-धे इत्यादिभ्यः सुपोऽविहितत्वाल्लुकोऽप्राप्तेरुक्तभाष्यवार्त्तिकयोरेकदेशयु-क्तित्वेनायं विरोधोऽकिञ्चित्कर इति, तन्न । विहितविशेषणेन सुप् यस्मा-द्विहितस्तदादिरूपादव्ययात्परस्य सुपो लुगित्यर्थस्यैव पर्यवसानेन सुब् यस्माद्विहितस्तदादित्वस्यैकदेशविकृतन्यायेनाधे इत्यादौ सत्त्वेनाव्ययत्वे प्राप्तसुब्लुग्वारणाय तद्भाष्यवार्त्तिकयोः प्रवृत्तेरेकदेशयुक्तित्वाभावात् ।

किञ्च अग्रहीदित्यत्र "सलोपसाधकाद्विशिष्टं ह्येषोऽनलमाश्रयते इटन्नाम" इतिभाष्याद्विरुद्धः, "ग्रहोऽलिटि" इत्यत्र "अचश्च" इतिपरि-भाषोपस्थितेरिट्त्वानयने स्थानिवत्त्वाप्राप्तेः । किञ्चैवं चक्रे इत्यादौ लि-ट्त्वातिदेशेनेष्टसंयोगादिति कित्त्वं न स्यात्, "तिप्तस्झि" इतिशास्त्री-यायाः स्थानिताया अल्त्वव्याप्येन लत्वेनावच्छेदात् । न चासंयोगादि-त्यत्र लिट्पदस्य लिडादेशे लक्षणया तस्यैव कित्त्वविधानान्नात्र स्था-निवत्त्वोपयोग इति वाच्यम् ? लक्षणायां मानाभावाद्गौरवाच्च ।

यत्तु भट्टाः-लकारोत्तराकारस्योच्चारणार्थत्वेऽप्यखण्डस्य लत्वस्यै-व स्थानितावच्छेदकत्वान्न "अनल्विधौ" इत्यस्य तत्र प्रसर इत्याहुः, तच्चिन्त्यम् । तादृशस्याखण्डस्य लत्वस्य लिडादिषु नवस्वसत्त्वेन तत्स्थाने तिङाद्यनुपपत्तेः । तस्य लपदस्य दशलकारान्यतमत्वाव-च्छिन्ने शक्तिस्वीकारेणापि न निर्वाहः, तावताऽप्यल्त्वव्याप्यत्वानपा-यात्, तद्रूपावच्छिन्ने शक्तिस्वीकारे लुनातीत्यादौ तिबादिवारणाय "धातोः" इत्यधिकृत्य विहितपञ्चम्याश्रयणपरभाष्यविरोधापत्तेश्च, तादृशशक्तिग्राहकानुपलम्भाच्च । अपि चैवं ज्ञाने इत्यत्र श्यादेशे स्थानि-

घत्वेन स्वादित्वाद्भसंज्ञया प्राप्तालोपवारणार्थारब्ध "औङः श्याम्" इति वार्त्तिकवैयर्थ्यं "नपुंसकाच्च" इतिशास्त्रीयस्थानितायाः अलत्वव्याप्यौङ्त्वेनावच्छेदात्।

किञ्चैवं राम इत्यत्र रुत्वे कृते रेफे सुप्त्वाभावेन कार्यकालपक्षे पदत्वाभावे विसर्गानुपपत्तिः, "ससजुषो:" इति शास्त्रीयस्थानितायाः सत्वेनावच्छेदात्। किञ्चैवं 'वैयाकरण' इत्यत्रेकारवृत्तिपदान्तत्वमादायैजागमोऽपि न स्यात्, यण्शास्त्रीयस्थानितायाः इक्त्वेनावच्छेदादिति चेत्? नैवम्। आरोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधावेव निषेधस्वीकारेण "हल्ङ्याब्" इत्यादिसूत्रीयायाः "कृन्मेजन्त" इतिसूत्रीयाया "इट ईटि" इतिसूत्रीयायाश्चोद्देश्यताया ङीत्वाप्त्वकृत्त्वेट्त्वधर्मैः परम्परयाऽवच्छेदाद् "असंयोगात्" इतिसूत्रेऽपि लिटो विशेषणत्वाङ्गीकारेण तदीयोद्देश्यताया लिट्त्वेन परम्परयाऽवच्छेदाद् "यचि भम्" इति शास्त्रीयायाः "सुप्तिङन्तम्" इति शास्त्रीयायाश्चोद्देश्यतायाः स्वादित्वसुप्त्वाभ्यां परम्परयाऽवच्छेदाद् "न ध्याभ्याम्" इत्यत्रापि फलबलेन यत्ववत्वयोरेव साक्षादुद्देश्यतावच्छेदकत्वकल्पनेन पदान्तत्वधर्मेणोद्देश्यतायाः परम्परयाऽवच्छेदाच्च दोषविरहात्। न च साक्षात्पदनिवेशे आरेत्याद्यर्थं स्वीकरिष्यमाणेन ऋधातोर्ङित्व इत्यादिना वक्ष्यमाणेनोपायेन विरोधः "हलादिश्शेष" इति सूत्रीयाया उद्देश्यताया अभ्यासत्वेन परम्परयाऽवच्छिन्नत्वेन स्थानिवत्त्वेनैवाभ्यासत्वसौलभ्यादिति वाच्यम्? उपायस्योपायान्तरादूषकत्वात्। आटेत्यादौ टकारलोपनिर्वाहाय 'अहलादिश्शेष' इतिन्यासेऽभ्यासोऽहल्भवतीत्याद्यर्थेऽभ्यासत्वेन साक्षादवच्छिन्नाया उद्देश्यतायाः सत्त्वेन स्थानिवत्त्वाप्राप्तेरुपायान्तरस्यानुसरणस्यावश्यकत्वाच्च। न च साक्षात्पदनिवेशे स्थानितायामलत्वव्याप्यधर्मावच्छिन्नत्वनिवेशोऽनुपयुक्तः; रामायेत्यादावेकाररूपाल्निष्ठस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतसुप्त्वेन "सुपि च" इतिशास्त्रोद्देश्यतायाः परम्परयाऽवच्छिन्नत्वेनैव स्थानिवत्त्वसौलभ्यादिति वाच्यम्? रमायामित्यादाविकाररूपाल्निष्ठस्थानितानिरूपितादेशताश्रयामुधर्मिकारोपप्रकारीभूतङित्त्वधर्मेण साक्षादवच्छिन्नोद्देश्यताकेऽपि याटि कर्त्तव्ये स्थानिवत्त्वार्थं तन्निवेशावश्यकत्वात्। न च 'आप' इति पञ्चमीबलात् "तस्मादिति" इतिपरिभाषयोत्तरस्योपस्थित्या ङितस्तद्विशेषणतया भानस्वीकारेण न तच्छास्त्रीयोद्देश्यताङित्त्वेन साक्षादवच्छिन्नेति वाच्यम्? अदग्धदहनन्यायेन ङितो धर्मिणः सत्त्वे परत्वरूपधर्ममात्रोपस्थिते-

त्तस्य विशेषणताया एव सम्भवात् । न चानुबन्धकार्ये "अनल्विधौ" इतिनिषेधो न स्यादिति वाच्यम् ? अनुबन्धरूपाल्वृत्त्यल्त्वव्याप्यधर्माश्रितत्वप्रयोज्यनिषेधो नेति तदर्थेनात्र तद्प्रसरात् । न चात्र साक्षात्पदनिवेशेऽपि लोम्नी अत्रेत्यत्र "ईदूदेद्" इति प्रगृह्यत्वाय द्विवचनत्वातिदेशो न स्यात्; प्रगृह्यसंज्ञाशास्त्रीयोद्देश्यताया द्विवचनत्वेन साक्षादेवावच्छिन्नत्वादिति वाच्यम् ? 'औङित्यौकारविभक्तेः संज्ञा' इत्यस्य प्रथमाद्वितीयाद्विवचनयोः संज्ञेत्यर्थकत्वेन औङ्त्वस्य युवामित्यादावम्यपि सत्त्वेनाल्त्वव्याप्यत्वाभावेन "नपुंसकाच्च" इतिशास्त्रीयस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वाभावेनादोषात् । यथाश्रुतार्थकत्वे हि अशब्दात्तापि तत आचारक्विबन्ताल्लिटि णलि आवादेशे आ औ इति स्थिते "औङ आप" इत्यनेन श्यादेशापत्तिः । न चैवमतियुष्मच्छब्दादौ विभक्तौ परत्वात् "ङेप्रथमयोः" इत्यमादेशे "नपुंसकाच्च" इतिश्यादेशापत्तिरिति वाच्यम् ? सकृद्गत्याश्रयणाद् अम् मान्त एवावशिष्यत इति व्याख्यानाच्च ।

अथवा "स्वौजसमौट्" इति सूत्रे उपदेशे आ ओ इति छेदेन औङ्त्वस्य तद्वृत्तित्वेन नाल्त्वव्याप्यत्वम् । अथवा 'औङित्यौकारविभक्तेः संज्ञा' इत्यनेनौकारविभक्तावौङ्त्वारोपबोधनेनौङ्त्वस्यौङ्शब्देऽपि सत्त्वेन नाल्त्वव्याप्यत्वम् । अन्यत्रोक्तदिशा "संज्ञाविधौ" इति परिभाषाया अनावश्यकत्वमते ईदाद्यन्तं यद् द्विवचनं तदन्तस्य प्रगृह्यसंज्ञेत्यर्थे "ईदूदेद्" इतिशास्त्रीयोद्देश्यताया द्विवचनत्वेन साक्षादवच्छिन्नत्वमपि नेत्यपि बोध्यम् । न चैवमपि "अतो लोपः" इतिसूत्रस्थभाष्यासङ्गतिर्दुर्वारैव । तत्र हि "ण्यल्लोपौ" इतिवार्त्तिकव्याख्याऽवसरे णिलोपस्यावकाशप्रदर्शनमततक्षदित्यत्र परत्वादियङ्चपि स्थानिवत्त्वेन णित्वात्कृतम् । एवं "णौ चङि" इत्यत्रत्यभाष्यासङ्गतिः । तत्र हि "अवीवददित्यत्र ण्यन्ताण्णौ अग्लोपित्वादुपधाह्रस्वो न स्यादित्याशङ्क्य, वृद्धौ कृतायां णिलोपान्नाग्लोपित्वम्" इति समाहितम् । तदुभयं न युज्येत, लोपस्य णित्वेन साक्षादवच्छिन्नोद्देश्यकत्वादिति वाच्यम् । ण्यन्ततदाद्यवयवस्य निर्दिश्यमानस्य लोपविधानेन णित्वेन परम्परावच्छेदेन स्थानिवत्त्वप्राप्त्या तदुभयसङ्गतेः ।

केचित्तु-अत्र साक्षात्पदनिवेशे लक्ष्यासिद्ध्यभावेऽपि "इदुदुपधस्य" इतिसूत्रस्थशब्दरत्नासङ्गतिर्दुर्वारैव । तत्र हि प्रत्ययभिन्नस्य विसर्गस्य षत्वमिति मनोरमोक्तार्थखण्डनाय प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्य षत्वमित्यर्थव्यवस्थापनाय प्रवृत्तः शब्दरत्नकृद् 'अग्निः करोति'

इत्यादौ प्रत्ययत्वस्य स्थान्यल्धर्मत्वेन तदातिदेशाप्रवृत्त्या प्रत्ययरूपो विसर्गो दुर्लभ इति किञ्चेत्यादिना प्रतिपादितवान्। साक्षात्पदनिवेशे तु प्रत्ययत्वस्य स्थान्यल्धर्मत्वेऽपि तेन साक्षादवच्छिन्नाया उद्देश्यताया अभावेनातिदेशप्रवृत्त्या प्रत्ययरूपविसर्गस्य सौलभ्येन तदसङ्गतिः स्पष्टैवेत्यतः स्थानितायामेवाल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नत्वं निवेशनीयम्। तथा च "गोस्त्रियोः" इतिसूत्रे निर्दिश्यमानपरिभाषोपस्थितेरुपसर्जनस्त्रीप्रत्ययान्ततदाद्यन्तप्रातिपदिकावयवनिर्दिश्यमानस्य ह्रस्व इत्यर्थेनानियमाभावादलोऽन्त्यपरिभाषाया अप्रवृत्तेरल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नायाः स्थानिताया अभावान्न प्राथमिकविरोधस्यावसरः। न चालोऽन्त्यपरिभाषायास्तत्राप्रवृत्तिस्वीकारे युवतिमतिक्रान्तोऽतियुवतिरित्यत्रोपसर्जनस्त्रीप्रत्ययान्ततदाद्यन्तप्रातिपदिकावयवनिर्दिश्यमानस्य तेः स्थाने कश्चिदिकारादिर्ह्रस्वः स्यादिति वाच्यम्? तद्वारणायालोऽन्त्यपरिभाषाप्रवृत्तिस्वीकारेऽपि तदुपस्थाप्यान्त्यालो निर्दिश्यमानविशेषणतया भानस्वीकारेण स्थानिताया अल्त्वेन परम्परयैवावच्छिन्नत्वेनादोषात्। एवं "बहुवचने झलि" इतिसूत्रेऽप्युभयोः परिभाषयोः समावेशेऽपि तदीयस्थानितायास्तेन धर्मेण साक्षादनवच्छिन्नत्वमुपपादनीयम्। "घेर्ङिति" इत्यत्र घिसञ्ज्ञकाभिन्ननिर्दिश्यमानान्ताङ्गावयवस्यान्त्यस्यालो गुण इत्यर्थेन तत्राल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नैव स्थानिताऽस्तीति तु न शङ्क्यम्; अन्त्यस्याल इति वक्तव्येऽलोऽन्त्यस्येत्येवंपाठसामर्थ्येनालः सर्वत्रान्त्यविशेषणताया एव कल्पनेन स्थानिताया अन्त्यत्वेनैव साक्षादवच्छेदात्। तथा च न द्वितीयविरोधस्यावसरः। एवं "ग्रहोऽलिटि" इत्यत्रानियमाभावान्न "अचश्च" इति परिभाषोपस्थितिः। उपस्थितौ वा तदुपस्थाप्याचो विशेषणतयैव भानकल्पनेनेट्त्वेनैव स्थानितायाः साक्षादवच्छेदान्न तृतीयविरोधस्यावसरः। एवं 'श्वाने' इत्यत्र भत्वानुपपत्तिरपि न, औङ्त्वस्यानुपदोक्तमतरीत्याऽल्त्वव्याप्यत्वाभावात्। एवं 'राम' इत्यत्रापि सान्तपदावयवनिर्दिश्यमानस्य रुत्वविधानेन रुत्वशास्त्रीयस्थानितायाः सत्त्वेन परम्परयाऽवच्छिन्नत्वान्न दोषः। 'लोम्नो अत्र' इत्यत्र द्विवचनत्वानुपपत्तिरपि न; "न पुंसकाच्च" इत्यत्र "तस्मात्" इतिपरिभाषयाऽव्यवहितोत्तरस्योपस्थितेरौङस्तद्विशेषणतयैव फलबलेन भानकल्पनादौङ्त्वेन साक्षादवच्छिन्नायाः स्थानिताया अभावात्, औङ्त्वस्याल्त्वव्याप्यत्वाभावाच्च। न चैवं 'वैयाकरण' इत्यादौ "इको यण्" इत्येतच्छास्त्रीयायाः स्थानिताया अल्त्वव्याप्येकत्वेन साक्षादवच्छिन्नत्वेन स्थानिवत्त्वानुपपत्तावेज-

ऽल् तद्वृत्तिधर्माश्रये नेत्यर्थः । अत एव रेफस्थानिकविसर्गस्य रुशब्दत्वं न स्थानिवत्त्वेनेति "भोभगो" (पा०सू०८–३–१७) इत्यत्र भाष्ये स्पष्टम् । ऋधातोर्द्वित्वेऽभ्यासस्य "उरत्" (पा० सू०

नापत्तिः । "इको यण्" इत्यत्रोपस्थितपूर्वस्य विशेष्यत्वेनेक्त्वे परम्परया स्थानितावच्छेदकत्वकल्पने त्वस्यार्थस्य मूर्द्धाभिषिक्तस्य धिन्वन्तीति फलस्यैवानुपपत्तिरिति वाच्यम् ? "अचः परस्मिन्" इत्यत्र पञ्चमीसमासाश्रयणेन तेनैव स्थानिवत्त्वेन तत्र पदान्तत्वसौलभ्यादित्याहुः ।

अन्ये तु—अल्पदप्रयोज्यस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतेत्यादिरेवार्थो भाष्यानुगृहीतो नव्यैर्वक्तव्यः, स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वानिवेशेन लाघवात् । एवञ्च प्रत्याहारेष्वाद्यवर्णानामेव बोधकत्वस्याभ्युपगतत्वेन धिन्वन्तीत्यादाविरूपाल्प्रयोज्यस्थानितायाः सत्त्वेन स्थानिवत्त्वाभावस्य रामायेत्यादौ स्थानिवत्त्वस्य प्राचीनमते मात्रपदनिवेशो न नवीनमत इति प्रवादस्य चोपपत्तिः । एतदेवाभिप्रेत्य "अचः परस्मिन्" इति सूत्रे अत्र सूत्रे प्रयोगे योऽजित्युक्तं ग्रन्थकृताऽपि तेन हि पूर्वसूत्रे योऽल्स्थानिताप्रयोजक इति सूचितम् । न चैवं सुधी इत्यत्र "हल" इति सूत्रेण दीर्घे तत्र स्थानिवत्त्वेन संप्रसारणत्वानयनापत्तौ उपास्यादिप्रयोगे "संप्रसारणाच्च" इति पूर्वरूपापत्तिः "हल" इतिशास्त्रीयायाः स्थानितायाः संप्रसारणपदप्रयोज्यत्वेनाल्पदप्रयोज्यत्वाभावेन 'अनल्विधौ' इतिनिषेधाप्रवृत्तेः "समानाङ्ग्रहणम्" इति वार्त्तिकन्तु भाष्ये प्रत्याख्यातमिति वाच्यम् । "हल" इतिसूत्रेऽच्परिभाषोपस्थितेरल्प्रयोज्यस्थानितायाः सत्त्वेनादोषादिति वदन्ति ।

इतरे तु–अल्पर्याप्तस्थानितानिरूपितादेशतावदित्यादिरर्थः । यद्यप्येवं रामायेत्यादावप्यल्पर्याप्तस्थानितायाः सत्त्वेन स्थानिवत्त्वमनुपपन्नम् तथाऽपि बोधकावयवेषु बोध्यावयवत्वारोप एव "एकान्ता अनुबन्धा" इत्यस्यास्तात्पर्येणाल्पर्याप्तत्वं नास्तीत्यवगन्तव्यमित्याहुः । परन्त्वेतन्मतेऽपि "क्रमेजन्त" इत्यादिसूत्रस्थभाष्यादिविरोधात्साक्षान्निवेश आवश्यक एवेति बोध्यमिति दिक् । स्वीयमेवार्थं समूलयति—*अत एवेत्यादिना* *भाष्ये स्पष्टमिति* । केचित्तु–प्राचीनमतेऽप्येतद्भाष्यसंलापाय "भोभगो" इत्यत्रापि 'र' इत्यनुवर्त्यम; 'र' इत्यस्य "खरवसानयोः" इत्यत्र "रोः सुपि" इत्यत्र चानुवृत्तिकथनपरं "भोभगो" इतिसूत्रभाष्यन्तु मण्डूकप्लुतिनिरासाय रोरितिसमुदायरूपाश्रयणादिति कौमुदी तु चि-

७-४-६६) अत्त्वेऽरित्यस्य हलादिः शेषस्तु अरित्यस्य पुनः "पूर्वोऽभ्यासः" (पा०सू०६-१-४) इत्यनेनाभ्यासत्वात्, तस्यापि द्विरुक्तधातुपूर्वभागत्वात्। प्रक्रियाज्ञानवतां तथा ज्ञानस्य सुलभत्वात्।

---

न्त्येवेत्याहुः। तत् "भोभगो" इतिसूत्रस्थभाष्यसन्दर्भविरोधादुपेक्ष्यम्। इत्थं हि तत्र सन्दर्भः—अश्ग्रहणमनर्थकम्; अशोऽन्यत्राभावादित्युक्त्वा छन्दःसु पयःसु इत्यत्र दोषो दर्शितः। पुनरेवमाशङ्कितम्—किं पुनः कारणं, सुकारपर एवोदाह्रियते, इहैव कुतो नोच्यते, वृक्षस्तत्र प्लक्षस्तत्र, अस्त्यत्र विशेषः, विसर्जनीये कृते न भविष्यति, इहापि तर्हि विसर्जनीये कृते न भविष्यति, छन्दःसु पयःसु; स्थानिवद्भावात्प्राप्नोति, ननु चेहापि स्थानिवद्भावात्प्राप्नोति, वृक्षस्तत्र प्लक्षस्तत्रेति अनल्विधौ स्थानिवद्भावः। एतेन "खरवसानयोः" इत्यत्र रोऽनुवृत्तेस्तस्यालत्वव्याप्यधर्मावच्छिन्नस्थानिताकत्वं बोधितम्, ततः अथायमल्विधिः स्यात्; शक्यमश्ग्रहणमवक्तुमित्युक्तम्। अत्रेदमारोः सुपीति विसर्ग एव परामृश्यते, न तु यत्वविधिः। तथासति छन्दःसु वृक्षस्तत्रेत्यनयोर्विशेषाभावेन तदुपपादनवैयर्थ्यात्। अयञ्च "रोः सुपि" इति विसर्गविधिः कथमल्विधिः स्यादित्याशङ्क्य विसर्गविधायकयोः शास्त्रयोः रोऽनुवृत्तिर्दर्शिता। इत्थञ्च "रोः सुपि" इति विसर्गस्याप्यलत्वव्याप्यधर्मावच्छिन्नस्थानिकत्वाद् वृक्षस्तत्रेत्यत्रेव स्थानिवत्त्वाप्राप्त्याऽश्ग्रहणमुत्तरार्थमिति सिद्धान्तितम्। इत्थं सन्दर्भशोधनेन स्फुटमुपलभ्येते नव्यसम्मतोऽर्थो "भोभगो" इत्यत्र रोऽननुवृत्तिश्च भाष्यतात्पर्यगोचरौ। अन्यथा "रोः सुपि" इत्यस्याल्विधित्वप्रतिपादनं भगवतो विफलं स्यादित्यलम्। नन्वेवमारित्यत्र ऋधातोर्लिटि द्वित्वेऽभ्याससञ्ज्ञायामुरदत्वरपरत्वयोरारित्यत्राभ्यासत्वं न स्यात्; तस्यालत्वव्याप्यऋत्वावच्छिन्नस्थानिताकादेशतावच्छेदकधर्मिकारोपप्रकारत्वादत आह—*ऋधातोरिति*। *पुनः पूर्व इति*। "लक्ष्ये लक्षणस्य" इति न्यायस्तु सञ्ज्ञाविषये न प्रवर्त्तत इति अग्नी इत्यत्र पुनः प्रगृह्यसञ्ज्ञाकरणपरभाष्याल्लभ्यत इति भावः। *तस्यापि*—अरित्यस्यापि। *द्विरुक्तधातुपूर्वभागत्वादिति*। अयं भावः—"पूर्वोऽभ्यास" इति सूत्रे पूर्वशब्दः पूर्वत्वावयवत्वोभयधर्मविशिष्टार्थकः, तत्र पूर्वत्वं किमपेक्षमित्याकाङ्क्षायां प्रत्यासत्त्या द्वित्वशा-

अत एव 'धिन्वन्ति' इत्यादावित्रा न । उकारवृत्त्यार्धधातुकत्वस्य वकारेऽनतिदेशात् । यत्तु अत्रेण्निवृत्तये स्वविधावपि स्था-

स्त्रीयविधेयापेक्षं विवक्षितम्। एवमवयवत्वं प्रत्यासत्त्या द्वित्वशास्त्रीयोद्देश्यविधेयोभयमात्रारब्धसमुदायनिरूपितं गृह्यते। तथा च द्वित्वशास्त्रीयविधेयावधिकपूर्वो यो द्वित्वशास्त्रीयोद्देश्यविधेयोभयमात्रारब्धसमुदायघटकः सोऽभ्याससञ्ज्ञक इत्यर्थेनारितस्यापि तथाभूतत्वादभ्याससंज्ञेति। एतेन द्विरुक्तधातुपूर्वभागस्य सामान्यतोऽभ्यासत्वे देवदत्तयज्ञदत्तौ देभतुरित्यादौ देवदत्तादेरप्यभ्याससञ्ज्ञाऽऽपत्तिः। अभ्यासकार्येऽङ्गाधिकारेण तद्दोषवारणे तु 'ऊर्णुनाव' इत्यत्र ह्रस्वो हलादिश्शेष इत्यनयोरापत्तिरित्याचार्युक्तं समाहितम्। नन्वरङ्क इत्यत्र कथं तत्समुदायत्वं येन तत्समुदायघटकत्वं तत्रार्थसमाजग्रस्तं स्यादत आह—*प्रक्रियाज्ञानवतां तथाज्ञानस्य सुलभत्वादिति*। लौकिकेनैकदेशविकृतन्यायेन तथाभूतसमुदायत्वस्य तत्र सत्त्वेन तत्र तत्पूर्वभागत्वज्ञानस्य सुलभत्वादित्यर्थः। अर्द्धविकारात्कथं तन्न्यायप्रवृत्तिरिति तु न शङ्क्यम्, जातिव्यञ्जकभूयोऽवयवदर्शने तथाऽपि प्रवृत्तेः सिद्धान्तसिद्धत्वात्।

भट्टास्तु—आनुमानिकस्थानिवद्भावेन तदा निन्युः, तच्चिन्त्यम्; द्विरुक्तेषूत्तरभागस्यैवार्थवत्त्वसिद्धान्तादभ्यासस्य विशिष्टस्य चानर्थकत्वेनानुमानिकस्थान्यादेशभावस्यार्थवत्येव विश्रान्तेरत्र तदप्रसरात्।

श्रीधरस्तु-अर्शब्दे द्विरुक्तधातुपूर्वभागत्वं 'तत्स्थानापन्न' इति लोकन्यायेनाह तस्मै किमपराद्धमभ्यासत्वेन, यतस्तन्नानिनाय सूत्रेऽनल्विधावित्युक्तेरल्विधौ तन्न्यायाप्रवृत्तिरिति चेत्? तदा द्विरुक्तधातुपूर्वभागत्वानयनेऽपि समानम्। अभ्यासत्वं शास्त्रीयं द्विरुक्तधातुपूर्वभागत्वं त्वशास्त्रीयमिति अभ्यासत्वानयने "पूर्वोऽभ्यास" इतिपुरुषारम्भस्य निवर्त्तकत्वान्न्यायबलमुपक्षीणमिति च वैषम्यमवशिष्यते चेदवशिष्यताम्, न नो विद्वेषः।

परे तु-द्विर्वचनीयविधेयोद्देश्योभयमात्रारब्धसमुदायसमभिव्याहृतवर्णाघटितो यो द्विर्वचनीयविधेयावधिकपूर्वः सोऽभ्यास संज्ञको भवतीति "पूर्वोऽभ्यास" इत्यस्यार्थेनार्शब्दे तादृशसमुदायसमभिव्याहृतवर्णाघटितत्वस्य ऋशब्दावधिकपूर्वत्वस्य च सत्त्वादभ्याससंज्ञा सुलभेति प्रक्रियाज्ञानवतामिति ग्रन्थस्याशयः। एवञ्च कश्चित्कश्चिन्न्यायमनुसृत्य व्याख्यानं विफलमेवेत्याहुः।

प्रथमार्थं सफलयति—*अत एवेति*। *इणेति*। अत्र प्राचाम-

निवत्त्वमपरविधाविति न्यासेन साधितं भाष्ये, सा त्वेकदेशयुक्तिः।

नुसारिणः—अल्त्वव्याप्यधर्मघटितेत्यत्राल्त्वव्याप्यत्वं धर्मे परिष्कृतं ग्राह्यम्। तच्च—स्ववृत्तित्व स्वघटितसमुदायावृत्तित्वोभयसम्बन्धेनालिवशिष्टत्वरूपम्। तथा च धिन्वन्तीत्यादावार्द्धधातुकत्वस्य निरुक्तोभयसम्बन्धेनालिवशिष्टत्वात्तन्निमित्तक इडागमे कर्त्तव्ये न स्थानिवत्त्वम्। रामायेत्यादौ सुप्त्वस्य ए वृत्तित्वेऽप्येघटितङेशब्दवृत्तित्वस्य बोध्यबोधकयोरभेदाध्यवसायात्सत्त्वेन नाल्त्वव्याप्यत्वमिति तत्सिद्धिः। न चैवम् 'आधये' 'चिकीर्षवे' इत्यत्र सन्निपातपरिभाषयाऽयसंज्ञावारणपरभाष्यविरोधः; तत्र कृत्वस्य परिष्कृताल्त्वव्याप्यत्वेन स्थानिवत्त्वाप्राप्तेरिति वाच्यम्? अस्मिन्नप्यर्थे नव्यनय इवोद्देश्यतायामल्त्वव्याप्यधर्मघटितधर्मेण साक्षादवच्छिन्नत्वनिवेशेनाविरोधादित्याहुः, तन्न। एवमुदक्षरपरिष्काराश्रयणेऽपि "भोभगो" इतिसूत्रस्थभाष्यविरोधस्य दुष्परिहरत्वात्। रामायेत्यादौ बोध्यबोधकयोरभेदाध्यवसायेऽपि तद्घटकैकारे बोध्यैकाराभेदाध्यवसाये मानाभावेन ङेइत्यस्य बोध्यैकाराघटितत्वेन तद्वृत्तेरपि सुप्त्वस्याल्त्वव्याप्यत्वापत्तेश्च। नन्वेवमपि धिन्वन्तीतिफलप्रलपनं विफलमेव; अपरनिमित्तकत्वेनान्तरङ्ग इडागमे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वेनावलादित्वादिटोऽप्राप्तेरिति चेद्? न। प्राचीनये तदन्तरङ्गत्वानभ्युपगमेन स्वमते तदुपायान्तरसत्त्वेऽपि प्राचामुक्तार्थावश्याभ्युपेयत्वबोधनमात्रे फलकथनस्य तात्पर्यात्। "नामि" इति सूत्र 'आमि' इति न्यासे नित्यत्वाद्दीर्घकथनपरभाष्यप्रामाण्येनापरनिमित्तकादेशविधायकत्वस्यान्तरङ्गत्वस्य स्वीकारेणेटस्तदभावाच्च दुद्यूषतीत्याद्यर्थं परनिमित्तकापरनिमित्तकशास्त्रयोराश्रयिमाणशब्दसमुदायतौल्य एव तदन्तरङ्गत्वस्यासिद्धत्वप्रयोजकत्वाभ्युपगमाच्च। ज्ञापकसाजात्यात्समकालप्राप्तिकबहिरङ्गासिद्धत्वमात्रप्रयोजकत्वाङ्गीकाराच्च। अक्षद्यूरित्यत्र "लोपो व्योः" इति यलोपवारणायाचोऽन्यानन्तर्यनिमित्तककार्यप्रवृत्त्युत्तरं यदन्तरङ्गं प्राप्नोति; तत्र कर्त्तव्ये बहिरङ्गासिद्धत्वं नेति नाजानन्तर्यन्यायार्थस्वीकारेणेति विनिषेधाच्च। एतन्मते तन्न्यायासत्त्वेऽप्यननुगतानित्यत्वाभ्युपगमेनेष्टसिद्धेश्च। 'भविष्यति गम्यादय' इत्यादिर्निर्देशेन "न वृद्भ्यश्चतुर्भ्यः" इतिसूत्रसामर्थ्येन च धातुविहितप्रत्ययस्येडागमे कर्त्तव्येऽन्तरङ्गपरिभाषाऽप्रवृत्तिस्वीकाराच्चेत्यलम्।

केचित्तु—"आर्द्धधातुकस्य" इडित्यत्र वलादिपदस्यौपदेशिकवला-

"असिद्धवत्" (पा०सू०६-४-२२) सूत्रेण सिद्धस्याऽऽयन्नामान्वि· त्यादेस्तत्फलत्वेनोपन्यासात्, अस्यापि "अचः पूर्वत्वाविज्ञानात्" (का० वा०) इति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च। 'प्रदीव्य' इत्यादौ च वलादिलक्षण इण्न। स्थान्यालित्युक्तेः 'बभू· विव' इत्यादौ वलादिलक्षणेट्सिद्धिः। न हि तत्र वलादित्वं स्था· नितो लभ्यं किन्तु स्वाश्रयमेव।

यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते, तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेः। प्रकृते चा·

---

दौ लक्षणामुपेत्य धिन्वन्तीत्यत्रेटं वारयन्ति; तदसत्। लक्षणायां गौर· वात्; बभूवतुरित्यत्रापीडागमापत्तेश्च। अपरविधावित्यस्य स्थानिभूता· च्परभिन्नस्य विधावित्यर्थः। तेन 'नैधेय' इत्यस्य सिद्धिः। प्रसज्यप्रति· षेधे तु तत्र स्थानिवत्त्वापत्तिरिति बोध्यम्। *आयन्नामान्विति*। एते लिङि यणादेशस्यास्तेः श्नसोरल्लोपस्य च स्थानिवत्त्वेनाडागम इ· ष्यते। "असिद्धवत्" सूत्रप्रत्याख्यानपक्षे तु लावस्थायामडित्याश्रित्ये ष्टसिद्धिर्बोध्या। *उपन्यासादिति*। चेच्छिदि बेभिदि भवतीत्यादि· लक्ष्यासिद्धेश्चेत्यपि बोध्यम्। अन्यथाऽऽद्ययोर्नुमोऽन्त्यस्याऽऽदेशाभावस्य चापत्तेः। *अस्यापि*--धिन्वन्तीत्यस्यापि। *इति वार्त्तिक इति*। "अचः परस्मिन्" इति सूत्रघटकपूर्वशब्दार्थस्यावधिसाकाङ्क्षत्वात्तदा· काङ्क्षाशान्त्यर्थमिदम्। *कैयटेनेति*। अनेन पाक्षिकपञ्चमीसमासेन स्थानिवद्भावेन समाधानमयुक्तम्; अत्रैवं वारणेऽपि परजः यजस्तस्या· पत्यं याजिरित्यत्र स्थानिवत्वेन पदान्तत्वात्प्राप्त "न य्वाभ्याम्" इत्यैज्वार· णायोक्तार्थस्वीकारस्यावश्यकत्वेन तेनैवैतत्साधनस्य युक्तत्वात्। पञ्चमी· समासपक्षेऽपि चेच्छिदीत्यादिलक्ष्यानुरोधेन स्वविधौ स्थानिवत्त्वस्या युक्तत्वाच्चेति सूचितम्। एतेनैतदुक्तिर्नागेशस्याश्रितशाखाच्छेदनन्या· यमनुकरोतीत्याक्षिपन्तः परास्ताः।

द्वितीयमर्थं सफलयति—*प्रदीव्येति*। *बभूविवेति*। यन्नि· मित्तेतिप्रत्यासत्त्याश्रयणस्य फलं दातुं कष्टायेत्यस्य त्यागः। ननु वला· दित्वस्य स्वाश्रयत्वेऽपि स्थान्यलवृत्त्यलत्वव्याप्यधर्मघटितत्वात्स्यादेव निषेधोऽतआह-*यन्निमित्तेति*। तादृशधर्मेऽतिदिदिक्षितत्वं विशे· षणीयमिति भावः। एवञ्च स्थान्यालिति विशेषणं विफलमिति बो· ध्यम्। *स्थान्यलसाधारणत्व इति*। स्थानिसम्बन्ध्यलवृत्तित्वे सत्य·

यद्वा किञ्चिन्निमित्तवैकल्येऽपि दीर्घादिकार्यमनेन क्रियते। तच्च कार्यं किमित्याकाङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्देशेनैव परशास्त्रविहितत्वरूपं परत्वं तेषां बोद्ध्यम्। एतदेवाभिप्रेत्यातिदिश्यमानकार्याणामुपदेशदेश एव देश इत्यभियुक्ताः।

अत्राऽऽद्यपक्ष एव भाष्यसंमतः। अत एव "स्थान्यलिवधिप्रतिषेधे कुरुतधपिबां प्रतिषेधो वक्तव्यः" इत्येतदुपपादनावसरे "स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं च लघूपधत्वादि, तत्र लघूपध-

---

सति भवतः सुप्संज्ञारूपकार्यस्यादेशेऽप्यतिदेशेन न दोषः। तथा च प्रधानस्य कार्यातिदेशस्य त्यागोऽनुचित इत्यरुचेराह—*यद्वेति*। अवतरणोक्तप्रथमकार्यातिदेशाभिप्रायेणाह—*दीर्घेति*। द्वितीयाभिप्रायेणाह—*आदीति*। सुप्संज्ञेत्यर्थः। स्थानिवत्त्वेन सुप्त्वात् "सुपि च" इतिदीर्घ इत्यत्र सुप्त्वादिति अनपक्ष्येत्यर्थे ल्यब्लोपे पञ्चमी। स्थानिवत्त्वेन सुप्त्वमनपेक्ष्यैव "सुपि च" इतिशास्त्रनिर्णीतो दीर्घ इत्यर्थः। यद्वा सुप्त्वादित्यस्य सुप्संज्ञयेत्यर्थः। स्थारित्यत्र परत्वाद्दीर्घ इति ग्रन्थासङ्गतिस्तदवस्थेत्यत आह-*तच्च कार्यं किमित्यादि*। तथाचातिदेशविषये कार्यस्वरूपनिरूपकशास्त्रगतपौर्वापर्यमेव बाध्यबाधकभावप्रयोजकमिति भावः। *एतदेव*—निरुक्तपौर्वापर्यमेव। *देश इति*। पौर्वापर्यप्रयोजक इति शेषः।

*अत्रेति*। प्राक्प्रतिपादितयोर्निमित्तकार्यातिदेशयोर्मध्य इत्यर्थः। *आद्यपक्ष इति*। इदानीन्तनपक्ष इत्यर्थः। यद्वेत्यादिना प्रतिपादितः कार्यातिदेशपक्ष इति यावत्। *अत एवेति*। अग्रे भाष्योक्तेरिति पञ्चम्यन्तपाठाद् अत्रैवेति पाठः। तस्य हि प्रकृतसूत्रे एवेत्यर्थः। यद्वा आद्यपक्ष इति छेदः, निमित्तातिदेशपक्ष इति तदर्थः। भाष्येऽङ्गसंज्ञेत्यस्याङ्गत्वमित्यर्थः। एवञ्च सर्वं सुयोजमिति व्याचक्षते।

अन्ये तु—सूचितमित्यन्तेन सम्भावनाघटितः कार्यातिदेशः साधितः। किं कार्यं भवतीत्याकाङ्क्षायामाह—*तत्रेति*। तेषु कार्येषु मध्य इति, आदेश इति वाऽर्थः। *अनपेक्षितेति*—पूर्ववदर्थः। *तत्तन्निमित्तरूपकार्येति*। तत्तत्सुप्त्वादिनिमित्तेन रूप्यमाणं बोध्यमानं यत्कार्यं तत्कार्येत्यर्थः। *व्यवहारः*—सम्पादनम्। *स्वशास्त्रेणैवेति*। "सुपि च"इत्यादिशास्त्रेणैवेत्यर्थः। ज्ञायत इति शेषः। *सुप्त्वादिति*। पूर्ववल्ल्यब्लोपे पञ्चमी। *परत्वादिति*। कार्यज्ञानार्थानुसन्धीयमानशा-

गुणादिः प्राप्नोति" इत्यादिभाष्योक्तेरिति बोध्यम् । एवं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमति-

---

स्त्रयोर्मध्ये परत्वादित्यर्थः । निमित्तातिदेशपक्षमाह-*यद्वेत्यादिना* । *किञ्चिन्निमित्तवैकल्येऽपीति* । किञ्चिन्निमित्तस्य सुप्त्वादेर्वैकल्यमभावो यस्मिंस्तथाभूते यादावादेशेऽपीत्यर्थः । *दीर्घादिकार्यमिति* । दीर्घादिकार्यं येनेति बहुव्रीहिणा सुप्त्वादिनिमित्तमित्यर्थः । *अनेन*-स्थानिवत्त्वेन । *क्रियते*-व्यवह्रियते, आरोप्यत इति यावत् । *तत्र कार्यं किमिति* । तदारोपस्य फलं किमित्यर्थः । *अतिदिश्यमानकार्याणामिति*। अतिदिश्यमानेन निमित्तेन यानि कार्याणि तेषामित्यर्थः। अत्राद्येत्यादिपूर्ववत् सुयोजनमिति वदन्ति ।

परे तु—सूचितमित्यन्तेन कार्यातिदेशपक्षः साधितः । तत्र कार्यं द्विविधं, प्रधानाप्रधानभेदात् । प्राधान्यञ्च—साक्षाल्लक्ष्यधर्मिकसाधुत्वप्रयोजकत्वम; अप्राधान्यञ्च—साक्षाल्लक्ष्यधर्मिकसाधुत्वप्रयोजककार्योपयोगित्वम् । *तत्रेति* । प्रधानाप्रधानयोः कार्ययोर्मध्य इत्यर्थः । *अनपेक्षितेति* । अनपेक्षितमर्थस्य प्रमाणस्य सन्निधानं यस्मिन् तथाभूतः तत्तद्वाक्यार्थबोधे निमित्तरूपं यत्कार्यमप्रधानीभूतं; तस्य व्यवहारोऽतिदेशोऽनेन क्रियते इति समुदितार्थः । अयं भावः—यत्र प्रधानकार्यस्यैवातिदेशसम्भवः; यथा वधेरात्मनेपदम् । तत्र तस्यैवातिनिवर्त्यत्वेनेतितत्रैव हेतुरिति नैतत्पक्षेऽपि तद्ग्रन्थासङ्गतिः। नन्वेवमपि परिशेषः यत्र तूभयोः सम्भव; यथा रामायेत्यादौ दीर्घः सुप्संज्ञा च तत्र प्रमाणमनपेक्ष्य सुप्संज्ञादेरप्रधानस्यैवातिदेशः कार्य इति । *कार्यं त्विति* । प्रधानकार्यं त्वित्यर्थः । *सुप्त्वादिति* । सुप्संज्ञयेत्यर्थः । *परत्वाद् दीर्घ इति* । अत्र प्रधानयोरेवातिदेष्टव्यत्वादुभयोरतिदेशे कार्यज्ञानार्थाश्रितशास्त्रगतपरत्वाद्दीर्घ इत्यर्थः । अप्रधानमतिदिश्यप्रधानार्थं शास्त्रप्रवृत्तिकल्पनापेक्षया लाघवात्सर्वत्र प्राधानकार्यस्यैवातिदेश इति पक्षमाह—*यद्वेत्यादिना* । *अत्रेति* । अप्रधानातिदेशप्रधानातिदेशपक्षयोर्मध्य इत्यर्थः । *आद्यपक्षः*-अप्रधानातिदेशपक्षः । *भाष्यसम्मत इति* । तत्र लघूपधगुणोपयोग्यङ्गसंज्ञाया एवातिदेशेन करणादिति भाव इत्याहुः । पूर्वं किञ्चिन्निमित्तवैकल्येऽपीत्युक्तम् । तत्र निमित्तपदेन यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तदतिरिक्तस्यापि कस्यचिद् ग्रहणशङ्कावारणार्थं कार्यातिदेशे विशेषान्तरमप्याह-*एवमिति* । कार्यातिदेशस्वीकार इत्यर्थः । *सर्वनिमित्तकत्वमिति* ।

देशस्यापि । अत एवेष्टवद्भावेनातिदिष्टभत्वस्य वर्णाश्रयत्वमित्या- दिव्यवहारः । सर्वातिदेशेष्विदं तुल्यम् । यन्निमित्तवैकल्यप्रयुक्तो- पदेशाप्रवृत्तिस्तन्निमित्तं शास्त्रीयमेव प्रत्यासत्तेः ।

---

प्राप्ताप्राप्तविवेकन्यायान्निमित्तशास्त्राद्यतिदेशपक्षापेक्षया फलैक्यानुरो- धाच्चेति भावः । *वर्णाश्रयत्वमिति* । तेन पटुशब्दादाचक्षाणण्य- न्तात् क्विपि णिलोपे श्यामि षड्भ्यामित्यत्र प्रत्ययलक्षणेन णिपरत्वा- दिष्ठवत्त्वेन भत्वं न । उपदेशस्य भसंज्ञाशास्त्रस्य णौ याऽप्रवृत्तिः सा स्वादित्ववैकल्यप्रयुक्ता तदतिरिक्ताजादित्वनिमित्तकत्वं णाविष्ठवदित्य- स्यापीति वर्णाश्रयत्वात् । किन्तु भ्यान्निमित्तकं पदत्वमेवेति जश्त्वसिद्धि- रिति बोध्यम् । *व्यवहार इति* । अभियुक्तानामित्यादिः । ननु षड्- भ्यामित्यादौ णिलोपे सति स्वादित्वाजादित्वोभयवैकल्यप्रयुक्ताया एवो- पदेशाप्रवृत्तेः सत्त्वात्कथमजादित्वनिमित्तकत्वमिष्ठवद्भावस्य येन वर्णा- श्रयत्वं स्यादिति चेद्? न । यन्निमित्तेत्यत्र निमित्तपदेन सादृश्यप्रतियो- गितावच्छेदकव्यापकधर्मस्यैव ग्रहणात् । न हि स्वादित्ववदजादित्वमि- ष्ठत्वव्यापकं; भूयिष्ठ इत्यादौ यादेरपीष्ठनः सत्त्वात् । न च "यचि भम्" इत्यत्र यचीतिद्वन्द्वनिर्देशाद्यकारादित्वान्यतरत्वस्यैव निमित्तत्वेन तस्ये- ष्ठत्वव्यापकत्वमस्त्येवेति वाच्यम् । "यचि भम्" इत्यत्र यितिलुप्तसप्त- मीकं पृथक्पदमिति स्वीकारेणान्यतरत्वेन तत्र निमित्तत्वाभावेन पृथ- क्पृथगेव निमित्तत्वात् । अत एव "द्वन्द्वाच्चुदषहान्तात्" इतिटचः शङ्का- ऽपि न । अन्यतरत्वस्यान्यत्रोक्तदिशा गौरवग्रस्तत्वेन पृथक्पृथङ्निमि- त्तत्वे लाघवाच्च । अथवा अन्यतरत्वेन निमित्तत्वेऽपि यन्निमित्तेत्यत्र निमित्तपदेन सादृश्यानुयोगितावच्छेदकव्यापकीभूताभावप्रतियोगिध- र्मस्यैव ग्रहणेन यादित्वाजादित्वान्यतरत्वस्य केवलस्याजादित्वस्य वा णित्वव्यापकीभूताभावप्रतियोगित्वाभावात्स्वादित्वस्य च तत्सत्त्वान्न दोषः । एतादृशनिमित्तग्रहणे निमित्तातिदेशाभिप्रायकसामान्यातिदेश- न्यायफलैक्यनिर्वाह एव हेतुः ।

केचित्तु—अतिदेशारम्भप्रयोजकाभावप्रतियोगिनो निमित्तस्य ग्र- हणेन न दोष इत्याहुः, तन्न । इहाजादित्वस्यापि तत्त्वस्य दुर्वारत्वात् । ननु इष्ठवदतिदेश एवं व्यवहारेऽपि प्रकृतातिदेशे किमित्यत आह—*स- र्वातिदेशेष्विति* । इदं तन्निमित्तातिरिक्तेत्युक्तम् । तेन रामस्येत्यत्र "सुपि च" इतिदीर्घः युष्मदित्यत्र बहुवचन इत्येत्वं चानेनातिदेशेन नेति बोध्यम् । *शास्त्रीयमेवेति* । तेनादेशस्थादेशे वेञो वयादेशे च ता-

स्थानिवदित्युक्तेः सम्बन्धिशब्दमाहिम्नैवाऽऽदेशलाभे आदेशग्रहणं श्रौतस्थान्यादेशभावस्यैव ग्रहणमितिशङ्कावारणद्वारा "एरुः" (पा० सू० ३-४-८६) इत्यादौ शब्दानित्यत्ववारणाय "सर्वे सर्वपदादेशाः" इति न्यायेन कल्प्यमानस्य तेस्तुरित्यानुमानिकादेशस्य संग्रहार्थम् । तेन 'पचतु' इत्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम् ।

ननु तोस्तिरत्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनैव सिद्धम् । तदुक्तं "प्राग्दीव्यतोऽण्" (पा०सू०४-१-८३) इति सूत्रे भाष्ये "दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदम्" इत्युक्त्वा "किमर्थं विकृतनिर्देशः ? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा "एकदेशविकृतमनन्यवत्" इति । अत एवात्र विकारोऽ-

सौ नित्यानित्यत्वस्याशास्त्रीयत्वाज्जघसिथेत्यत्र विवयिथेत्यत्र च "उपदेशेऽत्वत" इतीण् निषेधो न । कण्डूतिरित्यत्र वकारे स्थानिभूतादचः पूर्वत्वस्याशास्त्रीयत्वेनानतिदेशनाल्लोपस्य स्थानिवत्त्वेनोठः प्रतिबन्धश्च न । शास्त्रीयत्वं चैतन्मते शास्त्रस्थपदसङ्केतविषयतावच्छेदकत्वम् । वलादित्वादीनां शास्त्रीयत्वन्तु "यस्मिन्विधिः" इत्यादीनां सङ्केतग्राहकत्वाद्बोध्यम् । एतेन वलादित्वादीनामतिदेशाप्रसक्तेरशास्त्रीयस्यान्येनातिदेश इत्युक्त्वा जघसिथेत्यादाविण्निषेधवारणाय कण्डूतिरित्यत्रोठः सम्पत्तये च यत्नान्तरानुसरणमाचारिणां विफलमिति बोध्यम् । परेषान्तु पुनः शास्त्रीयत्वमन्यदेवान्यतोऽवसेयम् । *सम्बन्धिशब्देति* । तत्त्वञ्च—निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नबोधकत्वम् । प्रकृते च स्थानित्वस्य निरूपकांशे नित्यसाकाङ्क्षत्वेन पितृवदधीत इत्यत्र पुत्रस्येवादेशस्य लाभः सुकर इति भावः । *श्रौतस्थान्यादेशभावस्यैवेति* । तस्य प्रत्यक्षत्वेन पुरःस्फूर्त्तिकत्वादिति भावः । "सर्वे सर्वपदा" इत्यत्र पदपदमर्थवत उपलक्षणम् । *तेस्तुरिति* । इदमुपलक्षणम्, पचतीत्यस्य स्थाने पचत्वित्यादेश इत्यस्यापि ।

केचित्तु—अत्रादेशग्रहणाभावे प्रत्यासत्त्या शास्त्रतात्पर्यविषयीभूतस्यानुमानिकस्थान्यादेशाभावस्यैव ग्रहणं स्यान्न तु तदविषयस्य श्रौतस्थान्यादेशभावस्येति तदर्थमादेशग्रहणमितिविपरीतमाहुः; तद्भाष्यानुक्तमितिसूचयन्नाह—*इति भाष्ये स्पष्टमिति* । *अत एवेति* । लोकसिद्धत्वादेवेति, "प्राग्दीव्यत" इत्यत्राशास्त्रीयविकारेऽपि भाष्य-

शास्त्रीयोऽपि । अत एव आयसशब्दादण्णन्ताद् द्विवचने 'आयसौ' इत्यत्र वृद्धौ कृतायां सान्तस्योगित्त्वेनानेन न्यायेनाङ्गतया प्राप्तो नुम् पूर्वसम्बन्धिविधित्वेन "अचः परस्मिन्" (पा० सू० १-१-५७) इति स्थानिवत्त्वेन वारितः "अचः परस्मिन्" ( पा० सू० १-१-५७ ) सूत्रे भाष्ये । एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम् ।

"अन्तादिवत्" (पा० सू० ६-१-८५) सूत्रे भाष्यकैयटयोरपि 'गुडोदकम्' इत्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्य "उदकेऽकेवले" (पा० सू० ६-२-९६) इति पूर्वपदान्तोदात्तत्वमुक्तम्। शब्दानित्यत्वं तु रेखागवयन्यायेन समाधेयम्। अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेत्? न, अर्द्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयव-

---

कृताऽऽश्रयणादेवेति वाऽर्थः। *अत एव*-शास्त्र आश्रयणादेव । *आयसेति* । अयःशब्दादणि "देविकाशिंशपा" इत्यनेनात । *दुर्लभमिति* । न चानिणिनामित्तिका सा सान्ते सुलभेति वाच्यम् ? प्रत्यासत्त्या सर्वनामस्थाननिमित्तकाया आश्रयणात्। न च कार्यकाले अग्नी इत्यत्रेव यथोद्देशेऽपि वा औ इत्यत्र पूर्वान्तवत्त्वेनाण्त्वे परादिवत्त्वेन सर्वनामस्थानत्वेन पुनः संज्ञाप्रवृत्त्या तन्निमित्तिकाऽपि सुलभैव सेति वाच्यम् ? एवमपि अणिवधानावधित्वस्य अयसित्यत्र सत्त्वेन आयसित्यत्र न्यायं विना दुर्लभत्वात्। न चानुमानिकेन स्थानिवद्भावेन तल्लाभ; अइत्यस्याप्यर्थवत्त्वेन तस्य स्थानिधर्मत्वाभावादिति भट्टाः। ननु शब्दानामनित्यत्वायाविकारित्वस्य भाष्ये प्रतिपादनात्कथमेवं सति नित्यत्वमत आह—*शब्दानां नित्यत्वं त्विति* । *रेखागवयेति* । यथा बालानां गवयबोधनार्थं कश्चिद्रेखया गवयं लिखति; तत्र कचिदङ्गाधिक्ये कचिदङ्गहानौ वा न वास्तविके गवयेऽङ्गाधिक्यादि प्रतीयते, तथा शास्त्रप्रक्रियानिर्वाहार्थं बुद्धिकल्पितविकारेऽपि न पारमार्थिकः शब्दे विकार इति भावः । *अन्यसादृश्यनिषेध इति* । ननु सादृश्यस्य भेदघटितत्वेनान्यभेदनिषेधेऽन्यत्वमेवायातीति चेद् ? न । सादृश्यस्यैतन्मते भेदाघटितत्वात्। *अर्द्धस्येति*। इदमुपलक्षणम्, अर्द्धाधिकस्यापि। *जातिव्यञ्जकभूयोऽवयवदर्शनाभावेनेति*। तद्दर्शने तु भवत्येव तादृशो व्यवहारः; यथा "शिरश्चण्डस्य कालो च गृहीत्वा मुण्डमेवच" इत्यस्यानन्तरम्,

दर्शनाभावेन तौ तित्वप्रतीतेर्न्यायेनानुपपादनात् । किं च तिङ्सञ्ज्ञायास्तिबादिसूत्रोपात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूनेऽधिके वा शास्त्रव्यापारं विनाऽप्रवृत्तेः "येन विधिः" (पा० सू० १-१-७२) इति सूत्रेऽङ्गसंज्ञासूत्रे

"मया तवात्रोपहृतौ चण्डमुण्डौ" इत्यत्र चण्डमुण्डमात्रे चण्डत्वव्यवहारस्तथेति भावः । *अनुपपादनादिति* । अत एव वासुदेवत्राणकादशब्दाद् द्वितीयैकवचनेऽमि पूर्वरूपे "सुपि च" इति दीर्घो नेति भावः । न च पचतीत्यत्र यस्तिङन्ततदादित्वं तदेव पचतुशब्देऽतिदिश्यतामलमादेशग्रहणेनेति वाच्यम् । यदीयाङ्गस्यान्यथात्वं तत्र तदर्थवृत्तिधर्मघटितधर्मस्यापि न्यायेनानतिदेशात् । ननु भूयोऽवयवदर्शनं न जातिव्यञ्जकं वस्त्राद्यावृतकायत्वेन वैरूप्यं प्रापितस्य मुखमात्रदृश्यस्याध्यात्मिकवायुसंयोगिनः श्वात्मनस्तावदवयवमात्रादपि श्वत्वजातेर्व्यञ्जनात्प्रकृते च तेरिकारस्योकारेणाच्छादनात्सत्यपि वैरूप्येऽपि वदित्यादौ सङ्ख्याकारकाद्यवगमादिकारापगमे तकारमात्रादपि तित्वजातेर्व्यञ्जनस्य दृष्टत्वात्तुशब्दत्वेऽपि तेनैव तादृशजातिर्व्यज्यत इतिवक्तुं शक्यमित्यरुचेराह—*किञ्चेति* । *परिच्छिन्नपरिमाणेति* । तत्त्वञ्चैतन्मते संख्यात्वपरिमाणत्वव्याप्यधर्मावच्छिन्नप्रकारताकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयविशिष्टत्वम् । वैशिष्ट्यञ्च—स्वघटितत्व स्वसमानियतत्वान्यतरसम्बन्धेन बुध्यत्वकत्वादेरेकत्वादिप्रकारकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयीभूतद्वित्वादिघटितत्वाज्जरात्वादेस्तथाभूतचतुष्ट्वादिसमनियतत्वाच्च तत्त्वमुपपाद्यम् । उक्तशब्दत्वातिदेशपरम् "अन्तादिवत्"सूत्रभाष्यन्तु 'पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न' इतिपरिभाषया पूर्वमेव स्वरप्रवृत्तेरेकदेश्युक्तम् । परिच्छिन्नपरिमाण उक्तन्यायाप्रवृत्तेरसाधारणफलन्तु सजुषमाचष्टे सगित्यत्र सजुश्शब्दत्वातिदेशाद् रुत्वाभावः । आनुमानिकस्तु न प्रवर्त्तते, जुषोऽर्थवत्त्वेन सजुष्ट्वस्य स्थानिधर्मत्वाभावाद् इदुदुपधेभ्यो णिचोऽनभिधाने तु फलान्तरमनुसन्धेयम् । न चैवं दीव्यतिशब्दत्वस्याप्यनेनातिदेशाभावे "प्राग्दीव्यत" इतिसूत्रस्थभाष्यासङ्गतिरिति वाच्यम् । दीव्यतिशब्दनिष्ठबोधजनकत्वस्यैव दीव्यच्छब्देऽतिदेशेनेष्टसिद्धेः । तस्य निरुक्तपरिच्छिन्नपरिमाणत्वाभावात् । प्रकृते तु तिप्त्वादेः परिच्छिन्नपरिमाणत्वादतिदेशोऽप्राप्त इति आनुमानिकोऽसावव-

च भाष्ये उक्ततया तदभावात् । न्यूनाधिकत्वञ्च वैरूप्यस्योप-
लक्षणम् ।

---

इयाश्रयणीय इति भावः । *अङ्गसञ्ज्ञासूत्रे च भाष्य इति* । तत्र हि-
"अकज्ञविशिष्टस्य सर्वकादेरङ्गसञ्ज्ञां गङ्गायमुनादृष्टान्तसिद्धेन तन्म-
ध्यपतितन्यायेन संसाध्य पुनराशङ्कितम्, इह केचिच्छब्दा अर्थपरि-
माणानामर्थानां वाचका भवन्ति, य एते संख्याशब्दाः परिमाणशब्दा-
श्च त एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति नैवाधिके
भवन्ति न च न्यूने केचिद्यावदेव तद्भवति तावदेवाहुः । यथैते जाति-
शब्दाः गुणशब्दाश्च तैलं घृतमिति खार्यामपि भवति, द्रोणेऽपि शुक्लो
नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रे द्रव्येऽपि अङ्गसं-
ज्ञा चाव्यक्तपरिमाणानां क्रियते सा केनाधिके स्यात् । एवं तर्ह्याचार्यप्रवृ-
त्तिर्ज्ञापयति तदेकदेशभूतस्तद्ग्रहणेन गृह्यत इति; यदयमकोरितिप्रति-
षेधं शास्ति" इत्युक्तम् । ननु गङ्गाप्रविष्टनदीदृष्टान्तसिद्धेनाकोरितिप्र-
तिषेधज्ञापितेन तन्मध्यपतितन्यायेनाकपरिमाणानां धात्वादिशब्दानां
सहनम्के साकच्के यथाप्रवृत्तिः तथा श्वपुच्छदृष्टान्तसिद्धेन"प्राग्दीव्यत"
इतिज्ञापितेनानेनापि तिङ्त्वातिदेशः कुतो नेतिचेद् ? न । वैषम्याद्
अकपरिमाणानामधिके प्रवृत्तिमन्तराऽकोरित्यादेर्न सार्थक्यं "प्राग्दी-
व्यत" इत्यस्यार्थबोधकत्वाद्यतिदेशेन सार्थक्यमिति । वस्तुतस्तिङ्त्वं
न्यायेनापि सुलभमेव, तस्योक्तरूपाकपरिमाणत्वाभावात् । तिङ्संज्ञा-
या अकपरिमाणनिष्ठत्वोपपादनमपि चिन्त्यमेव, तिप्त्वादेस्तत्त्वेऽपि
तिबादेस्तदभावात् । परिच्छिन्नपरिमाणधर्मसमानाधिकरणधर्माणाम-
प्यनतिदेशे न्यायस्य निर्विषयत्वापत्तेः । अर्थबोधकत्वस्यापि परिच्छि-
न्नपरिमाणशीव्यतिशब्दत्वसामानाधिकरण्येनानातिदेशे ज्ञापकपरभा-
ष्यासङ्गतेश्च । "अङ्गसंज्ञा चाव्यक्तपरिमाणानाम्" इतिभाष्यन्त्वेकद-
श्युक्तिः । आयसावित्यत्राङ्गत्वातिदेशेन नुमापादानपरा "अचः पर-
स्मिन्" इतिसूत्रभाष्यविरोधात् । अत एव "प्राग्दीव्यतोऽण्" इतिसूत्रे
उक्तपरिभाषां ज्ञापयित्वा तेनैव पचतिवत्यादौ पदत्वे सिद्धे स्थानि-
वत्सूत्रे एकदेशविकृतस्योपसंख्यानं चोदितं; तत्र कर्त्तव्यमिति भाष्यके-
यटादिकथितमपि सङ्गच्छत इति दिक् । ननु न्यूनेऽधिके वा शास्त्रव्या-
पारस्यापेक्षणेऽपि तु शब्दे न्यूनत्वाधिक्ययोरभावाच्छास्त्रव्यापारं विना-
ऽपि तिङ्संज्ञा कुतो न स्यादत आह—*वैरूपस्योपलक्षणमिति* ।

न च 'तण्डुलान्' इत्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नत्वात् प्रातिपदिकत्वापात्तिरिति वाच्यम् । अतिदेश-

---

*स्थानिवद्भावेनेति* । कृतपूर्वसवर्णदीर्घ आसित्यादावादिवत्त्वेन प्रत्ययत्वं तत आनुमानिक आनादौ स्थानिवत्त्वेन प्रत्ययत्वं तदन्तत्वं त्वार्थसमाजग्रस्तमिति बोध्यम् । विशिष्टातिदेशस्तु न, अशास्त्रीयत्वात् । *प्रत्ययान्तत्वेऽपीति* । ननु शास्त्रप्रामाण्यादाहार्यारोपोऽपि प्रवृत्तावप्रवृत्तौ च नियामक इति पूर्वमुक्तम्, एवञ्च तद्वत्ताबुद्धिं प्रति यथा तदभाववत्ताबुद्धेस्तद्धर्मावच्छिन्नप्रतियोगिताकभेदवत्ताबुद्धेश्च प्रतिबन्धकता, तथा तदभाववत्ताबुद्धिं प्रति तदवच्छिन्नप्रतियोगिताकभेदवत्ताबुद्धिञ्च प्रति तद्वत्ताबुद्धेः प्रतिबन्धकताऽऽवश्यकल्पा । अत एव न घटवत्ताग्रहकाले घटाभाववत्ताग्रहो घटवद्भेदवत्ताग्रहश्च जायत इति कथं प्रत्ययान्तत्ववत्ताग्रहकाले प्रत्ययान्तभेदवत्ताग्रहः सम्भवेदिति चेद् ? न । प्रतिबन्धकतावच्छेदककोटिप्रविष्टबुद्धावनाहार्यत्वस्यापि प्रविष्टतयाऽऽतिदेशिकप्रत्ययान्तत्वज्ञानस्याहार्यतया तत्सत्त्वेऽपि प्रत्ययान्तभेदज्ञानस्योदयसम्भवात् ।

केचित्तु—तद्वत्ताबुद्धेर्न तदभाववत्ताबुद्धिं प्रति तद्धर्मावच्छिन्नप्रतियोगिताकभेदवत्ताबुद्धिं प्रति च प्रतिबन्धकताऽभ्युपेयते; न चैवं घटवत्ताग्रहसत्त्वे कथं न तदभाववत्ताग्रहोदय इति वाच्यम् । अभावाभावस्य प्रतियोगिरूपत्वेन भेदाभावस्य प्रतियोगितावच्छेदकरूपत्वेन च घटवत्ताग्रहस्य निरुक्तान्यतररूपेण प्रतिबन्धकत्वाभ्युपगमेन तादृशग्रहोदयाभावात् । प्रकृते प्रत्ययान्तत्वस्य प्रत्ययान्तभेदाभावरूपत्वेन ज्ञानं न सम्भवति, तस्याशास्त्रीयत्वेनातिदेशालभ्यत्वादित्याहुः; तच्चिन्त्यम् । प्रत्ययान्तत्वज्ञानस्यार्थसमाजग्रस्तत्वोपपादनात्तद्भेदाभावेऽप्यर्थसमाजग्रासतौल्यात् ।*प्रातिपदिकत्वापत्तिरिति* । एवञ्च नलोपः स्यादिति भावः । न चैतादृशे विषये यदि नलोपः स्यात्तदा "तस्माच्छसि" इत्येवास्तु, 'अकः' इत्यनुवर्त्तते, अचीति निवृत्तम् । अकः शसि पूर्वसवर्णदीर्घो भवतीति सूत्रार्थः । विधानसामर्थ्येन चात्र "आदेः परस्य" इत्यस्य बाध इति निर्विसर्गरूपे सिद्धे नकारादेशविधानं तच्छ्रवणार्थमिति नलोपो न भविष्यतीति वाच्यम् । साक्षान्नलोपशास्त्रबाधकल्पनापेक्षया "अतिदिश्यमानधर्मविरुद्ध" इतिन्यायज्ञापनस्यैवोचितत्वात् । यत्तु तण्डुलानित्यादावित्यादिपदेन सर्वस्मि-

स्वभावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात् । अत एव 'जहि' इत्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो हेर्लुग्न, सिद्धत्वासिद्धत्वयोर्विरोधात् । "असिद्धवत्" (पा० सू० ६-४-२२) सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावसम्पादनेन चरितार्थम् । न च 'अप्रत्ययः' इत्यस्य पर्युदासत्वे शास्त्रीयकार्याभावात्स्थानिवत्त्वं दु-

---

ष्टित्यत्र नलोपस्यापत्तिरित्याशयः, न ह्यत्रापि नकारोच्चारणसामर्थ्यं वक्तुं शक्यं, 'सर्वस्मिन् शय' इत्यत्र "शयवास" इत्यलुकि संज्ञाविधौ नलोपस्यासिद्धत्वेन गुरुसंज्ञायां प्लुतसिद्धेः फलत्वादिति, भट्टभैरवमिश्रावाहतुः, तदसत् । "इकोऽचि विभक्तौ" इतिसूत्रेऽज्ग्रहणेन "न लुमता" इत्यस्यानित्यत्वज्ञापनपरभाष्यप्रामाण्येन संयोगसंज्ञायां गुरुसंज्ञायां वा कर्त्तव्यायां नलोपस्यासिद्धत्वं नेतिकल्पनात् । अन्यथा 'त्रपुषुशय' इत्यादौ नुम् तदभावयोः फले विशेषाद्भाष्योक्तज्ञापकताभङ्गापत्तेरिति बोध्यम् । तण्डुलानित्यत्र प्रातिपदिकत्वापत्तिरिव अचिनवमित्यादौ पित्त्वातिदेशेऽपि ङित्त्वापत्तिरपि बोध्या । *अतिदिश्यमानधर्मविरुद्धेति* । ननु विरुद्धत्वं तद्बुधिप्रतिबन्धकबुद्धिविषयत्वं; प्रतिबन्धकता च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयत्वेन तदभावव्याप्यवत्तानिश्चयत्वेन तदवच्छिन्नप्रतियोगिताकभेदवत्तानिश्चयत्वेन च क्लृप्ता । तथा च आर्धधिषीष्टेत्यत्रात्मनेपदार्थातिदिश्यमानहन्त्वाभावव्याप्यस्वाश्रयादन्तत्वप्रयुक्ताऽतो लोपानापत्तिः । एवम् अधुरित्यत्र सिज्लुगर्थातिदिश्यमानधेट्त्वाभावव्याप्यादन्तत्वप्रयुक्तजुसनापत्तिः । एवं "णलुत्तमो वा" इतिसूत्रवैयर्थ्यं च अतिदिश्यमानोत्तमत्वाभावव्याप्यणल्त्वप्रयुक्तकार्यानापत्तेरिति चेद् ? न । द्वितीयनिश्चयत्वेन प्रतिबन्धकताया अतिदेशविषयेऽस्वीकारात् । अत एव लोके 'मातृष्वसरि मातृवद्वर्त्तितव्यम्' इत्युक्ते मातृत्वाभावप्रयुक्तकार्यस्यैव प्रतिबन्धो न तु तद्व्याप्यमातृष्वसृत्वप्रयुक्तस्यापीति । न चैवं 'पूर्वविधाविति किम्? 'नैधेयः' इतिग्रन्थासङ्गतिः । तत्र स्थानिवत्त्वेन ऽयच्त्वग्रहेऽपि स्वाश्रयह्यच्त्वस्य तद्विरुद्धत्वाभावाड्ढकः सिद्धेरिति वाच्यम् ? एकसंख्याघटितधर्मप्रकारकबुद्धिं प्रत्यपरसंख्याघटितधर्मप्रकारकबुद्धेः प्रतिबन्धकतायाः स्वातन्त्र्येण क्लृप्तत्वात् । अत एव 'न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभत' इतिभाष्य उक्तं सङ्गच्छते । *पर्युदासत्व इति* । अयम्भावः- 'अप्रत्यय' इत्यस्य पर्युदासत्वे प्रत्ययान्यभिन्नत्वं प्रातिपदिकसंज्ञाप्रयो-

ष्टमिति वाच्यम् । "वेः स्कन्देरनिष्ठायाम्" (पा०सू०८-३-७३) इति षत्वविधायके तिङन्तेषु षत्वाभावायाऽऽवश्यकेन न्यायेन चानिष्ठायामिति पर्युदासेन वृत्त्यादिसम्मतेन पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । 'विस्कन्नः' इत्यादौ हि निष्ठान्तत्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात् । तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्यानादेवोक्तार्थसिद्धिरिति बोद्ध्यम् ।

केचित्तु भाष्ये "तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः स्वं रूपमित्येतच्छास्त्रसत्त्वाद्धन्तेः कार्यं वधौ न स्यादिति" इत्युक्तम् । एवञ्च "स्वंरूपम्" (पा०सू०१-१-६८) इति शास्त्राविषये तेन सिद्धिरिति सूचितम् । एवञ्चाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण

---

जकं तदभावप्रयुक्तः प्रातिपदिकसंज्ञाभावस्तु न । शास्त्रबोध्य इत्येतत्प्रयोजकप्रत्ययान्तत्वबुद्धिसम्पादकः स्थानिवद्भावो न स्यात्, प्रसज्यप्रतिषेधे तु प्रत्ययान्तस्य प्रातिपदिकसंज्ञाभावोऽपि शास्त्रेणैव विधेय इति तस्य शास्त्रीयत्वं स्यादपीति । पर्युदासलभ्यत्वादुयुक्तराभिप्रायस्तु यदि प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वाभावः शास्त्रतात्पर्यविषयो न स्यात्तदा "अर्थवत्" सूत्रेण प्रत्ययान्ते न विधिर्नापि निषेध इत्यप्रत्यय इतिविशेषणं व्यर्थमेव स्यादिति तत्सामर्थ्याच्छास्त्रतात्पर्यकल्पनया सिद्धोऽप्यर्थः शास्त्रीयवद्भवतीति तत्सम्पादकः स्थानिवद्भावो भवत्येवेति । अस्मिन्नर्थे साधकान्तरमाह—*वेः स्कन्देरिति* । *न्याय्येन चेति* । वाक्यभेदाद्यकल्पनेन न्याय्यत्वमस्य बोध्यम् । *तस्य*—अनिष्ठायामित्यस्य । *प्रसज्यप्रतिषेधेति* । अस्य बीजमाख्यातशेखरतोऽवसेयम् । *उक्तार्थसिद्धिः*—पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयत्वसिद्धिः । ननु लक्ष्यानुसारो लक्षणैकचक्षुष्काणामयुक्त इत्यत आह-*केचित्त्विति* । *एवञ्च*-अस्य न्यायस्य लौकिकत्वे च । *अशास्त्रीयस्यापि धर्मस्येति* । इदमुपलक्षणम्, अशास्त्रीयस्यापिकार्यस्येत्यपि बोध्यम् । तेन तण्डुलानित्यत्र न दोष इति भावः । एतेन केचित्त्वित्यादेराक्षुरित्यन्तस्य ग्रन्थस्यात्र लेखोऽनुचितः सन्द-

क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयो यदि प्राप्नोति । एवञ्च न कश्चिद्दोषः । "न पदान्त" (पा० सू० १-१-५८) इति सूत्रे 'ब्राह्मणकण्डूतिः' इत्युदाहरणाच्च क्वचित्तदनाश्रयणम् । तत्र हि कण्डूयतेः क्तिचि तत्राल्लोपे तस्य स्थानिवत्त्वादुवाङि यणि वाऽनादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः ।

अत एव अर्थवत्सूत्रशेषे 'अप्रत्ययः' इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये । तत्र पक्षे च 'काण्डे' इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्ताभिन्नत्वाद्दोषः शङ्कितो न तु स्वाश्रयाप्रत्ययान्तत्वेन । "क्षियो दीर्घात्" (पा० सू० ८-२-४६) इति सूत्रे भाष्येऽपि अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम् । तत्र हि 'क्षियः' इत्यत्रेय-

ङ्विरोधादित्याक्षिपन्तः परास्ताः । नन्वशास्त्रीयस्यापि धर्मस्यातिदेशे तासो मित्यानिट्त्वादेरप्यतिदेशः स्यादत आह—*अतिप्रसङ्गस्त्विति* । *न कश्चिद्दोष इति* । न च "अप्रत्यय" इत्यस्येत्यादिनोक्तदोषो नेत्यर्थः । लक्ष्यानुसारेण न्यायानाश्रयणमयुक्तमत आह—*न पदान्तेति* । *तदनाश्रयणम्*—लौकिकन्यायानाश्रयणम् । *उवाङि यणिवेति* । कण्डूयेत्यस्य यगन्तत्वे उवङ्, क्यजन्तत्वे यणिति विवेकः । द्विधा हि कण्ड्वादयो धातवः प्रातिपदिकानि चेति सिद्धान्तादिति भावः । *आहुरिति* । अत्रारुचिबीजन्तु लोकन्यायेनाल्विधावप्येवं स्थानिवद्भावः स्यादित्येवमनल्विधाविति च व्यर्थं स्यात् । यदि तु तत्सामर्थ्याद् "अदो जग्धिः" इत्यत्र ल्यब्ग्रहणाज्ज्ञानल्विधाविति योगं विभज्य लोकन्यायप्राप्तस्यापि स्थानिवत्त्वस्याल्विधौ निषेध इत्युच्यते, तदा तदेव गौरवम् । किञ्च "न पदान्त" सूत्रशब्दस्तोकरीत्यानादिष्टादचः पूर्वत्वस्यातिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वेन तत्र लौकिकन्यायस्याप्यप्रवृत्त्या क्वचिन्न्यायानाश्रयणे ब्राह्मणकण्डूतिरित्युदाहरणपरं भाष्यं साधकमपि न भवितुमर्हतीत्यवधेयम् । *अत एवेति* । अतिदिश्यमानधर्मविरुद्धेत्यस्याङ्गीकारादेवेति, पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयवदतिदेशादेवेति, स्वरूपशास्त्राविषये क्वचित्तत्स्थानापन्नेतिन्यायाश्रयणादेवेति वाऽर्थः । *पर्युदासत्वमेवोक्तमिति* । अन्यथा तण्डुलानित्यत्र दोषाद्गौरवग्रस्तोऽपि प्रसज्यप्रतिषेध आश्रितः स्यादिति भावः । *न तु स्वाश्रयाप्रत्ययान्तत्वेनेति* । अन्य

ऽर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्य "एवं तर्हि आतिदेशिकानां स्वाश्रयाणि न निवर्त्तन्ते" इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रयनिवृत्तेरावश्यकत्वाभिप्रायेण-"अथाप्येतन्न" इत्याशङ्क्य "निर्देशसामर्थ्याद्विभक्तिः" इत्युक्तम् । "असिद्धवत्" (पा०सू० ६-४-२२) सूत्रे च कैयटे स्फुटमेतत् । यत्तु "गाङ्कुटादि" (पा०सू० १-२-१) सूत्रे भाष्ये "सृजिदृशोः" (पा०सू० ६-१-५८) इत्यत्राकितीति पर्युदासाद् 'सिसृक्षति' इत्यत्र "हलन्ताच्च" (पा० सू० १-२-१०) इति किस्वातिदेशेऽपि आमागममाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितं, तत्तु वार्त्तिककृदुक्तमुपायान्तरं बोध्यम् ।

"अनल्विधौ" इति विधिग्रहणाद् अलाश्रये विधावित्यर्थाद् यत्र विधौ शब्दतः स्थानिस्थान्यवयवान्यतराल्वृत्तिधर्मवतस्तेन तस्मा-

---

था पराद्विवत्त्वेन स्थानिवत्त्वेन वा प्रत्ययान्तत्वस्य प्रातिपदिकसंज्ञाभावरूपेऽशास्त्रीये कार्येऽनतिदेशात्स्वाश्रयाप्रत्ययान्तत्वेनापि संज्ञापत्तेर्वक्तुं युक्तत्वादिति भावः । *स्वाद्यनुत्पत्तिमाशङ्क्येति* । अधातुरिति पर्युदासेनाप्रातिपदिकत्वादिति भावः । *निर्देशसामर्थ्याद्विभक्तिरिति* । प्रकृतिवदतिदेशानित्यत्वज्ञापनद्वारेति शेषः । अतिदिश्यमानधर्मविरुद्धेति स्वीकारे विरोधं परिहर्त्तुं भाष्यमुपपादयति—*यत्त्वित्यादिना* । *अमागममाशङ्क्येति* । स्वाश्रयाकित्त्वनिमित्तकमित्यादिः । *वार्त्तिककृदुक्तमिति* । एतेनास्यैकदेश्युक्तित्वं सूचितम् ।

*विधिग्रहणादलाश्रये विधाविति* । अयं भावः-विधिग्रहणाभावेऽनल इत्येवमुक्तावल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधावेव निषेधः स्यान्न त्वन्यत्रेतिसकलसमासलाभार्थं विधिग्रहणम् । यद्यपि अनलिति निर्विभक्तिकनिर्देशात्तन्त्रेण सर्वत्र प्रवृत्तिः स्यादेव; तदुक्तं भाष्ये-"प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति" इति प्रातिपदिकमात्रनिर्देशास्तात्पर्यगोचरसकलार्थबोधका भवन्तीति च तदर्थः । तथाऽपि अल्त्वव्याप्यधर्मेण परम्परयाऽपि यत्रावच्छिन्नोद्देश्यता तत्राप्यप्रवृत्त्यर्थं विधिग्रहणमिति स्पष्टं प्रतिपादयति—*यत्र विधावित्यादिना* । *शब्दत इति* । अल्त्वव्याप्यधर्मेणेत्यर्थः । अस्वाश्रयणमित्यनेनान्व-

त्तस्य तस्मिंस्तदादेरित्यादिप्रकारेण विशेष्यतया विशेषणतया वा अलाश्रयणं तत्र निषेधः । 'व्यूढोरस्केन' 'द्यौः' 'शुभ्याँ' 'क इष्टः' 'प्रपठ्य' इत्युदाहरणानि । शब्दत इत्युक्ते 'अग्रहीत्' इत्यादौ "इट ईटि" (पा० सू० ८-२-२८) इति सिद्ध्यति । दीर्घविधावत्र च इट इति समुदायाश्रयणात् । अन्यथा टस्यानुबन्धत्वादिकारस्यै-वोभयत्राश्रयणमित्यल्विधित्वं स्यात् ।

अत्र सूत्रे विशेषातिदेशोऽपि । अन्यथा इडादेरपि क्त्वः सत्त्वात् वलादित्वस्य तद्विशेषधर्मैत्वात् उपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याका-ङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशेन विशेषावतिदेशेन सिद्धौ विशेषणतयाऽलाश्रयणे निषेध इत्येतत्प्रतिपादकस्यानल इत्येव सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्यात् । हलादित्किन्निमित्तकत्वेप्रतिषेधकात् "न ल्यपि"

---

यः । *दीर्घविधौ*—"ग्रहोऽलिटि" इत्यत्र । *अत्र च*—"इट ईटि" इत्यत्र च । तथा चेट्त्वस्याल्त्वव्याप्यधर्मावच्छिन्नस्थानितासामानाधि-करण्याभावादल्त्वव्याप्यधर्मघटितत्वाभावाच्च न सलोपे प्रतिषेध इति भावः । *अन्यथा*-उभयत्रार्थे अल्त्वव्याप्यत्वेन रूपेण धर्मस्याप्रवे-शे । एवञ्चोभयत्रार्थेऽल्त्वव्याप्यत्वनिवेशस्याग्रहीदित्येव फलमग्रहीन्ना-गेश इति बोध्यम् । एतद्ग्रन्थस्य तत्त्वमधस्ताद्विशदीकृतमेवावगन्त-व्यम् । *व्यापकधर्मैरिति* । व्याप्तिज्ञानेनोपस्थितधर्मैरित्यर्थः । अत एव न भूतत्वातिदेशोऽनद्यतनभूतत्वादेरतिदेश इति बोध्यम् । *विशे-षानतिदेशेन सिद्धाविति* । वलादित्वस्य क्त्वात्वाव्यापकत्वादिति भावः । *प्रतिपादकस्येति* । अस्य विधिग्रहणस्येत्यत्रान्वयः । *अन-ल इत्येव सिद्धे इति* । प्रातिपदिकानिर्देशादेव समासचतुष्टयप्रतिपाद्य स्यार्थस्य लाभसम्भवादिति भावः । *न ल्यपीति लिङ्गाच्चेति* । अ-न्यथा क्त्वात्वस्येडादावपि क्त्वाशब्दे सत्त्वेन कित्त्वस्य च तत्र निषेधे-नाव्यापकत्वादेवातिदेशाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ।

परे तु-नात्र ज्ञापकापेक्षा आदेशस्य सम्बन्धिशब्दत्वात्तदादेशे त-त्स्थानित्वव्यापकधर्मस्यैवातिदेशः स्यादिति ल्यप्स्थानिभूतक्त्वात्व-व्यापकत्वस्य कित्वे वलादित्वे च सत्त्वेन स्थानिवत्त्वस्य सौलभ्यात् ।

(पा०सू०६-४-६९) इति लिङ्गाच्च । अनुबन्धकार्ये त्वनल्विधाविति निषेधो न, अनुबन्धानामनेकान्तत्वात् । एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञापनात् । "नानुबन्धकृतमनेकाल्त्वम्" (प०८) इति ज्ञापयतीति भाष्येऽल्त्वव्यवहाराभावबोधनद्वारेति शेषः ।

ध्वनितश्चेदं "क्ङिति च" (पा०सू०१-१-५) "गाङ्कुटादि" (पा० सू० २-४-४९) "हलः श्नः" (पा० सू० ३-१-८३) इति सूत्रेषु भाष्ये । तत्राद्ये "यासुटो ङिद्वचनात् ङिदादेशा ङितो न इति ज्ञाप्यते" इत्युक्तम् । द्वितीये गाङो ङित्त्वस्य सानुबन्धकादेशे इत्कार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितं च

---

अन्यथा सादृश्यप्रतियोगितावच्छेदकस्थानित्वव्यापकशब्दत्वादेरेवा-तिदेशापत्तेः । अत एव जजागरतुरित्यादौ गुणः सिध्यति । अन्यथा आहतुरित्यादावतुसः स्थानिनस्तसो ङितोऽपि सत्त्वेन त्वन्मतेऽतुस्तस्वद्भवतीत्यतिदेशवाक्यकल्पनया विशेषधर्मातिदेशस्वीकारेण च पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयवदतिदेशादविचिण्णल्ङित्स्वित्युक्तेर्गुणानापत्तेः । अत एव च शब्दरत्ने ज्ञापकमनुपन्यस्योक्तार्थोऽयुक्तम इत्यत्र साधितः सङ्गच्छते । शब्दरत्नोक्त उपप्लवोऽपि सम्बन्धिशब्दमूलक एव बोध्य इत्याहुः ।

ननु विशेषातिदेशस्वीकारेऽपि "न ल्यपि" इतिव्यर्थमेव, कित्त्वस्य स्थानिसम्बन्ध्यल्वृत्त्यल्त्वव्याप्यधर्मघटितत्वादत आह—*अनुबन्धकार्ये त्विति* । *शिद्ग्रहणेनेति* । अनेकाल्सूत्रस्थेनेत्यर्थः । *अल्व्यवहाराभावेति* । अल्पदजन्यबोधविषयत्वाभावेत्यर्थः । भाष्यविरोधं शेषपूरणेन परिहरति—*नानुबन्धेति* । शेषपूरणे भाष्यतात्पर्ये उपष्टम्भकमप्याह—*ध्वनितं चेदमिति* । *ङिदादेशा ङितो नेति* । तेन अवेवित्यादौ लङ्वृत्तिङित्वं तिप्स्थानीय गुणो न एतन्मूलकमेव "पिच्च ङिन्न" इति बोध्यम् । "ङिच्च पिन्न" इति तु विशेषविहितेन ङित्वेन पित्त्वबाधमूलकम् । यदि त्वनुबन्धेऽप्यल्व्यवहारः स्यात्तदा शङ्कासमाधानयोर्निर्दलताऽऽपत्तिरिति भावः । *गाङो ङित्त्वस्येति* । तस्यात्मनेपदार्थं तच्च स्थानिगतङित्त्वेनैव गतार्थमिति भावः । *सानुबन्धकादेश इति* । षष्ठीतत्पुरुषः कर्मधारये ज्ञापनोत्तरं क्रियमाणेऽपि ङित्त्व आत्मनेपदाप्रवृत्तेस्तद्व्यर्थमेव स्यात् । *इत्कार्याभावेति* । तथा-

ज्ञापकम् । अन्त्ये शानचः ङित्त्वस्य सार्वधातुकादेशे अनुबन्धा-स्थानिवत्त्वज्ञापकत्वमुक्तम्, उक्तदूषणैरेव दूषितञ्च । अन्यथाऽन-ल्विधाविति निषेधेन तत्त्वाप्राप्त्या ज्ञापकत्वासङ्गतिः, तिबाद्यादे-शेषु पित्त्वाद्यसिद्धिश्चेति बोध्यम् ।

---

निवृत्तोद्धटितधर्मनिमित्तककार्याभावेत्यर्थः । यथाश्रुते णलादौ णित्त्वा-देवैयर्थ्यापत्तेः । *पित्त्वासिद्धेति* । तथा च वेदेत्यादौ णलोऽपित्त्वेन ङित्त्वाद् गुणनिषेधापत्तेः । *दूषितं च ज्ञापकमिति* । एतेन उत्तरस्यै-कदेश्युक्तित्वेऽपि पूर्वपक्षस्य सिद्धान्त्युक्तित्वं सूचितम् । *अनुबन्धा स्थानिवत्त्वज्ञापकत्वमिति* । अनुबन्धघटितधर्मस्य स्थानिवत्त्वेनाना-श्रयणज्ञापकत्वमित्यर्थः । *उक्तदूषणैरेवेति* । वेदेत्यादौ गुणनिषेधा-दिदूषणैरेवेत्यर्थः । *अन्यथा*-उक्तसामान्यभूतज्ञापनानाश्रयणे । एत-दनाश्रयणे लक्ष्यासिद्धिमप्याह—*तिबाद्यादेशेष्विति* ।

अथ प्रसङ्गाद्वद्ग्रहणस्य फलकीर्त्तनं कौस्तुभोक्तं लिख्यते । ननु वत्करणं माऽस्तु स्थान्यादेश इत्येतावताऽपि "असंयोगाल्लिट् कित्" इत्यादाविव वत्यर्थलाभात् । यदाहुर्भाष्यकाराः—"परत्र परशब्दः प्रयुज्य-मानो विनाऽपि वतिं वत्यर्थं गमयति" इति । न च स्थानी आदेशं प्रतिपद्यत इत्येव वाक्यार्थः किन्न स्यादिति वाच्यम् ? तत्तदादेशविधा-यकैरेव गतार्थत्वात् । न चादेशः स्थानिरूपं प्रतिपद्यते, आदेशः स्था-नीति "अस्तेर्भूः" इत्यादिवचनद्वयप्रामाण्याच्च विकल्प इति वाच्यम् । "वा लिटि" इत्यारम्भात् । न च चक्षिङः ख्याञ् आदेशः स्थानीति वचनद्वयप्रामाण्यात्सर्वत्र विकल्पापत्तौ लिट्येवेति नियमार्थं तत्स्या-दिति वाच्यम् । एवमपि "विभाषा लुङ्लृङोः" इत्याद्यप्राप्तविभाषासु वाग्रहणवैफल्यापत्तेः । अस्तिभूभ्यां रूपद्वयसिद्धौ "अस्तेर्भूः" इत्यस्य वैयर्थ्यापत्तेश्च ।

अत्राहुः—वत्करणाभावे स्थानी आदेशस्य संज्ञा स्यात्, प्रायेण ह्यस्मिन् पादे संज्ञासूत्राण्येवारभ्यन्ते । ततश्च "आङो यमहन" इत्यात्म-नेपदं वधेरेव स्यात्, न तु हन्तेः । न च "स्वंरूपम्" इतिहन्तेरपि ग्रहणं स्यात्, 'अशब्दसंज्ञा' इतिनिषेधात् । न चैवमाङो वधियम इत्येव ब्रूयादिति वाच्यम् । वधहिंसायामिति भौवादिकस्यापि ग्रह-णापत्तेः । न चैवम् "आङो वधयम" इतिपठ्यताम्; अकारस्य विव-क्षितत्वाच्च न भौवादिकेऽतिप्रसङ्ग इति वाच्यम्, सकलहन्त्यादेश-

अचः पर (पा० सू० १-१-५७) आदेशग्रहणमनुवर्त्तते, तदनु-

सङ्ग्रहार्थम् "आङो यमहन" इत्यस्यैव वाच्यत्वात् । तथा चावधिषीष्टेतिवदाजघ्ने इत्यत्रात्मनेपदं सिद्धम् । तथा हि—हन्तेर्लिटि लसामान्यापेक्षत्वादन्तरङ्गत्वात्तिबादिषु कृतेषु परत्वनित्यत्वाभ्यां "शेषात्कर्त्तरि" इति बाधित्वा "लिटि धातोः" इतिद्वित्वप्रयोगेऽभ्यासस्य चुत्वेऽभ्यासात्परस्य घत्वे एकदेशविकारासम्भवेन समुदायस्य समुदायादेशत्वाद्धन्त्यादेशत्वं ततो वधिना सह तुल्ययोगक्षेमतैवेति दिक् । अस्तु वा स्थानिन आदेशः संज्ञा, तथाऽप्यनिष्टं तुल्यमेव । तथा हि—"अस्यतिवक्ति" इत्यत्र ख्यातिपदेन चक्षिङेव गृह्यते, कृत्रिमत्वात् ख्यातेः सार्वधातुकमात्रविषयत्वाच्च । तथा च 'समचक्षिष्ट' इत्यत्राङ् स्यात्; अख्यतेत्यत्र च न स्यात् । न चैवं चक्षिङ इत्येव ब्रूयात् अनुबन्धनिर्देशोनापि यङ्लुग्वारणादिति वाच्यम् । एवमपि "गाङ्कुटादि"सूत्रे गाङा इङादेशस्य ग्रहणापत्तेः । गाङित्यत्र वचनसामर्थ्याद्द्वयुभयगतिः स्यात्; "गमेरिट् परस्मैपदेषु" इत्यत्र तु इणिङिकामेव ग्रहणं स्यात्, तस्मात्कर्तव्यमेव वत्करणम् । न चैवं वत्करणाभावाधीनलाघवानुरोधात्संज्ञाप्रकरणादन्यत्रैव स्थानिवद्भावप्रकरणं क्रियतामिति वाच्यम् । तथास्थानेयादेशग्रहणं विना वाक्यार्थानिर्वाहे बहुगौरवापत्तेः । सिद्धान्ते तु आदेशग्रहणमतिरिच्यमानमानुमानिकसङ्ग्रहार्थं भवतीति तद्बलेन "एकदेशविकृतस्योपसंख्यानम्" इतिवार्त्तिकं प्रत्याख्यायते । अपि च कामममतिदिश्यतां वेति वक्ष्यमाणमपि वत्करणायत्तमिति दिक् ।

*अचःपरस्मिन्* । *तदनुरोधादिति* । तदर्थतावच्छेदकज्ञानोत्थिताकाङ्क्षानिवृत्त्यनुरोधादित्यर्थः । अयं भावः—आदेशताया अवश्यंशनित्यसाकाङ्क्षरूपानवच्छिन्नावयवत्वानवच्छिन्नविधेयताविशेषात्मकत्वेनादेशपदस्य निरूपकांशनित्यसाकाङ्क्षरूपावच्छिन्नविषयताप्रयोजकत्वेन तत्समभिव्याहृतायाः षष्ठ्यास्तादृशविधेयतानिरूपितनिरूपितत्वबोधकत्वेनैवाकाङ्क्षानिवृत्तिः; निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नविषयताप्रयोजकपदसमभिव्याहृतायाः षष्ठ्यास्तद्रूपनिरूपितनिरूपितत्वबोधकत्वमिति व्युत्पत्तेः । अत एव न देवदत्तस्य पुत्र इत्युक्ते देवदत्तस्वामिकोऽन्यदीयः पुत्रः प्रतीयते; षष्ठीधार्मिकस्य सम्बन्धविशेषविषयकबोधजनकत्वप्रकारकतात्पर्यस्य च निर्णयाद् "ऊदुपधाया गोह" इत्यादावपि मात्र "षष्ठी स्थाने" इत्यस्य प्रसक्तिरिति बोध्यम् ।

शेधात् 'अचः' इति स्थानषष्ठी। 'परस्मिन्' इत्यादेशविशेषणं, तदाह-

---

यत्तु श्रीधरेण-"गुणानां च परार्थत्वाद्" इति न्यायेन तदप्रवृत्तिर्दर्शिता, तदसत्। प्रकृतषष्ठ्याः "षष्ठी स्थान" इत्येतत्परिभाषालिङ्गानालिङ्गितत्वेन स्वत एवाप्रवृत्तौ न्यायानुसरणस्य विफलत्वात्। एलासंस्कृतस्य पानीयस्य परोपकारकत्ववद् 'गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यत' इतिन्यायेन "यस्मात्प्रत्ययविधिः" इत्यादौ "तस्मिन्" इत्यादिपरिभाषाप्रवृत्तेर्दर्शनेन तस्यासार्वत्रिकत्वाच्च। सूचितश्चैतदन्योऽन्याश्रयपरीहारपरशब्दरत्नेऽनास्थासूचकवाकारेण। यद्यपि 'स्थानिवद्' इत्यनुवृत्त्यैव सम्बन्धिशब्दमहिम्नाऽऽदेश इत्यर्थलाभसम्भवात्तदनुवृत्तिर्व्यर्था; तथाऽपि तदनुवृत्तिः "अच" इत्यस्य षष्ठ्यन्तत्वसूचनाय। अन्यथा परस्मिन्निति परशब्दयोगे पञ्चम्यन्तत्वशङ्काऽपि सम्भाव्येतेति बोध्यम्। *परस्मिन्नित्यादेशविशेषणमिति*। यद्यपि श्रुतत्वाद्विशेषणत्वं युक्तं; सूत्रमपि वव्रश्चेत्यादौ चरितार्थं; तथाऽपि लक्ष्यानुरोधात्प्रधानान्वयानुरोधाद् "न पदान्त" सूत्रस्थवरेयलोपादिकतिपयग्रहणसामर्थ्याच्च तत्परित्यक्तं तद् ध्वनयन्नाह—*व्याख्यानादिति*। औपश्लेषिकसप्तम्यन्तस्य परस्मिन्नित्यस्याजिविशेषणत्वे तु हरिणा कृतमित्यत्र वाक्यसंस्कारपक्षे नादेशस्य स्थानिवत्त्वेनाच्परत्वाद् "इको यण्" इति यणापत्तिः; पदसंस्कारपक्षेऽपि जुहुत इत्यादौ शपःश्लोः स्थानिवत्त्वेन यणापत्तिश्च।

यत्त्वत्र पक्षे "न पदान्त" सूत्रे चर्ग्रहणवैयर्थ्यमुपपादितमाचारिणा, तच्चिन्त्यम्। जक्षतुरित्यादौ लकाररूपपराव्यवहितपूर्वस्याकारस्य स्थाने लोपादेशस्य सत्त्वेन स्थानिवत्त्वप्राप्त्या तन्निषेधाय सार्थक्यात्। औपश्लेषिकसप्तम्यन्तस्यादेशविशेषणत्वेऽपि हरिणा कृतं जुहुत इत्याद्येव दूषणं बोध्यम्।

यत्त्वत्र पक्षे "पादशतस्य" इति सूत्रे लोपग्रहणमुपपदविभक्तिन्यायबाधे मानम्; तद्धि द्विपदिकेत्यादौ "यस्येति च" इति लोपे सति पदादेशप्रतिबन्धकस्थानिवद्भावाभावार्थम्। औपश्लेषिकसप्तम्यन्तत्वे तु वुन्सन्नियोगशिष्टलोपेऽपि स्थानिवत्त्वस्य दुर्वारत्वेन तस्य वैयर्थ्यादित्याहुः, तन्न। पादशब्दाण्णिचि क्विपि निष्पन्नात्पाच्छब्दादेकदेशविकृतन्यायेन वुनि दकारलोपे च द्विपाकेति सिद्धये तत्सार्थक्यात्। न च णिलोपस्य स्थानिवत्त्वेन भत्वात्पदादेशे द्विपदिकेत्येव तत्रेष्यत इति वाच्यम्। स्थानिवत्त्वस्य भत्वसम्पादनद्वारा पदादेशसाधकत्वेन प-

परनिमित्त इत्यादि । अच एवादेश इत्यर्थः । तेन मरुतमाचष्टे

रिगणितविषयक "कौ लुप्तम्" इतिनिषेधात् । *परनिमित्त इति* । "सिद्धसाध्यसमभिव्याहारे सिद्धः साध्यायोपयुज्यते" इतिन्यायेन परनिमित्तकत्वमजादेशस्येति बोध्यम् ।

ननु मातापितृभ्यामुत्पादिते पुत्रेऽन्यतरपुत्रत्वव्यपदेशवद्राजदित्यत्रागनल्लोपेऽल्लोपित्वव्यपदेशवञ्चाज्झलादेशोऽप्यजादेशः स्यादत आह-*अच एवादेश इति* । पर्याप्तिभानस्यौत्सर्गिकत्वेनाच्त्वस्य धर्मिपारतन्त्र्येणादेशोऽन्वयादच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकस्थानिताक आदेश इत्यर्थ इति भावः । नन्वेवं श्रायसावित्यत्र नुममाशङ्क्य प्रकृतसूत्रेण स्थानिवद्भावेन वारणपरप्रकृतसूत्रभाष्यविरोधः, प्लायत इत्यत्रायतिपरको य उपसर्गस्तदवयवस्य रेफस्य लत्वमिति "उपसर्गस्यायतौ" इत्यस्यार्थे स्थानिवत्त्वेनोपसर्गस्यायतिपरत्वस्थापनपर "उपसर्गस्यायतौ" इतिसूत्रभाष्यविरोधश्च एकादेशस्य पूर्वपरोभयपर्याप्तस्थानिताकत्वेन स्थानिवत्त्वाप्राप्तेरिति चेद् ? न । वर्णग्रहणे जातिग्रहणेन तद्वर्णत्वव्याप्यधर्मवन्मात्रारब्धसमुदायवृत्तिधर्मे तद्वर्णत्वव्याप्यधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वारोपेणैकादेशीयस्थानिताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसमुदायत्वेऽच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वारोपेण स्थानिवत्त्वस्य सौलभ्यात् । अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतधर्मावच्छिन्नस्थानिताकादेशस्य स्थानिवत्त्वविधानेन तथाभूतपूर्वत्वपरत्वावच्छिन्नस्थानिताकादेशसद्भावेनादोषाच्च । भाष्येऽपि देवदत्तपुत्रदृष्टान्तेनैतदेव सूचितम् ।

केचित्तु—अभक्षन्यायेन परस्मिन्नित्यस्यायोगव्यवच्छेदार्थकविशेषणत्वेऽप्यस्यान्ययोगव्यवच्छेदार्थकविशेषणत्वमेव भाष्यप्रामाण्याद्बहुलक्ष्यसंस्कारानुरोधाच्च ।

यत्तु—परनिमित्तकहलादेशस्य स्थानिवद्भावाभावज्ञापकेन संसाध्य सौत्रमज्ग्रहणमेवान्ययोगव्यवच्छेदार्थकत्वज्ञापकमिति मतम्, तन्मन्दम् । हलादेशस्य स्थानिवत्त्वाभावे ज्ञापकविरहात् । न ह्ययतेः पयतेश्च क्विपि "लोपो व्योः" इति यलोपे तुकं बाधित्वा प्राप्तोऽतो लोपवारणायावश्यानुवर्त्तनीया "अनुदात्तोपदेश" इतिसूत्रघटकोपदेशपदे स्वरितत्वप्रतिज्ञा ज्ञापिका रातेः क्ते निष्पन्नस्य रातशब्दस्येच्छब्देन समा·

से रातेश्छन्दास्तत्करोतीति णिचि टिलोपे लुङि चङ्युग्लोपित्वाभा-
वादुपधाह्रस्वेऽरीरतदित्यत्र जातिव्यञ्जकावयवदर्शनेन व्यञ्जनतकार-
मात्रस्यैकदेशविकृतन्यायेनार्द्धधातुकत्वेन प्राप्ताऽतो लोपवारणाय वर्ण-
ग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषां प्रवर्त्य प्रतिपदोक्तस्यातो ग्रहणेन
तद्वारणे वृत्रहभ्यामित्यादौ नलोपस्यापरनिमित्तकत्वेन स्थानिवत्त्वाप्रा-
प्त्या प्रत्ययलक्षणेनार्द्धधातुकपरत्वात्प्राप्ताऽतो लोपवारणाय च तदाव-
श्यकत्वात् । वृत्रहभ्यामित्यत्रातो लोपप्रवृत्तौ "न लोपः सुप्स्वर" इति
सूत्रे कृति तुग्ग्रहणवैयर्थ्यं तु न शङ्क्यम् । जुनादिधातोः क्विपि जुभ्या-
मित्यादौ सावकाशत्वात् ।

नापि यायावर इत्यत्राकारलोपवारणाय क्रियमाणं "न पदान्त"सूत्रे
वरे ग्रहणं ज्ञापकम्, तत्राल्लोपस्येव यलोपस्यापि स्थानिवत्त्वेन ङित्प-
रत्वाभावादातो लोपवारणेऽपि पिसतेरिगुपधलक्षणे के तत आचार-
क्विबन्तात्कर्त्तृक्विप्यल्लोपे तत आचारक्विपि "स्थेश्भास" इतिवरचि
तन्निमित्तकलघूपधगुणप्रतिबन्धकप्राप्ताल्लोपस्थानिवद्भावनिषेधाय व-
रच्प्रत्ययनिमित्तकविधौ स्थानिवत्त्वनिषेध इत्यर्थाभ्युपगमेन चारिता-
र्थ्यसम्भवात् । यदि तु "ह्रस्वनद्याप" इतिसूत्रस्थभाष्यप्रामाण्येन हल-
न्तेभ्य आचारक्विपोऽनभिधानं सामान्यतः स्वीकृत्य नैतत्फलम्; अज-
न्ताच्चाचारक्विपि वरजेव दुर्लभ इत्युच्यते, तदाऽपि यातेर्यङन्ताद्विचि
अल्लोपयलोपयोरल्लोपस्येवं सम्प्रतियलोपस्यापि स्थानिवत्त्वेन "आतो
लोप इटि च" इत्याकारलोपाभावे यायाशब्दस्य नपुंसकह्रस्वे यायाश-
ब्दादाचारक्विबन्ताद्वरचि तन्निमित्तकाल्लोपे कर्त्तव्ये यङवयवाकार-
लोपस्थानिवत्त्वनिषेधाय तदावश्यकम् । यदि तु तत्र यङवयवाकार-
रूपस्थानिभूतात्पूर्वत्वेन ह्रस्वस्याकारस्यादृष्टत्वात्तत्र स्थानिवत्त्वाप्रा-
प्तेर्न तत्र चारितार्थ्यमित्युच्यते; तदाऽपि निरुक्तप्रक्रियानिष्पन्नया-
याशब्दस्य यशब्देन समासे याययशब्दादाचारक्विबन्तात्कर्त्तृक्विप्यल्लो-
पयलोपयोर्याययशब्दादाचारक्विबन्ताद्वरचि तन्निमित्तकेऽल्लोपे यलोपे
च यायावर इत्यत्र वरच्प्रत्ययनिमित्तकाल्लोपप्रतिबन्धकीभूतस्याल्लो-
पस्थानिवद्भावस्य निषेधाय तदावश्यकम् । न वा नङो ङित्त्वं
विश्न इत्यत्र गुणनिषेधार्थकं सतुक्कस्य छस्य स्थाने जातस्य
शस्य स्थानिवत्त्वेन गुरूपधत्वाल्लघूपधगुणाप्राप्त्या व्यर्थं सदिह ज्ञाप-
कम् । विश्नादिभ्य आचारक्विबन्तेभ्यो लङादौ ङित्त्वलक्षणात्मनेपदा-
र्थत्वेन कृतार्थत्वात् । "ब्राह्मणमाणवबाडव" इतिसूत्रस्थयन्प्रहणस्या-
न्यतो विधानार्थकत्वकथनपरभाष्यप्रामाण्येन प्रातिपदिकवृत्तिजित्त्वमा-

अस्यात्मनेपदाप्रयोजकत्वकल्पनेऽपि इत्त्वघटितयावद्धर्माणां तदप्रयोजकत्वस्य सामान्यतः कल्पने मानाभावात् । हल्सन्धिप्रकरणे आयस्वेति प्रतीकस्थमनोरमायामनात्मस्थासूचकत्वाकारेण तत्रैव शब्दरत्नेऽभिमानपदप्रदानेन च विशेषापेक्षज्ञापनस्य सूचनाच्च । "आचारेऽवगल्भ" इतिविहितक्विबन्तेभ्योऽवगल्भादिभ्यः सामान्यापेक्षकल्पनेऽनुदात्तेत्वलक्षणात्मनेपदानुपपत्त्या क्विप्सन्नियोगेनानुदात्तत्वप्रतिज्ञासामर्थ्येन तत्साधनस्य क्लेशावहत्वाच्च । ब्राह्मण्यादिभ्य आचारक्विबनभिधानमात्रकल्पनेन तद्भाष्यसौष्ठवाच्च । यजतेः क्विपि सम्प्रसारणे इच्छन्दाद्युल्लेभ्य आचारक्विपोऽनभिधानस्य लिङ्विषयमात्रे कल्पनादाचारक्विपि नङि इश इत्यत्र गुणानिषेधेन तच्चारितार्थ्याच्च । नापि युष्माकमित्यत्रान्त्यलोपपक्षे भाविनः सुटो निवृत्तये कृतः "साम आकम्" इतिसमुद्रकनिर्देशो ज्ञापकः । पञ्चमीसमासमाश्रित्य वकारलोपस्य स्थानिवत्त्वेनैव सुडप्राप्तेरिति वक्तुमर्हम; अनित्यभूतपञ्चमीसमासमाश्रित्य सूत्रैकदेशखण्डनस्यायुक्तत्वात् ।

न च धिनोतीत्यादौ गुणाभावाय क्रियमाणं "धिन्विकृण्व्योः" इतिसूत्रेणाकारविधानं ज्ञापकम् । संज्ञाशब्दानामर्धमात्रिकत्वेन प्रक्रियालाघवेन च वलोपविधानेऽपि सम्प्रत्ययलोपस्येव वलोपस्यापि स्थानिवत्त्वेनैव गुणाभावसिद्धेः । न च धिनोति पचति सततं यत्राभिधीयते सा धिनोतिपचा; तत्सम्बोधने हे धिनोतिपच ! इत्यत्र वलोपविधाने तस्य स्थानिवत्त्वेन संयोगपरत्वाद् गुरुसंज्ञायां "गुरोरनृत" इतिप्लुतापत्तिरिति वाच्यम् । संयोगसंज्ञायाः पूर्वमात्रसम्बन्धित्वाभावेन स्थानिवत्त्वाप्राप्तेः । अकारविधानपक्षेऽपि परम्परास्थानिवत्त्वेन प्लुतस्य दुर्वारत्वाच्चेत्यपि वक्तुं शक्यम्; वलोपस्योप्रत्ययसन्नियोगशिष्टत्वेनापरनिमित्तकत्वात् । तद्भावभावितामात्रेण निमित्तत्वाश्रयणे तु ज्ञापनोत्तरमप्यकारविधानस्य स्वांशे चारितार्थ्याभावादेव न ज्ञापकत्वमिति वक्तव्यम् । वलोपेऽपि "न धातुलोप" इतिनिषेधेनैव गुणाभावसिद्धेः । "न धातु" इतिसूत्रं भाष्ये प्रत्याख्यातमिति चेत् ? एवमपि ज्ञापकस्य पाक्षिकत्वानुद्धारात्, परस्मिन्ग्रहणस्य द्विपदिकेतिप्रत्युदाहरणपरभाष्यप्रामाण्येनात्र तद्भावभावितामात्रेण निमित्तत्वानाश्रयणाच्च, लुकि स्थानिवत्त्वनिषेधाच्च । अत एव भाष्ये ज्ञापकमनुपन्यस्यैवायमर्थ आश्रित इति वदन्ति; तन्न । 'यून' इत्यत्रान्त्यस्य यणः पूर्वं संप्रसारणेऽपि "न संप्रसारण" इति निषेधप्रतिबन्धकस्थानिवत्त्वस्य दुर्वारत्वेन निषेधाप्राप्त्या पूर्वयणः संप्रसारणप्रवृत्त्या "न संप्रसारण" इतिसूत्रस्यै-

च ज्ञापकत्वसम्भवात् । भाष्ये ज्ञापकानुपन्यासस्त्वौत्सर्गिकविषये ज्ञापकानावश्यकत्वाभिप्रायेणेति बोध्यम् ।

अन्ये तु—अज्झलादेशस्य स्थानिवत्त्वाभावं ज्ञापकेन संसाध्याच एवादेश इति फलितोक्तिरिति जगुः । तेषामयं भावः—यदि अज्झलादेशोऽपि स्थानिवद्भवेत्तर्हि "दीधीवेवी" इति सूत्र इड्ग्रहणं व्यर्थं टिलोपस्य स्थानिवत्त्वेनैव गुणाभावसिद्धेः । यदि तु तद् अतारिषमित्यत्र तरतेर्लुङि मिपि गुणनिषेधाय चरितार्थमिति विभाव्यते; तदाऽपि "न धातुलोप" इतिसूत्रं व्यर्थमेव । लोलुव इत्यादौ यङ्लुकः स्थानिवत्त्वादेव गुणाभावसिद्धेः । एवञ्चैतदेवाज्झलादेशस्य स्थानिवत्त्वाभावं ज्ञापयति । न चैतत्सूत्रस्य भाष्ये प्रत्याख्यानान्नैतज्ज्ञापकं युक्तमिति वाच्यम् । एवमपि 'लोलुव' इत्यादिसाधकस्य "यस्य हल" इत्येतत्सूत्रविषयकयोगविभागाश्रयणपरभाष्यस्यैव तत्र ज्ञापकत्वसम्भवात् ।

यदि तु लुकि स्थानिवत्त्वप्रतिषेधान्नैतद्द्वयं ज्ञापकमित्युच्यते; तदाऽपि "नाग्लोपि" इतिसूत्रस्थमग्ग्रहणमेवोक्तार्थे ज्ञापकं बोध्यम् । तद्धि अज्झाश्रलोपे स्थानिवद्भावेनैव ह्रस्वाभावसिद्धावगनग्लोपेऽरराजादित्यादौ ह्रस्वनिषेधार्थम् अज्झलादेशस्यापि स्थानिवत्त्वे तु तद्व्यर्थं स्पष्टमेव । न च चङ्परनिर्ह्रासविधौ स्थानिवत्त्वनिषेधान्नैतज्ज्ञापकमिति वाच्यम् । "णौ चङि" इतिसूत्रे भाष्येऽवीवददित्यत्र ण्यन्तािणचि चङ्परनिर्ह्रासविधौ स्थानिवत्त्वनिषेधेऽपि "नाग्लोपि" इतिह्रस्वनिषेधप्रतिषेधाय णेर्णिच्युपसंख्यानस्यावश्यकत्वनिरूपणेन चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्य फलाभावेनानावश्यकत्वसूचनात् । अत एवाग्मात्रलोपे स्थानिवत्त्वेन निर्वाह्यागनग्लोपे चारितार्थ्यमुद्भाव्य तत्रापि स्थानिवत्त्वमभ्युपेत्याग्ग्रहणवैयर्थ्यप्रतिपादनपरं "नाग्लोपि" इतिसूत्रस्थं सप्रदीपं भाष्यं सङ्गच्छते । प्रकृतसूत्रेऽज्झलादेशस्य स्थानिवत्त्वाभावस्य सिद्धान्तितत्वेन तद्भाष्यमेकदेश्युक्तिरिति त्वन्यत् । यदि तु अग्ग्रहणं तितउशब्दादाचक्षाणण्यन्ताल्लुङि टिलोपवृद्ध्यादन्तलक्षणपुक्चङ्णिलोपद्वित्वादिषु कृतेषु अततापदित्यत्र एटतेः क्विप्यन्शब्देन समासे इटन्शब्देन मनश्शब्दस्य समासे मनइटन्शब्दादाचक्षाणण्यन्ताल्लुङि टिलोपे चङि उपधाकार्यस्य द्वित्वात्प्राबल्येऽपि टिलोपस्य स्थानिवत्त्वेन पूर्वं ह्रस्वाप्राप्त्या "यथेष्टं नामधातुषु" इतिइट्शब्दस्य द्वित्वे हलादिश्शेषे सवर्णदीर्घेऽमनईटदित्यत्र गान्ददातीति विग्रहनिष्पन्नगोदशब्दादाचक्षाणण्यन्ताल्लुङि अजुगोददित्यत्र च ह्रस्वनिषेधाय चरितार्थम् । आद्ययोः स्थानिभूताभ्यामुकारेकाराभ्यां पूर्वत्वेन दीर्घाकारेकारयोरदृष्टत्वेन तृती-

ये प्रत्ययलक्षणेन पदत्वात् पदान्तविधौ तन्निषेधेन च स्थानिवत्त्वाप्राप्ते-रिति विभाव्यते; तदा "ठाजादावूर्ध्वम्" इति सूत्रेऽज्ग्रहणमुक्तार्थे ज्ञापकमस्तु। तद्धि 'षडिक' इत्यत्र द्वितीयाज्झलः परस्याङ्गुलिदत्तस्य लोपाभावसम्पादनद्वाराङ्गुलिदत्तमात्रस्य लोपे "यस्येति च" इत्यकारलोपे तस्य स्थानिवत्त्वेनाकारान्ते भत्वेऽपि षकारान्ते पदत्वेन जश्त्वार्थम्। अज्झलादेशस्य स्थानिवत्त्वे तु अङ्गुलिदत्तस्य लोपेऽपि स्थानिवत्त्वेन जश्त्वसिद्धेस्तदूर्ध्वमेवेति ।

अत्रेदं बोध्यम्—अज्ग्रहणं नोक्तार्थे ज्ञापकम्; किन्तु तदभावेऽङ्गुलिदत्तस्य लोपे 'षडिक' इति स्यात्। तद्ग्रहणे तु ङ्गुलिदत्तस्य लोपे तस्य स्थानिवत्त्वेनाकारलोपाभावे 'षडक' इतीष्यत इति तदर्थमेव तत्। किञ्च षडुमादत्तशब्दाट्ठचि अज्ग्रहणे मादत्तशब्दस्य लोपे तस्य स्थानिवत्त्वेन "ओर्गुण" इतिगुणाभावे उगन्तत्वात्कादेशे 'षडुक' इतीष्यते। इतरथा 'षडिक' इति स्यादिति तदर्थमप्यज्ग्रहणम्। एतेन 'वाचिक' इत्यत्र शीर्दत्तस्य लोपे जश्त्वापत्तिवारणाय कृतम् "एकाक्षरपूर्वपदानाम्" इति वार्त्तिकमेवोक्तार्थे मानम्। आशीर्दत्तस्य लोपेऽप्यधुना तस्य स्थानिवत्त्वेन जश्त्वस्य दुर्वारत्वादित्यपि निरस्तम्। वार्त्तिकाभावे वागिकस्य तत्सत्त्वे वागिकस्य सिद्धत्वेन फले विशेषाज्ज्ञापकत्वानुपपत्तेरिति दिक्।

*मरुतमाचष्ट इति*। यद्यपि "नाग्लोपि" इतिसूत्रस्थागितिप्रत्याहाराश्रयणसामर्थ्याद् वृद्धेर्लोपस्य बलवत्त्वप्रतिपादनपर-"णौ चङि" इतिसूत्रस्थभाष्यप्रामाण्याद् 'इदुदुपधेभ्यो णिचोऽनभिधानम्' इति लभ्यत इति "णौ चङि" इति सूत्रे कैयटेनोक्तम्। न चेदं स्रग्विन्शब्दाण्णिचि स्रजयतीति प्रयोगस्थापनपर-"टेः" इति सूत्रस्थकैयटेन विरुद्धत्वादुपेक्ष्यमिति वाच्यम्? तत्र विन्लुक्पक्षवृत्तन्यायेन वृद्ध्यभावेन लुङि ह्रस्वे तदभावे वा फले विशेषाभावेन ततोऽपि णिजभावकल्पने मानाभावात्। इतो णेरभावे लुग्विधायके विन्ग्रहणवैयर्थ्यापत्तेश्च विन्विषये मतोः सत्त्वेन तल्लुकैव 'स्रजिष्ठ' इत्यादेः सिद्धेः। विन्नन्तात्तु नेष्ठनादि, अजादी गुणवचनादेवेत्युक्तेः। स्पष्टञ्चैतन्नामधातौ शब्दरत्ने, तथाऽपि लुङ्येवानभिधानमिति तत्रत्योद्द्योतरीत्येदं फलं बोध्यम्। यदि तु इदुदुपधप्रातिपदिकप्रकृतिकण्यन्तातिरिक्तत्वेन लुङ्विधायकनानाशास्त्रे सङ्कोचापेक्षया "प्रातिपदिकाद्धात्वर्थे" इत्येतन्मात्रे सङ्कोचे लाघवात्सामान्यतोऽनभिधानकल्पनमेवोचितमिति विभाव्यते; तदा अदुपधान्मरुच्छब्दाण्णिचि फलमवगन्तव्यम्। यदि तु अत्र णिचि परत्वाद्वृद्धौ स-

स्यां टिलोपे वृत्रहयतीत्यत्रैव लक्ष्ये लक्षणन्यायेन पुनर्वृद्धेरप्रवृत्त्या नेदं फलं सम्भवति। न च "णौ चङि" इतिसूत्रस्थभाष्यरीत्या पूर्वं टिलोपप्रवृत्त्या फलं सम्भवतीति वाच्यम्? टिलोपस्य बलवत्त्वप्रतिपादकभाष्यस्य नित्यत्वमूलकबाधकत्वतात्पर्यकत्वेन प्रकृते कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वात्मकस्य बलस्य वृद्धिटिलोपयोरुभयोरपि सत्त्वेन परत्वाद् वृद्धेः पूर्वं प्रवृत्तेर्दुर्वारत्वात्। अत एव श्रीशब्दादणि श्रायमित्यत्र न वृद्धेः पूर्वं "यस्येति च" इतीकारलोपः। अन्यथा भाष्यस्य वृद्धेर्लोपस्य बलवत्त्वे सामान्यतः प्रवृत्त्या तत्र लोपप्रसङ्गो दुर्वार एव। न चैतस्य नित्यत्वमूलकत्वेऽगिति प्रत्याहाराश्रयणज्ञापकोपन्यासासङ्गतिरिति वाच्यम्? क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यत्वाश्रयणमिति बोधयितुमेव तदुपन्यासात्। एतेन मारयतीत्युपलक्षणं भवन्तमाचष्टे भावयतीत्यस्येति भट्टोक्तमपि चिन्त्यमिति विभाव्यते; तदा मराळशब्दाण्णिचि पूर्वं वृद्ध्यप्राप्त्या टिलोपे वृद्धिसिद्धिः फलं बोध्यम्।

यदि तु दूरशब्दाण्णिचि दवयतीत्यत्र वृद्ध्यभावकरणपर-"टेः" इतिसूत्रस्थभाष्यप्रामाण्यात् प्रातिपदिकप्रकृतिकणिज्निमित्तकार्यप्रयोज्योपधात्ववतो वृद्ध्यभावकल्पनेन नेदमपि फलं सम्भवति; कल्प्यांशे प्रातिपदिकप्रकृतिकेतिविशेषणाद् ब्रूधातोर्णिचि वच्यादेशे वाचयतीत्यत्र न वृद्धेरनुपपत्तिः। न चैवं स्रग्विणमाचष्टे स्रजयति युवानमल्पं वाऽऽचष्टे कनयतीत्यत्राङ्गवृत्तपरिभाषया वृद्धिवारणपर-"टेः" इतिसूत्रस्थकैयटासङ्गतिः, स्रजयतीत्यत्र संज्ञापूर्वकत्वाद् वृद्धिवारणपरकौमुद्यसङ्गतिः तदुभयमनादृत्येष्ठवदित्यनेन दवयतीति भाष्यप्रयोगात्क्वचिदभावातिदेशस्याप्याश्रयणेन वृद्ध्यभावसाधनपरशेखरासङ्गतिश्चेति वाच्यम्? उपायस्योपायान्तरादूषकत्वात्। न वा पटयति लघयतीति प्रकृतसूत्रोदाहरणपरभाष्यप्रामाण्याल्लोपेतरकार्यग्रहणेन न फलासङ्गतिरिति वाच्यम्? दत्तोत्तरत्वात्। एवं निवेशे ह्रस्वशब्दाण्णिचि वलोपे ह्रसयतीत्यत्र वृद्ध्यापत्तेश्च। किञ्च अदुपधाद्विहितेञ्णितिवृद्धिविधानान्नेदं फलं सम्यक्। राग इत्यत्र वृद्ध्यनापत्तिस्तु "घञि च" इत्यत्र विषयसप्तम्याश्रयणेनापि सुसमाधानेति विभाव्यते; तदा चेच्यः-नेन्यः-चेक्षियः-चेक्रियः-लोलुवः-पोपुव इत्यादिषु अच्प्रत्ययनिमित्तकस्य यङ्लुकः स्थानिवत्त्वाभावाद्यणादीनि फलानि बोध्यानि।

केचित्तु-प्रियशब्दस्य यशब्देन समासे प्रिययशब्दादाचारक्विबन्तात्कर्तृक्विप्यल्लोपयलोपयोः "ह्रस्वस्य" इति तुक्। न चाल्लोपस्य स्थानिवत्त्वं; पदान्तविधौ तन्निषेधात्। ततः प्रियच्छब्दादाख्याने णिचि

'मारयति' इत्यादौ वृद्धिः । अत्र सूत्रे प्रयोगे योऽच् तत्स्थानिक इत्यर्थः । न तु सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थः । तेन णिलोपादेरनेन स्थानिवत्त्वं सिद्ध्यति । अत एव चङ्परनिर्ह्रासे ण्यन्तात् णिचि 'अवीवदत्' इत्यादिसिद्ध्यर्थो निषेधः सार्थकः ।

---

टिलोपः, न चैतत्कर्त्तव्येऽल्लोपः स्थानिवत्; अतः स्थानिभूतादचः पूर्वत्वाभावात् । ततः क्विपि णिलोपयलोपयोः प्रिशङ्काद्वाचारकिवन्ताल्लटि तिपि शपि तत्र गुणे कर्त्तव्ये टेरतो लोपो न स्थानिवत्; अज्झलादेशत्वाद् गुणात्परत्वाद् "अचो ञ्णिति" इति वृद्धिस्तु न वाच्या; तत्र कर्त्तव्ये परस्थितक्विब्निमित्तकयलोपस्य बहिरङ्गतयाऽसिद्धेः । न च "नाजानन्तर्ये" इतिनिषेधः; ञिणतः प्रत्ययस्याङ्गविशेषणत्वेनाचोऽस्यानन्तर्यनिमित्तकत्वाभावात् । गुणे तु कर्त्तव्ये नासिद्धो यलोपस्ततोऽपि बहिर्भूतशब्निमित्तकत्वात् । नापि गुणे कर्त्तव्ये प्राथमिकोऽल्लोपः स्थानिवत्; परपदस्थाजादेशत्वेन "न पदान्त" इतिनिषेधादिति प्रयतीति फलमन्वेषयामासुः, तन्मुधैव । भाष्योक्तपरमप्रसिद्धफलानां सत्त्वेनान्वेषणक्लेशस्य विफलत्वादित्यलम् ।

नन्वच एवादेश इत्यर्थाभ्युपगमे णिलोपादेरनेन स्थानिवत्त्वं न स्यात्; तत्र "अनेकाल्" इतिसूत्रोक्तशेखररीत्या लक्ष्यस्थाकारे सूत्रस्थणकारे चागत्या स्थानितास्वीकारेणाच्पर्याप्तस्थानितायाः अभावादत आह-*अत्र सूत्रे प्रयोगे योऽजिति* । प्रयोगघटकाच्पर्याप्तस्थानिताक इत्यर्थः । यद्वा, ननु "स्थानिवद्"सूत्रविहिताप्यच्त्वव्याप्यधर्मेणाच्त्वेन वाऽवच्छिन्ना या स्थानिता तत्स्थानिताकादेशस्यैव ग्रहणे णिलोपादेः स्थानिवत्त्वं न स्यात्; तत्र स्थानितायाः णित्वादिनावच्छेदादत आह-*अत्र सूत्र इति* । *प्रयोगे योऽजिति* । वस्तुतः प्रयोगे योऽच् तत्स्थानिताक इत्यर्थः । *स्थानित्वेन*—स्थानितावच्छेदकत्वेन । *अच्स्थानिकः* । अच्त्वावच्छिन्नस्थानिताकः । *चङ्परनिर्ह्रास इति* । कर्त्तव्य इति शेषः । *निषेधः*-"क्ङिति गुणप्रधात्व" इतिनिषेधः । नन्वयं ग्रन्थः जौहोत्यादिकात्स्वग्रन्थाद्विरुद्धः; तत्र हि—श्लोः परनिमित्तकत्वाभावेनाजादेशत्वाभावेन चेति हेतुद्वयेन स्थानिवत्त्वाभावमुपपाद्य 'जुहुत' इत्यादौ गुणस्य वारितत्वादिति चेत्? तत्र द्वितीयो हेतुश्चिन्त्य एवेति बहवः ।

यत्तु-शप इतिविशिष्य श्लुविधानादित्संज्ञालोपाभ्यां प्रागेव तत्प्र-

अच इति किम्? आगत्य, मलोपस्य स्थानिवत्त्वात् "ह्रस्वस्य" (पा०सू० ६-१-७१) इति तुग्न स्यात्। परस्मिन्निति किम्? युव-जानिः। निङः स्थानिवत्त्वेन यलोपो न स्यादिति। पूर्वविधाविति

---

वृत्तेर्लुकाऽनुत्पत्तेरन्वाख्यानस्यैव श्लुनाऽपि अनुत्पत्तेरेवान्वाख्यानाच्च श्लुरजादेश इति, तन्न। णिलोपादावपि तुल्यत्वात्। *परस्मिन्निति किम्? युवजानिरिति*। *यलोपो न स्यादिति*। "न पदान्त" इत्यनेन यलोपविधौ निषेधस्तु लोपाजादेश एवेति बोध्यम्। यद्यपि भाष्ये स्वा-श्रयं वक्ष्यमाश्रित्य योऽत्रादेश इत्याश्रित्य चेदं साधितं; तथाऽपि सिद्धान्तेऽभावस्याप्यतिदेशात्तस्य स्थानिनि सत्यभवत आदेशेऽप्यभा-वबोधने तात्पर्यस्य वक्ष्यमाणत्वेनैतदुक्तम्। न च "जायाया निः" इति न्यासेन जायेति येति च पृथक्पदे लुप्तषष्ठ्यन्ते छित्त्वा जायाशब्दस्य या इत्यस्य न्यादेशेनेष्टसिद्धिः। न च जायाशब्दादाचक्षाणण्यन्तात् क्विपि निष्पन्नजाशब्दस्य युवत्यादिभिर्बहुव्रीहौ जाशब्दस्यैकदेशविकृत-न्यायेन निङादेशे युवजानिरितीष्टानुपपत्तिरिति वाच्यम्? णिलोपस्य स्थानिवत्त्वेन जायाऽन्तोत्तरपदकबहुव्रीहेरभावेन तत्र निङादेशस्या-निष्टत्वादिति वाच्यम्? जायाशब्दादाचक्षाणण्यन्तात् क्विपि जाशब्द-स्यशब्देन समासे जेशब्दस्य युवत्यादिभिः समास एकारस्य निङा-देशे युवजानिरित्यस्यासिद्धिप्रसङ्गात्। अत्रैकारस्यानादिष्टादचःपूर्वत्वेन णिलोपादेः स्थानिवत्त्वाभावात् 'जायाया जानिः' इतिन्यासेऽप्येतदेव दूषणं बोध्यम्। न च जायाशब्दान्तस्य निगागमोऽन्त्यस्य लोपश्चेत्य-र्थको 'जायाया निग्लोपश्च' इत्येवास्तु। तथा च यलोपे नालोपस्य स्थानिवत्त्वसम्भवः; "न पदान्त" इति निषेधात्। नापि युवत्यादेर-सिद्धिरिति वाच्यम्? ङित्त्वस्याचारक्विप्यात्मनेपदार्थत्वात्, परस्मि-न्ग्रहणापेक्षया लाघवाभावाच्च। न वा 'लोपो व्योर्निङ्वलोः' इति न्यासेन निङ्ग्रहणसामर्थ्यात् स्थानिवत्त्वाभावकल्पनेन यलोपे 'युवजा-निः' इति सिध्यतीति वाच्यम्। अतिरिक्तस्य निङ्ग्रहणस्य तज्ज्ञापक-त्वस्य चाश्रयणापेक्षया परस्मिन्ग्रहणकरणस्यैव युक्तत्वात्।

कथञ्चित्परस्मिन्ग्रहणखण्डनमात्रमभिनिविशमानानामनुरोधेन फ-लान्तरमप्याह—*द्विपदिकेति*। द्वौ द्वौ पादौ ददातीति विग्रहे "पादशतस्य" इति वुन्प्रत्ययसन्नियोगेनाकारलोपे तस्य स्थानिवत्त्वेन पद्भावेशानापत्तिरिति बोध्यम्। नन्वत्र "यस्येति च" इत्येव लोपे सिद्धे

पुनर्लोपविधानसामर्थ्यादेव स्थानिवत्त्वं न भविष्यति । न च पादशब्दस्य शब्देन समासे द्विपादेशब्दादेकादेशस्य पूर्वान्तवत्त्वेन पादशब्दान्तत्वाद् वुनि एकारलोपविधानाय तत्सार्थकमिति वाच्यम्? पुनर्लोपविधानेनापत्तिवारणपरभाष्यप्रामाण्येनैदृशानामनभिधानादतः फलान्तरमाह—*वैयाघ्रपद्य इति*। तत्र हि-"पादस्य" इति विहितलोपस्य स्थानिवत्त्वेन पदादेशानुपपत्तिर्बोध्या। अत्र "यस्येति च" इति सिद्धे पुनर्लोपविधानन्तु न व्यर्थः; व्याघ्रपादित्यत्र चारितार्थ्यात्। पदादेशोऽपि न व्यर्थः; द्विपदिकेत्यत्रैव चारितार्थ्यात्, पादयतेः क्विपि "कौलुतम्" इति स्थानिवत्त्वप्रतिषेधेन शसि पद इत्यत्र चारितार्थ्याच्च। ननु पादस्य 'पादहस्त्यादिभ्य' इतिन्यासेन न दोषः। न च पादशब्दादाचक्षाणण्यन्तात्क्विपि व्याघ्रादिभिर्बहुव्रीहौ दकारलोपाय लोपविधानं सार्थकमिति वाच्यम्? णिलोपस्य स्थानिवत्त्वादिति चेद्? न। एवं सति "पादः पद्" इत्यत्र लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तस्यैव पादो ग्रहणापत्तौ द्विपदिकेत्यादौ पदादेशानापत्तेः।

ननु 'पादस्य दस्य दुशहस्त्यादिभ्य' इतिन्यासेन दशब्दस्य सर्वस्य स्थाने शित्वाद्दादेशेनाज्झलादेशत्वाभावान्नात्र स्थानिवत्त्वप्रसक्तिरतः फलान्तरमाह—*आदीध्य इति*। अत्र टेरेत्वस्य स्थानिवत्त्वेनेत्वा यणादेशं बाधित्वा यीवर्णयोरिति लोपापत्तिर्बोध्या। ननु छन्दसि दृष्टानुविधानाद्यकारसाहचर्याच्छ्रूयमाण इकारे लोपविधानाच्च नात्र दोष इति चेत्? हरिणेत्यत्र स्थानिवत्त्वेन यणापत्तेर्दोषत्वात्। सन्धिकार्ये सन्निपातपरिभाषाया अप्रवृत्तेर्न तयाऽत्र निर्वाहः। यदि तु 'आङि नुगस्त्रियाम्' इतिन्यासेन नात्र दोष इत्युच्यते; तदा 'अस्मै' इत्यत्र स्मायादेशस्य स्थानिवत्त्वेनाच्परत्वाद्धलि लोपानुपपत्तिर्दोषः। यदि तु "अनाप्यक" इत्यत्र 'अन्टौसोः' इति न्यस्य "हलि लोप" इत्यत्र 'आपि लोप' इति न्यस्य हल्ग्रहणं परित्यज्यते; तदा रामायेत्यत्र यादेशस्य स्थानिवत्त्वेनायञादित्वाद् दीर्घानुपपत्तिः। दीर्घविधौ निषेधस्तु लोपाजादेश एवेति न तेनास्य निर्वाहः। विच इत्यत्र शब्लुकः स्थानिवत्त्वेन गुणापत्तिश्च, लुकि प्रतिषेधस्तु लुकि परेऽजादेशस्यैवेति न तेनास्य सिद्धिः, जुहुत इत्यत्र स्थानिवत्त्वेन गुणापत्तिश्च।

यत्तु—ज्ञाने इत्यादौ "यस्येति च" इत्यकारलोपाभावाय क्रियमाण "औङः श्याम्" इति वचनसामर्थ्यादपरनिमित्तकोऽजादेशो न स्थानिवादिति ज्ञापनेनेष्टसिद्धौ परस्मिन्ग्रहणं खण्डयन्ति; तन्न। वार्त्तिकप्रतिपाद्यार्थस्य सूत्रकृत्तात्पर्यागोचरत्वेनैवं सूत्रैकदेशखण्डनस्यानु-

क्विम् ? नैधेयः । निपूर्वाद्धाञः क्विप्रत्यये आतो लोपे तस्य स्थानिवद्भावात् इयच्त्वव्यपदेशविरोधात्स्वाश्रयद्व्यच्त्वनिवृत्तौ ढगनापत्तेरिति दिक् ।

अत्र स्थानिनि सति यद्भवति तदादेशेऽपि भवति, स्थानिनि यन्न भवति तदादेशेऽपि नेति भावाभावयोरुभयोरप्यतिदेशः । तत्र भावोदाहरणं 'निगाल्यते' इति, अन्त्योदाहरणं 'पटयति' इ-चितत्वात् ।

केचित्तु—लुकि न स्थानिवदित्यस्य लुकि परेऽजादेशो न स्थानिवदित्यर्थकत्वे यौतीत्यादौ शब्लुकः स्थानिवत्त्वाद् "उतो वृद्धिः" इत्यस्याप्राप्तौ तत्सूत्रसामर्थ्यादपरनिमित्तकाजादेशो न स्थानिवदिति ज्ञापनेनेष्टसिद्धौ परस्मिन्ग्रहणमुक्तार्थानुवादकमेवेति वदन्ति ।

*द्व्यच्त्वव्यपदेशविरोधादिति* । अत्र यद्वक्तव्यं तदभिहितमधस्तात् । *ढगनापत्तेरिति* । "इतश्चानिञ" इति विहितस्य ढक इति भावः ।

*स्थानिनि सतीति* । नन्वेवं देवयतेः क्विपि णिलोपे क्वौ विधिं प्रति स्थानिवत्त्वाभावादूठि द्यूरित्यत्र स्थानिनि णौ सति ऊठोऽभावादच्परत्वाभावादभवन्यादेशो लोपेऽपि सति न स्यात्, अनेन स्थानिवत्त्वात् । न च पकारस्यानादिष्टादचः पूर्वत्वेन न स्थानिवत्त्वप्रसक्तिरिति भ्रमितव्यम् ? क्विबुत्पत्तेः प्रागेवान्तरङ्गत्वाद् गुणस्य प्रवृत्तेः सत्त्वादिति चेद् ? न । स्थानिनि सतीत्यस्यादेशे स्थानिधर्मारोपसम्भावनायां यत्प्राप्नोति तत्कर्त्तव्यं यन्न तन्नेत्यत्र तात्पर्येणादोषात् । न चैवमपि वाक्यसंस्कारपक्षे एषो गमयतीत्यत्रेणो गमादेशस्य स्थानिवत्त्वेऽपि गकारनिमित्तक-"एतत्तदोः" इति सुलोपो दुर्वारः; आदेशे गमिस्थानिधर्मारोपसम्भावनायामपि गकारनिमित्तकस्य सुलोपस्य प्राप्तेः । किञ्चैवमियायेत्यत्रायादेशस्य स्थानिवत्त्वेन सवर्णाच्परत्वादियङभावमाशङ्क्येयङ्विधिसामर्थ्यादस्यासकार्यप्रतिबन्धकीभूतस्यास्यासोत्तरखण्डाजादेशस्थानिवद्भावस्याभावकल्पनापरग्रन्थाद्यसङ्गतिः; आयादेशे सवर्णाच्त्वसम्भावनायामप्याकारनिमित्तकस्येयङः सिद्धेरिति वाच्यम् ? स्थानी न निवृत्तः आदेशो न जात इति सम्भावनायां यत्प्राप्तं तद्भवति यन्न तन्नेति तात्पर्यात् । *निगाल्यत इति* । अत्र "अचि विभाषा" इति लत्वम् । *पटयतीति* । अत्र टिलोपस्य

त्यादि । स्थानिनिमित्तकं भवत्यादेशनिमित्तकं नेति च तदर्थः । लघूपधत्वसम्पादनद्वारा लोपनिमित्तिका वृद्धिरित्याहुः ।

स्थानिभूतादच इति । सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽवधित्वमिति भावः । "पूर्वविधौ" इत्यस्य पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये इत्यर्थः । तेन पूर्वपरयोर्विधौ न । तेन 'आरतुः'

---

स्थानिवद्भावादुपधावृद्धिर्न ।

स्थानिनि सतीत्यस्य परमार्थं स्पष्टयति—*स्थानिनिमित्तकमित्यादिना* । नन्वेवं पटयतीत्यत्र वृद्धेर्लोपनिमित्तकत्वाभावात्कथं तत्प्रतिबन्धकः स्थानिवद्भाव इत्यत आह—*लघूपधत्वसम्पादनद्वारेति* । ननु सूत्रे श्रवणमज्वत्परस्यापीति तस्यावधित्वे सूत्राश्रुतादेशावधित्ववद्वैयाकरण इत्यत्रायापत्तिर्दुर्वारैवेत्यत आह—*व्याख्यानाच्चेति* । व्याख्यानञ्च "किरतौ लवने" इत्यादिनिर्देश एव । अन्यथा निमित्तात्पूर्वस्यौकारस्यावादेशे कर्त्तव्ये गुणस्य स्थानिवत्त्वेन तदसङ्गतिः स्पष्टैव । "अचः पूर्वत्वविज्ञानाद्" इति वार्त्तिकमपि व्याख्यानं बोध्यम् । *तस्यैव*—अच एव । *पूर्वसम्बन्धिन्येवेति* । पूर्वस्येति षष्ठ्या कार्ये कर्त्तव्य इत्यस्याक्षेप्तुं शक्यत्वेन व्यर्थाद्विधिग्रहणादिति भावः । यद्यपि भाष्ये विधिग्रहणस्य समासद्वयलाभार्थत्वमुपपाद्य 'प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति' इत्यादिना समासद्वयप्रतिपाद्यार्थलाभस्यान्यथासिद्धिमुपपाद्य विधिमात्रे स्थानिवत्त्वं यथा स्यादित्यादिना प्रयोजनान्तरं प्रतिपादितम् । विधाविति योगविभागेन स्थानिवदेव यथा स्यादिति नियमात्स्वाश्रयप्रयुक्तकार्यनिवृत्तिरपि भवतीति भावोऽप्याविष्कृतः प्रदीपोद्द्योतयोः, तथाऽपि पूर्वसूत्राद्विधावित्यनुवर्त्य वाक्यभेदेन व्याख्यायोक्तार्थलाभसम्भवे पुनर्विधिग्रहणस्य पूर्वसम्बन्धिन्येव विधावित्यर्थज्ञापकत्वमविरुद्धमिति कौस्तुभे स्पष्टम् । 'विधिग्रहणसामर्थ्याच्चैतदर्थलाभ' इत्युद्द्योतेऽप्युक्तम् ।

केचित्तु—पर्याप्तिभानस्यौत्सर्गिकत्वेन नात्र ज्ञापकस्योपयोगः; ध्वनितञ्चैतत्तदनुपन्यासपूर्वकनिरुक्तार्थस्थापनेन भाष्यकैयटयोः । अस्वरससूचकाहुरिति दानेनोद्द्योते चेति वदन्ति । *आरतुरिति* । ननु पूर्वसम्बन्धिन्येवेति ज्ञाप्यमपि माऽस्तु; "ऋच्छत्यृताम्" इत्यत्र ऋकारप्रश्लेषोऽपि माऽस्तु, ऋ ऋ अतुसिति स्थिते सवर्णदीर्घे बाधित्वाऽऽङ्गत्वादुरिति "अत आदेः" इति दीर्घे चोत्तरखण्डे यण्या-

रतुरित्यादिसिद्धेः।

न च आ ऋ अतुसिति स्थिते परत्वात्पूर्वस्थितनिमित्तकत्वेनाऽन्तरङ्गत्वाच्चादुगुणेऽरतुरिति स्यात्; पुनः "अत आदेः" इति दीर्घस्तु न सम्भवति, आसप्तमाध्यायसमाप्तेरङ्गाधिकारात्प्रथमप्रवृत्त्याश्रितशब्दसमुदायघटकमात्रोद्देश्यकविकारागमातिरिक्ताघटितोद्देश्यकत्वेन सकृत्प्रवृत्तेरिति वाच्यम्? "अत आदेः" इत्यस्य पररूपापवादत्ववदानृज इत्यादौ गुणस्यापि प्राप्त्या तदपवादत्वस्याप्यवश्याभ्युपेयत्वेन आरतुरित्यादौ गुणपररूपैतदन्यतराप्राप्तियोग्येऽचरितार्थेन कृते वाऽन्यतरस्मिन्नन्तवद्भावेन चरितार्थेन "अत आदेः" इति दीर्घेण गुणस्य तक्रन्यायेन बाधाद्दीर्घोत्तरं तदप्रवृत्तेरिति चेद्? न। अर्त्तेर्लिटि क्सौ ऋ वसिति स्थितौ कृतद्विर्वचनैकाचोऽभावेन "वस्वेकाजाद्" इत्यस्याप्राप्त्या द्वित्वे चैकाच्त्वाभावात्तदप्राप्त्या उरति "अत आदेः" इति दीर्घेऽपि गुणस्य तक्रन्यायेन बाधादप्रवृत्तेः आऋवानित्यापत्तेः। इष्यते तु ऋ ऋ वसिति स्थिते उरति "अत आदेः" इति दीर्घे उत्तरत्र "ऋच्छत्यृताम्" इति गुणे सवर्णदीर्घे कृतद्विर्वचनैकाच्त्वादिटि आरिवानिति। तदर्थम् ऋग्रहणस्यावश्यकत्वेन प्रकृतज्ञाप्यस्याप्यारतुरित्यर्थमावश्यकत्वात्।

स्यादेतत्, अभ्यासकार्ये तदुत्तरखण्डाजादेशस्य स्थानिवत्त्वनिषेधादेवारतुरिति सेत्स्यति। न चाभ्यासत्वावच्छिन्नोद्देश्यताककार्य एव तन्निषेधोऽस्त्विति वाच्यम्? कटीत्यत्र प्रश्लिष्टस्यायतेर्लिटि इयतुरित्यत्रोत्तरखण्डस्थयणादेशस्य स्थानिवत्त्वेनाभ्यास इको यणापत्तेः। न चैतदनुरोधेनाभ्यासपर्याप्तोद्देश्यताककार्य एव निषेधोऽस्तु। अत एव विव्यतुरित्यत्र "उपधायाञ्च" इति दीर्घप्रतिबन्धकस्थानिवत्त्वस्य न निषेध इति वाच्यम्? अभ्यासकार्येत्यादेः परिभाषात्वेन यथोद्देशपक्षे "अभ्यासस्यासवर्णे" इत्येतद्देशीयत्वेन तदुपस्थित्या "उपधायाञ्च" इत्यस्यासिद्धत्वेन तत्र कर्त्तव्ये तदप्रवृत्त्या पर्याप्तिनिवेशस्य फलाभावात्। एतेन एतेर्लिटि ईयतुरित्यत्र यणादेशस्य स्थानिवद्भावात्सवर्णदीर्घाभावः फलमिति कौस्तुभोक्तमपि प्रत्युक्तम्। किञ्चारतुरित्यत्र ऋ अतुसिति स्थिते द्वित्वात्परत्वाद् "ऋच्छत्यृताम्" इति गुणे ततो द्वित्वेऽभ्यासाकारस्यानादिष्टादचः पूर्वत्वेन न स्थानिवत्त्वप्रसक्तिः। न च "द्विर्वचनेऽचि" इति निषेधः शङ्क्यः। द्वित्वनिमित्ततापर्याप्त्यधिकरणघटकाच्पर्याप्तनिमित्तदलप्रविष्टविषयताकाजादेशस्यैव तेन निषेधात्। तन्निषेधेन पूर्वं द्वित्वेऽपि प्रतिपदविधित्वेनान्तरङ्गत्वादपवाद-

इत्यादौ "ऋच्छत्यृताम्" (पा० सू० ७-४-११) इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम् । वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रम् । एकस्योक्तोऽर्थः, द्वितीये भावे किः । सम्बन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः । विधिर्भावः पूर्वसम्बन्धिभावे तत्स्थितौ स्थानिवदित्यर्थः । अत एव 'ऐनयः' इत्यादौ "यस्येति च" (पा० सू० ६-४-१४८) इति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्यायप्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थितिः । अत एव "न पदान्त"

---

त्वाच्च पूर्वं गुणे तत उरिति अकारस्यानादिष्टादचः पूर्वत्वस्य दुर्वारत्वाच्चेति चेत् ? तर्हि श्लेष्मघ्नः इत्यत्र संयोगसंज्ञायां कर्त्तव्यायामल्लोपस्य स्थानिवत्त्वेन गुरुत्वाभावे प्लुतो न स्यादिति भाष्योक्तमेव फलमवधेहि । एवमर्त्तेर्लङि आर्च्छदित्यत्र ऋच्छादेशस्य स्थानिवत्त्वेन ऋवृद्ध्या "आटश्च" इति वृद्ध्यापत्तौ छश्रवणानापत्तिः । सुमनायेति क्यङन्तात्क्विपि अल्लोपयलोपयोस्तत औपरे सुमनावित्यत्राल्लोपस्य स्थानिवद्भावाद् वृद्ध्यनापत्तिः । हयशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि हशब्दस्येन्द्रशब्देन समासेऽल्लोपस्य स्थानिवत्त्वाद् गुणानापत्तिः । पटुशब्दस्यानुशब्देन समासे पट्वनुशब्दाच्छसि पट्वन इत्यत्र संयोगसंज्ञायां यणादेशस्य स्थानिवत्त्वेन तदभावे "न संयोगाद्" इति निषेधानापत्तिरित्यादीनि विपुलानि फलान्याकलनीयानीत्यलम् ।

*नकारस्थितिरिति*। यत्तु आचारिणः-वस्तुतस्तु धर्मिग्राहकमानात्सन्नियोगशिष्टन्यायो लुग्विषये इति नात्र दोष इति तन्त्रवैयर्थ्यमिति । यच्च तदनुयायिनः-सन्नियोगशिष्टन्यायस्य लुग्विषयत्वादेव खनतेः "ई च खन" इति क्यप्सन्नियोगशिष्टस्येकारस्य गुणेनापायेऽपि खेयमित्यत्र न क्यपोऽपायः, नापि तृतीयशब्दादीकक्प्रत्यये 'तार्त्तीयीक' इत्यत्र वृद्ध्या सम्प्रसारणस्यापायेऽपि तत्सन्नियोगशिष्टस्य तीयप्रत्ययस्यापायः, न वा फलधातोः क्ते निष्पन्नात्फुल्लशब्दादिञि फौल्लिरित्यत्र वृद्ध्या उकारापाये तत्सन्नियोगशिष्टस्य निष्ठालत्वस्यापायः । न चैतेषु गुणादिभिर्विकारेऽपि नापाय ईकारादीनां; न हि वर्णविकारोऽपायपदव्यवहारविषयः; अपायात्पृथग्विकारस्य भाष्ये गणनादिति वाच्यम् । एवमपि धिनुत इत्यत्रोप्रत्ययसन्नियोगशिष्टस्याकारस्यापाये उप्रत्ययस्यापायापत्तेर्लुग्विषयत्वकल्पनापत्तेरावश्यकत्वादित्युपवर्णयन्ति; तदन्ये न मन्यन्ते । तस्य लुग्विषयत्वे वातशब्दाद् "वातातीसा-

( पा० सू० १-१-५८ ) सूत्रे पञ्चेन्द्राण्यो देवता अस्य 'पञ्चेन्द्रः' इति 'लुकि न स्थानिवत्' इत्यस्योदाहरणं दत्तं भाष्ये । अन्यथा तत्र पूर्वत्वेन दृष्टस्य सम्बन्धिनः कस्यचिद्विधेयस्याभावात्स्थानिवत्त्वाप्राप्तिरेवेति तदसङ्गतिः स्पष्टैव । प्रकृतसूत्रेऽपि भाष्ये "कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं सङ्गृहीतमिति भावसाधनो विज्ञास्यते पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति स्थानि-

---

राभ्यां च" इत्यनेन वुगागमसन्नियोगशिष्ट इन्प्रत्यये वातकिन्शब्दादप्रत्ययेऽणप्रत्यये "नस्तद्धित" इति टिलोपे तत्सन्नियोगशिष्टस्य कुकोऽप्यपाये इष्टस्य वात इत्यस्यासिद्धिप्रसङ्गात्। धिनुत इत्यत्र तु न दोषः, धर्मिग्राहकमानात्सन्नियोगशिष्टप्रत्ययस्यापाय एव तत्प्रवृत्तेः स्वीकारादिति दिक् ।

*कस्यचिद्विधेयस्याभावादिति*। इदं चिन्त्यम्; "यस्य" इति लोपस्य विधेयस्य सत्त्वादित्याचारिणः ।

भट्टास्तु—न च "यस्य" इति लोपस्तथा; स्पष्टं चेदं तत्रैव प्रदीपोद्द्योतयोरिति वाच्यम् । वार्त्तिकमते कतीत्यादौ स्थानिवत्त्वेन गुणादिवारणाय "न लुमता" इति सूत्रे बाध्यसामान्यचिन्ताऽवश्यम्भावेन "अचः परस्मिन्" इत्यस्यापि निषेधात् । आनुकि तु न निषेधः; प्रत्यये परतः पूर्वस्य कार्याभावात् । न च भाष्यमते प्रत्ययलक्षणसूत्रस्य नियमार्थत्वात् कतीत्यादौ स्थानिवत्त्वाप्राप्त्या बाध्यसामान्यचिन्ताऽऽश्रयणे न किमपि फलमिति वाच्यम्? वार्त्तिकोदाहरणस्य वार्त्तिकरीत्यैव दातव्यत्वात् , नियमत्वमिति भाष्यमतेऽपि निषेधमुखेन प्रवृत्तिरिति पक्षे बाध्यसामान्यचिन्ताया आवश्यकत्वाच्च । विधिमुखेन प्रवृत्तिरिति पक्षेऽपि श्रविष्ठादिपरित्यागेनानुकपर्यन्तं धावतो भगवत आनुक एवाभिप्रायविषयत्वात् । एवंस्थिते चिन्त्यमिति ब्रुवन्तो मान्या इत्याहुः । श्रीधरोऽप्येतदेवान्वमन्यत ।

केचित्तु—नात्र तन्त्रोपयोगः; अस्तु कर्मसाधन एव सन्नियोगशिष्टन्यायप्रवृत्त्यभावे विधावेव स्थानिवत्त्वेन 'पेनेय' इत्यादिसिद्धेः। परिभाषायामतिदेशप्रवृत्तिस्तु वेतस्वानित्यत्रैकदेशविकृतन्यायप्राप्तरुत्वाभावसाधक-"अचः परस्मिन्" इति स्थानिवत्त्वायावश्यकी। भावसाधनो विज्ञास्यत इति भाष्यन्त्वेकदेशयुक्तिः । "असिद्धवत्"सूत्रेण सिद्धस्यायमासान्नित्यादेस्तत्फलत्वेनोपन्यासेन दृढतरफलाभावादिति

वत्" इत्युक्तम् । तत्र भावसाधन इत्यस्य सोऽपीत्यर्थः । पूर्वत्वञ्च व्यवहिताव्यवहितासाधारणम् , अव्यवहितग्रहणे मानाभावात् स्वरे निषेधाच्च । तेन 'पटयति' इति सिद्धम् । प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वप्राप्तिः ।

न पदान्त ( पा० सू० १-१-५८ ) अत्र द्विर्वचनसवर्णादिग्रहणं वतिघटितान्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थमिति ।

---

वदन्ति ।

ज्योत्स्नाकृतस्तु—"अपरविधौ" इतिवार्त्तिकस्य स्वविधावपि स्थानिवद्भावफलकस्य प्रत्याख्यानाय भावसाधनविधिशब्देन कर्मषष्ठ्या समासं विधायायन्नासन्नित्यादाविणस्त्योर्यणल्लोपयोः कृतयोर्धिन्वन्तीत्यादौ विकरणोकारस्य यणि च कृते आड् भविष्यति, इट् च न भविष्यतीति भाष्यकृतोपसंहृतम् , न तु सम्बन्धसामान्यषष्ठ्यन्तेनापि; तादृशप्रयोजनानुपक्रमात् । सम्बन्धसामान्यषष्ठ्यां स्थानियोगत्वस्य स्वमतेऽनुवादेऽपि प्रवृत्त्यङ्गीकारेण तस्य दुर्वारत्वाच्चेति चिन्त्यमेतत् । 'ऐनयः' 'पञ्चेन्द्र' इत्यादौ तु न दोषः, अकृतव्यूहपरिभाषया नकारानुकोर्निवृत्त्या तयोः कर्त्तव्ययोः स्थानिवद्भावप्रवृत्तेः सुलभत्वादित्याहुरित्यलम् । *प्रकृते इति* । सुद्ध्युपास्य इत्यत्रेत्यर्थः ।

*न पदान्तद्विर्वचन* । ननु "अचः परस्मिन्" इत्येतत्प्रति त्रिपादीस्थानामसिद्धत्वमित्येतन्मूलकेन "पूर्वत्रासिद्धे न स्थानिवत्" इत्यनेनैवेष्टसिद्धौ द्विर्वचनसवर्णादिग्रहणं व्यर्थमत आह—*अत्र द्विर्वचनसवर्णादिग्रहणमिति* । *वतिघटितेति* । एतद्विशेषणादेव नालिङ्गपरिभाषायास्त्रिपाद्यां प्रवृत्तिः । अन्यथाऽतिदेशत्वाविशेषात्तस्या अपि त्रिपाद्यां प्रवृत्त्यापत्तौ सर्वेषामित्यत्र षत्वस्य, हरीणामित्यत्र णत्वस्य, राज्ञ इत्यत्र चुत्वस्य, भविष्यतीत्यत्र षत्वस्य, पिपठीष्वित्यत्र ष्टुत्वस्य चानापत्तेः; सुड्डुडल्लोपेट्षत्वानां तत्तदृष्ट्याऽसिद्धत्वात् । *अन्येति* । वतिघटिता येऽचः परस्मिन्नित्येतस्मादन्येऽतिदेशास्तेषामित्यर्थः । अत्रान्यपदं फलितार्थपरम् । "अन्यत्र धातुग्रहणे तदादिविधिः" इत्यादाविव बोध्यम् । भाष्यन्तु 'वतिघटितातिदेशानां त्रिपाद्यामपि प्रवृत्तिः' इत्येव । अन्यथा ज्ञापनोत्तरमपि स्वांशे चारितार्थ्यस्य दुर्निरूपत्वात् । न चैवम् "अचः परस्मिन्" इत्यस्यापि द्विर्वचनसवर्णादिभ्योऽन्यत्र त्रिपाद्यां प्रवृत्त्यापत्तिः, तथा च पाचयतेः क्तिचि पाक्तिः,

याजयतेर्याष्टिः, लेहयतेर्लेटिः, दोहयतेर्दोग्धिः, तक्षयतेः क्विपि तगित्यादौ कुत्वषत्वढत्वधत्वसंयोगान्तलोपेषु कर्त्तव्येषु णिलोपस्य स्थानिवत्त्वापत्तेरिति वाच्यम्। द्विर्वचनसवर्णादिग्रहणस्य प्रत्याख्यानपक्षात्फलैक्यायारम्भपक्षेऽपि त्रैपादिकमात्रोपलक्षणत्वेनादोषादित्येके।

उदयङ्करभैरवमिश्रौ तु–वतिघटितानामन्येषामतिदेशानां त्रिपाद्यां प्रवृत्तिरेव, "अचः परस्मिन्" इत्यस्य तु क्वचिदप्रवृत्तिः क्वचित्प्रवृत्तिरपि। तेन "तस्य दोष" इति वचनस्यापि सङ्ग्रहः। क्वचिदपि न प्रवृत्तिरिति सम्भावनानिराकरणार्थं च द्विर्वचनादिग्रहणस्य चारितार्थ्यमिति सिद्धान्तयामासतुः। अतिदेशानामिति बहुवचनेन स्थानिवद्न्तादिवदाद्यन्तवदित्यादीनां त्रिपाद्यां प्रवृत्तिरिति लभ्यते, तत्राद्यस्य फलं राम इति। द्वितीयस्य अमी क्षीरपेणेत्यादौ मीत्वणत्वयोः कर्त्तव्ययोरदश्शब्दत्वैकाजुत्तरपदत्वयोरतिदेशः फलम्। तृतीयस्य तु हे अँ! इत्यत्र 'अ' इत्यस्य "अणोऽप्रगृह्यस्य" इत्यनुनासिके कर्त्तव्ये पदान्तत्वातिदेशः।

ननु वतिघटितेति विशेषणे "प्रत्ययलोप"सूत्रस्य त्रिपाद्यामप्रवृत्त्यापत्तौ "रोऽसुपि" इत्यनेन सुपि रत्वप्रतिषेधे कर्त्तव्ये 'दीर्घाह्नो निदाघ' इत्यादौ प्रत्ययलक्षणानुपपत्तिरिति चेद्? न। स्थानिवदित्यनुवृत्त्या तस्यापि वतिघटितत्वात्। न चैवमबान्धामित्यत्र "झलो झलि" इति सलोपस्य प्रत्ययलक्षणेन भभावापत्तिरिति वाच्यम्? साहचर्यस्यासार्वत्रिकत्वेन स्वसाहचर्येण सादिप्रत्ययस्यैव ग्रहणमित्यत्र नियामकाभावेन सत्वस्य प्रत्ययासाधारणत्वाभावस्य तत्रैव शेखरे प्रतिपादितत्वात्। ननु वतिघटितेति विशेषणं माऽस्तु, अतिदेशानां सूत्राणां त्रिपाद्यां प्रवृत्तिरित्येव ज्ञाप्यमस्तु। अत एव नान्तरङ्गपरिभाषायास्त्रिपाद्यां प्रवृत्तिः; न वा प्रत्ययलक्षणसूत्रस्य त्रिपाद्यां प्रवृत्त्यर्थं स्थानिवदित्यनुवृत्तेरावश्यकत्वम्। न चैवं "व्यपदेशिवद्" इत्यस्यातिदेशसूत्रत्वाभावात् त्रिपाद्यामप्रवृत्त्यापत्तावचैषीदित्यादौ सिचः प्रत्ययावयवत्वात्षत्वं न स्यादिति वाच्यम्? तस्य लोकसिद्धत्वेन सापादिकत्वाभावेन ज्ञापकमन्तरेणापि त्रिपाद्यां प्रवृत्तेः सौलभ्यात्। "आद्यन्तवत्"सूत्रे भाष्ये सञ्चारितत्वेन तद्देशीयत्वव्यवहारेऽपि प्रत्ययावयवे प्रत्ययत्वव्यवहारेण "आदेशप्रत्यययोः" इति सूत्रे प्रत्ययपदस्य तदवयवे लक्षणाया अभावेन षत्वस्य सिद्धेश्चेति चेद्? न। एवंसति 'स्वरविधौ व्यञ्जनमविद्यमानवद्' इत्यस्य "नोत्तरपद" इतिसूत्रीयपृथिव्यादिपर्युदासज्ञापितस्य त्रिपाद्यामप्रवृत्त्यापत्तावश्व इत्यादावुदात्तादकारात्परस्यानुदात्तस्यान्त्यस्याकारस्य "उदात्तादनुदात्तस्य स्वरितः" इत्यनेन त्रैपादिकेन स्वरितत्वे कर्त्त-

र्थम् । तेन 'रामः' इत्यादौ विसर्गादिसिद्धिः । अत्र विधिशब्दो भावसाधनः । पदान्तेत्यत्रान्तशब्दश्चरमावयववाची । कर्मषष्ठ्या समासः । तेन 'एषो यन् हसति' इत्यादौ "एतत्तदोः" (पा० सू० ६-१-१३२) इति सुलोपो न । इणः शतरि 'यन्' इति रूपम् ।

---

ष्येऽप्रवृत्त्यापत्तेः । न चैवमपि "प्रातिपदिकग्रहण" इत्यस्य वतिघटितत्वाभावात् त्रिपाद्यामप्रवृत्त्यापत्तावयस्कुम्भीत्यत्र सत्वं न स्यादिति वाच्यम् ? फलानुरोधेन प्रातिपदिकत्वलिङ्गविशिष्टमित्याकारकत्वचनज्ञापनेनादोषात् । *राम इत्यादौ विसर्गादिसिद्धिरिति* । रुत्वे कृते स्थानिवत्त्वेन सुप्त्वात्पदत्वेनेत्यादिः । अन्यथा "पूर्वत्रासिद्धीय" इत्यस्य पदत्वादिद्वारकपरम्परयाऽपि त्रैपादिककार्यसाधकस्थानिवत्त्वनिषेधकत्वस्य वक्ष्यमाणत्वेन तदनापत्तेः । "अनल्विधौ" इतिनिषेधस्तु यथा नेह प्रवर्त्तते, तथा प्रतिपादितमधस्तात् । "इदुदुपधस्य" इतिसूत्रेऽप्रत्ययस्येति सामर्थ्यात्तु न विसर्गसिद्धिः; मिदेर्णुपचि ततो णयन्तात्क्विपि मेदुः करोतीत्यादौ षत्वव्यावृत्तये तस्य चारितार्थ्यादिति केचित् ।

वस्तुतस्तु तत्रापि प्रत्ययलक्षणं विना पदत्वाभावाद्विसर्गाप्राप्त्या तदपि ज्ञापकं भवत्येव । एवं "खरवसानयोः" इत्यपि ज्ञापकमवगन्तव्यम् ।

अन्ये तु—रामस्त्रुत्तिपदत्वस्यानुमानिकस्थानिवत्त्वेनातिदेशाद्विसर्गसिद्धिरिति वक्तव्यम् । अत एवैकदेशविकृतन्यायेन विसर्गसाधनपराच्छेखरादपि न विरोधः । लौकिकैकदेशविकृतन्यायेन तु सुप्त्वमानेतुमशक्यम् , समुदायविकारात् । न वा पदत्वं तन्न्यायसाध्यम् , तदानयेन तदप्रवृत्तेरन्यत्र स्पष्टं प्रतिपादितत्वादिति प्राहुः ।

*भावसाधन इति* । तथा च कैयटरीत्या पदान्तेति भावप्रधाननिर्देशात्पदान्तत्वकर्मकविधौ निषेध इत्यर्थात्पदसंज्ञाया अपि पदान्तत्वकर्मकविधित्वान्निषेधो भवति । विवरणोक्तरीत्या तु द्विर्वचनादिसाहचर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणौचित्यात्पदान्तकर्मकविधौ निषेध इत्यर्थः । इह विधेयस्य पदान्तत्वं स्थानिद्वारैव वाच्यम् । यद्यप्येवं पदसंज्ञा न चरमावयवः; तथाऽपि तस्याः कार्यार्थत्वात्कार्यस्य च रुत्वादेस्तत्त्वान्न दोषः । पदचरमावयवस्य विधेः साक्षात्साधकस्य पदत्वस्यापि तत्त्वेन ग्रहणमिति तु परमार्थः । कर्मसाधने तु पदान्तशब्देन कर्मधारयो वा स्याच्छेषषष्ठ्यन्तेन षष्ठीतत्पुरुषो वा । नाद्यः,

तत्र यणः स्थानिवत्त्वात्। उत्वे च न स्थानिवत्, अनेन निषेधात्। स्पष्टश्चेदं भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितम्। अत्र

विधिशब्दस्य क्रियाशब्दत्वेन पूर्वनिपातापत्तेः। नान्योऽपि, एषो यन्नित्यादेरसिद्धिप्रसङ्गात्। द्वन्द्वनिर्दिष्टेषु द्विर्वचनादिष्वनन्वयापत्तेश्चेति भावः। *स्थानिवत्त्वादिति*। निषेधस्तु न; लोपस्यानवयवत्वेन पदान्तकर्मकविधेरभावादिति भावः। *उत्वे च न स्थानिवदिति*। ननु रोः स्थानिभूतादचः पूर्वत्वाभावादुक्तिसम्भव एव कथमिति चेद् ? न। उत्वदृष्ट्या रोरसिद्धत्वेन सामर्थ्यात्तद्बुद्ध्या सकार एवोत्वप्रवृत्तेस्तस्य तथात्वात् "तत्स्थानापन्न" इतिन्यायाच्चेति श्रीधरः।

नन्वेषो यन्निति न फलं सम्भवति, तत्र परत्वान्नित्यत्वाच्च सुलोपस्य न्याय्यत्वात्। न च तत्र स्थानिवद्भावः, "पादस्य लोप" इति लोपस्येव सुलोपस्यापि पदचरमावयवत्वात्। इष्टानुरोधेनात्र पदसंस्कारपक्षस्यैवाश्रयणेन सोः स्थानिभूतादचः पूर्वत्वेनादृष्टत्वाच्च। अत एव 'य एवास्मि स सन्यज' इतिश्रौतप्रयोगः, 'एष यन्' इति छान्दोग्यप्रयोगश्च सङ्गच्छते। लोकेऽपि स सन्नित्येव प्रयुज्यते, न तु सः सन्निति।

यत्तु—स्थानिवत्त्वस्य निषेधेऽपि पूर्वस्थितयकारनिमित्तकत्वेनान्तरङ्गे सुलोपे कर्त्तव्ये परस्थितनिमित्तकयणोऽसिद्धत्वेन सुलोपविरहाद् 'एषो यन्' इत्येवेष्टमुपपन्नमित्याहुः; तन्न। तदन्तरङ्गत्वस्य समकालप्राप्तिकस्थलविषयकत्वात्। कथमन्यथा "हशि च" इत्युत्वमप्यत्र सम्पादितं स्यादिति विभाव्यताम्। न च वृक्षवामाचष्टे वृक्षविति प्राचोक्तमपि फलं युक्तम्। प्रातिपदिकादेव णिजुत्पत्तेः सिद्धान्तात्कर्मसाधनेऽपि दोषाभावात्। "पादस्य लोप" इतिवल्लोपस्यावयवत्वे भावसाधनेऽपि निरुक्तरीतेरेवानुसर्त्तव्यत्वाच्च। न च वकारान्तप्रकृतिकविभक्तिनिबन्धनपदत्वेन कर्मसाधने निषेधापत्तेर्भावसाधन आश्रयणीय इति वाच्यम् ? निषेधे जात एव वान्ते पदत्वं वान्ते पदत्वजात एव च निषेधः प्रवर्त्तत इत्यन्योऽन्याश्रयान्निषेधाप्राप्त्या वलोपाभावस्य सिद्धत्वात्। बौद्धस्यावयवत्वस्याभावेऽप्यभ्युपगमादेव च भानोः भान्वस्तत आचारक्विबन्ताद्धुनिपि अल्लोपे भान्वा इत्यत्र यणिष्पन्नवकारस्य वलि लोपे कर्त्तव्ये प्राप्तस्याल्लोपस्य स्थानिवद्भावस्य निषेधाभावः। देवदत्तस्य नः देवदत्तनः तत आचक्षाणण्यन्ताद्देराचि टिलोपणिलोपयोर्देवदत्तन इति, ततष्टाविभक्ताविनादेशे देवदत्तनेनेत्यत्र एनशब्दे

पदेऽन्त इति सप्तमीसमासो भाष्ये उक्तः। तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्त्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति 'वेतस्वान्' इत्यादौ न दोषः। न चैवमपि

---

परादिवत्त्वेन स्वादित्वाद् भसंज्ञायामल्लोपोऽन इत्यल्लोपे कर्त्तव्ये प्राप्तस्य टिलोपस्य स्थानिवत्त्वस्य निषेधाभावश्च न भावसाधनस्य फलम्। अत एव नैतानि भावसाधनस्य फलानि भाष्यकारोऽप्युपन्यास्थदिति चेद्? न। 'षडिक' इत्यस्य भाष्योक्तस्य फलस्य सम्भवात्। तत्र हि— षडङ्गुलिशब्दाद् "बह्वचो मनुष्यनाम्नष्ठज्वा" इति ठचि कृते सापादिककार्यप्रवृत्तियोग्यतायां पूर्वं अश्वत्वाप्रवृत्तावेकादेशे "ठाजादावूर्ध्वम्" इति ङ्गुलिशब्दस्य लोपे "यस्य" इति लोपे कृते कर्मसाधने इकनिमित्तकभत्वेन समासान्तर्वर्त्तिविभक्तिनिमित्तकपदत्वस्यापि समानावधिकत्वान्निवृत्त्यापत्तौ जश्त्वासिद्धिः। न च भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरिति वाच्यम्। साक्षात्परम्परया वा पदान्तस्थानिकविधिप्रापकप्रतिबन्धकस्थानिवत्त्वस्य निषेधेन भत्वेऽपि तन्निषेधात्। पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्द्वारकपरम्पराया वक्तुमशक्यत्वेनान्यद्वारिकाया अपि ग्रहणात्।

भावसाधनत्वे तूपस्थितपदत्वद्वारिकैव परम्परा गृह्यत इति भत्वे निषेधाभावेन स्थानिवत्त्वादकारान्ते भत्वेऽपि षान्ते पदत्वस्याव्याघातेन न दोषः। ननु भावसाधनस्य विधिशब्दस्योपादाने वेतस्वानित्यत्र वेतसशब्दात् "कुमुदनड" इति ड्मतुपि टिलोपे कृते कैयटरीत्या स्वादौ पूर्वं पदमितिपदसंज्ञायां सकारः पदान्तत्वं प्रतिपद्यत इति पदान्तताया विधीयमानत्वाद्द्विवरणरीत्या रुत्वस्य पदचरमावयवत्वेन तन्निष्पादकपदत्वस्य कर्त्तव्यत्वाच्च स्थानिवत्त्वनिषेधाद्रुत्वप्रसङ्गः। न च "तसौ मत्वर्थे" इति भसंज्ञया पदसंज्ञाया बाधान्न दोष इति वाच्यम्। भसंज्ञायां कर्त्तव्यायामल्लोपस्य स्थानिवत्त्वात्। न च भसंज्ञाप्रतिबन्धकस्थानिवद्भावस्य सान्तधर्मिकपदत्वसम्पादनद्वारा रुत्वसम्पादकत्वेन निषेधः स्यादिति वाच्यम्। पदत्वमात्रद्वारकपरम्पराया एव सोढव्यत्वस्य प्राक्प्रतिपादितत्वादित्यत आह—*पदे अन्त इत्यादि*। पदे परतोऽन्तकर्मकविधावित्यर्थः। *परपदस्थाजादेशस्येति*। अन्तशब्दस्य चरमावयववाचकतया पदे परतश्चरमावयवः पूर्वपदस्यैव सम्भवतीति तत्साधकः प्रतिबन्धको वा स्थानिवद्भावः परपदस्थाजादेशस्यैवेति तदेकवाक्यतया षष्ठीसमासपक्षेऽपि तादृश एवाजादेशो

''पूर्वत्रासिद्धीये न स्थानिवत्'' (वा०वा०) इति निषेधोऽत्र दुर्वारः। पदेऽन्त इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन ''पूर्वत्रासिद्धे'' इत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपा

---

गृह्यत इति भावः।

ननु माऽस्तु प्रत्यासत्त्याश्रयणं वेतस्वानित्यादौ पदे परतो अन्तकर्मकविधौ निषेध इत्यर्थेनापि निषेधाभावस्य सिद्धेरिति चेत्? न। औपदेशिकनान्ताद् ध्रन्धातोर्णिजन्तात् क्विपि सम्बुद्धौ हे ध्रानित्यस्येवशब्देन सह प्रयोगे 'ध्राणइव' इत्यत्र ''पदान्तस्य'' इति णत्वनिषेधप्रतिबन्धकस्थानिवत्त्वस्य पदे परे अन्तकर्मकविधौ कर्त्तव्ये निषेधाभावाय प्रत्यासत्त्याश्रयणस्यावश्यकत्वात्। न चात्र णत्वनिषेधस्याभावरूपत्वेन पदचरमावयवत्वाभावादेव निषेधाप्राप्तेर्णत्वनिषेधप्रतिबन्धकस्थानिवद्भावस्य परम्परया पदचरमावयवरुत्वसाधकत्वेऽपि साक्षात्पदत्वमात्रद्वारकपरम्परया वा पदचरमावयवसाधकत्वाभावान्निषेधाप्राप्तिश्च नेदं प्रत्याहाराश्रयणफलमिति वाच्यम्। णत्वविधायकशास्त्रे ''अपदान्तस्य मूर्द्धन्य'' इत्यधिकृत्य ''पदान्तस्य'' इत्यस्य प्रत्याख्यानेन स्थानिवद्भावस्यापदान्तत्वसम्पादनेन साक्षादेव णत्वसाधकत्वेन फलत्वसम्भवात्। एवं पञ्चमीसमासकल्पे 'प्रत्यैषिषन् ब्राह्मणा' इत्यपि फलं बोध्यम्। तत्र हि चङा सह पररूपस्य स्थानिवत्त्वेनाभ्यासात्परस्य झरभावाज्जुस् न। प्रत्यासत्त्यनाश्रयणे तु ब्राह्मणरूपे पदे परतो जुस्रूपान्तकर्मकविधौ कर्त्तव्ये निषेधापत्तौ जुसापत्तेः। एवं गृधातोर्णिजन्तात् क्विपि निगाल् देवदत्त इत्यत्र णिलोपस्य स्थानिवत्त्वेन ''अचि विभाषा'' इति लत्वसिद्धिः फलम्। अन्यथा देवदत्तरूपे पदे परे अन्तकर्मकविधौ कर्त्तव्ये स्थानिवत्त्वनिषेधापत्तेः।

श्रीधरस्तु भवार्थाणन्तान्माहिषाण्णिचि क्विपि 'माहिष् दृश्ते' इत्यत्र ''झलां जशोऽन्ते'' इति जश्त्वे स्थानिवत्त्वं भवत्येवेति फलमाह।

केचित्तु—'ध्राणइव' इत्यादीनां सिद्धये पदे परे अन्तकर्मकविधौ कर्त्तव्ये पदाद्यचस्थानिक आदेशो न स्थानिवदित्यर्थमाश्रयन्ति, तदसत्। परपदस्थाजादेशेत्यतोऽत्र लाघवाभावेन तत्यागे बीजाभावात्। *पूर्वत्रासिद्धीये न स्थानिवदिति निषेध इति*। तस्य साक्षात्परम्परया वा पूर्वत्रासिद्धीयकार्यप्रापकस्य तत्प्रतिबन्धकस्य च स्थानिवद्भावस्य निषेधकत्वादिति भावः। *पदचरमावयवविधायकाति-

रिक्तस्यैवेति*। नन्वयं ग्रन्थः पिपठीरिति प्रतीकस्थशेखरेण विरुद्धः। तत्र हि-'रुत्वेऽल्लोपो न स्थानिवत्, पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधादित्युक्तत्वादिति चेद्? अत्र भट्टाः—पदचरमावयवेत्यादेर्घात्वनवयवो यः पदचरमावयवस्तद्विधायकातिरिक्तेत्यर्थः । यद्वा, पदशब्देनात्र प्रत्यासत्त्या यस्यादेशस्य स्थानिवद्भावः प्रतिषिध्यते, तादृशादेशहेतुभूतप्रत्ययनिमित्तकपदसंज्ञावद् गृह्यते । तथा च न तेन ग्रन्थेन विरोधः; न वा तिरश्चा पिपठोः कल्पमित्यत्रापि दोष इत्याहुः।

श्रीधरस्तु—पदचरमावयवेत्यस्य तद्धितनिमित्तकलोपपरकपदचरमावयवेत्यर्थाद्विरोधं न्यरुणत् ।

आचारिणस्तु—"क्वौ लुप्तम्" इति न्यायेन पिपठीरित्यत्र स्थानिवद्भावनिषेधमुपेत्य सङ्कोचस्य यथाश्रुतविषयकत्वं व्यवस्थाप्य गर्दभयतेरप्रत्यये गर्दबित्यत्र जश्त्वादिप्रतिबन्धकस्य "क्वौ लुप्तम्" इति न्यायाविषयस्य टिलोपस्थानिवद्भावस्य निषेधानुपपत्तिमाशङ्क्य ङमतुप्प्रत्ययनिमित्तकपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन विशेषरूपेण सङ्कोचमाश्रित्य समादधुः; तच्चिन्त्यम्। 'षडिक' इत्यत्र षान्तधर्मिकभसंज्ञाप्रतिबन्धकस्थानिवद्भावस्य परम्परया त्रैपादिकजश्त्वसाधकस्य निषेधाप्त्तौ षान्तस्य भसंज्ञायां जश्त्वानुपपत्तेः ।

परे तु—पदचरमावयवेत्यादेः प्रत्ययविशिष्टो यः पदचरमावयवस्तद्विधायकातिरिक्तेत्यर्थः । वैशिष्ट्यञ्च-स्वप्रयोज्यपदसंज्ञावदुद्देश्यकत्व—स्वप्रयोज्यकार्यप्रयोज्यत्वाभ्याम् । तथा च वेतस्वानित्यादौ जश्त्वस्य निरुक्तोभयसम्बन्धेन मतुप्प्रत्ययविशिष्टत्वान्न तत्र पूर्वत्रासिद्धेति निषेधः । पिपठीरित्यादौ रुत्वादावेकैकसम्बन्धेन सुप्प्रत्ययस्य क्विप्प्रत्ययस्य वा वैशिष्ट्येऽप्युभयसम्बन्धेन वैशिष्ट्यविरहान्निषेधः सिद्ध इत्याहुः ।

यत्तु-"स्वादिषु" इति पदसंज्ञावतः तद्धितनिमित्तकपदसंज्ञावतो वा पदस्य सङ्कोच्यकोटौ प्रवेशाद्विरोधमवरुन्धन्ति; तदसत्। आद्ये-पिपठीर्भ्यामित्यत्र, अन्त्ये-पिपठोः कल्पमित्यत्र रुत्वप्रतिबन्धकस्थानिवत्त्वनिषेधानुपपत्तेः ।

यदपि प्रत्ययघटकसस्थानिकरुभिन्नपदचरमावयवविधायकातिरिक्तस्य अङ्गावयवलोपप्रयोजकप्रत्ययनिमित्तकपदत्वव्चरमावयवविधायकातिरिक्तस्य टिलोपप्रयोजकप्रत्ययप्रयोज्यपदत्वव्चरमावयवविधायकातिरिक्तस्य वा ग्रहणान्न दोष इत्याहुः; तदपि न। आद्ये,

दिकस्य ग्रहणात्। अत एव 'माहिष्मान्' इत्यत्र जश्त्वं न। सूत्रे ज- श्पदेन "झलां जश् झशि" (पा० सू० ८-४-५३) इत्यस्यैव ग्रह- णम्, चर्सन्निहितस्यैव ग्रहणौचित्यात्। कार्यकालपक्षेऽपि त्रि- पाद्यामन्तरङ्गपरिभाषा न प्रवर्त्तत इति वक्ष्यते, इति न तयाऽस्य

---

नासाशब्दादाचक्षाणण्यन्तात्क्विपि नाः इत्यत्र रुत्वे कर्त्तव्ये निष- धानुपपत्तेः। वेतस्वानित्यत्र सकारस्यापि "वेञस्तुट् च" इत्युणादि- सूत्रविहितासच्प्रत्ययघटकत्वेन तत्रापि निषेधापत्तेर्दुर्वारत्वाच्च। द्वितीये, विविट्कल्पमित्यादौ कल्पप्रत्ययस्याङ्गावयवसंयोगादिकलो- पप्रयोजकत्वेन निषेधानुपपत्तेः। अन्त्ये, 'षडिक' इत्यत्र षान्तवृत्तिभ- संज्ञाप्रतिबन्धकस्थानिवत्त्वनिषेधापत्तौ जश्त्वानुपपत्तेरिति दिक्।

*माहिष्मानिति*। "माहिषाच्चेति वक्तव्यम्" इति ड्मतुप्। *ज- श्त्वं नेति*। यत्तु वस्तुतो "झलां जशोऽन्त" इत्यत्र झलां पदस्य विशे- षणात्झलन्तपदस्यालोऽन्त्यस्य जशित्यर्थेन सिद्धेऽन्तग्रहणात्पदान्तस्यै- व झलो जश् भवति; न तु लोपे कृते पदान्तस्यापीत्यस्यार्थस्य क्रोडी- काराज्जश्त्वप्राप्तिरेव नेति ज्योत्स्नाकृतः; तन्न। भ्रस्जेर्णिचि क्विपि भ्रडित्यस्यासिद्ध्यापत्तेः। अत्र हि संयोगस्य लोपकृतमेव पदान्तत्वम्। किञ्च बुधमाचष्टे बुधयति बुधयतीति भुदित्यस्य सिद्धिर्न स्यात्। किञ्च ब्रह्मबन्ध्वेत्यत्र जश्त्वापादनपरं भाष्यमपि विरुध्येतेति भैरवमिश्राः।

ननु माहिष्मानित्यत्र जश्विधिं प्रति न स्थानिवदिति निषेधः स्यादत आह—*सूत्रे जश्पदेनेति*। *झलां जशित्यस्यैवेति*। अत एव पदा- न्तविधिं प्रति न स्थानिवदित्युपक्रम्य ब्रह्मबन्ध्वेत्यत्र जश्त्वं प्राप्नोती- त्युक्तम्। अन्यथा जश्पदेन निषेधस्य दुर्वारत्वात्प्रकृते विचारो निष्फलः स्यादिति बोध्यम्। *चर्सन्निहितस्यैवेति*। प्रकृतसूत्रे चर्सन्निहित- पाठेन यस्य जशश्चर्सन्निधानं तस्यैव ग्रहणमिति भावमाहुर्भैरवमि- श्राः। *सन्निहितस्यैव*—इत्यस्य सहचरितस्यैवेत्यर्थात्परनिमित्तक चर्साहचर्यात्परनिमित्तकजश एव ग्रहणमिति भाव इत्यन्ये। *सूत्रे जश्पदेनेति* प्रतीकमुपादाय आचारिणस्तु—इदं चिन्त्यम् गर्द्ध्वा- नित्यत्र जश्त्वानापत्तेरित्याहुः। नन्वन्तरङ्गे जश्त्वे बहिरङ्गस्यासिद्ध- त्वाज्जश्त्वं न भविष्यतीत्यत आह-*कार्यकालपक्ष इति*। अत्रत्यं तत्त्व- मन्यतोऽवसेयम्। नन्वेवं "गतिकारकोपपदानाम्" इतिसुबुत्पत्तेः प्राक् समासे उत्तरपदस्य पदत्वाभावेन पदेऽन्त इतिसमासे गोचेत्यत्र "अच"

सिद्धिः । 'गोचा' इत्यादौ "गतिकारकोपपदानाम्" (प०) इत्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः । "उत्तरपदत्वे च" (का०वा०) इति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न दोषः । पदे इति पदत्वयोग्योपलक्षणं वा । अत्रेदं भाष्यमपि मानम् । अत्र पदचरमावयवादि साधकः प्रतिबन्धकश्च

---

इत्यल्लोपस्य स्थानिवद्भावाद्रुत्वाद्यापत्तिरत आह—*गोचेत्यादाविति* । *अनित्यत्वेनेति* । धनक्रीतेत्यत्र यथा ।

नन्वेवमपि इदमनुपपन्नम् "उत्तरपदत्वे च" इतिनिषेधेनोत्तरस्य पदत्वाभावादत आह—*उत्तरपदत्वे चेति* । कार्यित्वनिवेशस्य वक्ष्यमाणरीत्या सविवादत्वात्पदेऽन्त इत्यत्र पदशब्दस्य लक्षणयाऽपि गोचेत्यस्य सिद्धिरित्यभिप्रायेणाह—*पदे इतीति* । *अत्रेति* । "उत्तरपदत्वे च" इत्यस्य उत्तरपदस्य कार्यित्व एव प्रवृत्तिरित्यत्र "गतिकारक" इत्यस्यानित्यत्वे च पदे इत्यस्य पदत्वयोग्योपलक्षणत्वे चेत्यर्थः । *इदं भाष्यमपीति* । पदेऽन्त इति सप्तमीसमासपरं प्रकृतसूत्रस्थभाष्यमपीत्यर्थः । अपिना षात्पदान्तात् "न लुमताङ्गस्य" "ङमो ह्रस्वात्" "ञि च पदे" इतिसूत्रस्थभाष्यस्य ग्रहणम् । ननु पदचरमावयवसाधकस्थानिवद्भावस्यैव "न पदान्त" इतिनिषेधः; यथा गोचेत्यादौ । तथा च वेतस्वानित्यत्र स्थानिवद्भावो न तत्साधकः; किन्तु रुत्वप्रतिबन्धक इति न तस्य "न पदान्त" इत्यनेन निषेध इति पदेऽन्त इत्यर्थाश्रयणेन तत्र दोषवारणपरभाष्यं न सङ्गच्छत एवेत्याशङ्क्याह—*प्रतिबन्धकश्चेति* ।

अत्रेदमवसेयम्—स्थानिवद्भावस्तावद् द्विविधः—पदचरमावयवादेः साधकः प्रतिबन्धकश्च । निषेधसम्भावनाप्रयोज्यसम्भावनाविषयः पदचरमावयवाद्यभावो यत्र तत्र साधकः । यत्र निषेधसम्भावनाप्रयोज्यसम्भावनाविषयः पदचरमावयवादिस्तत्र प्रतिबन्धकः । द्विविधोऽप्ययं पुनः प्रत्येकं द्विविधः—साक्षात्परम्पराभेदात् । तत्र साधके साक्षात्त्वं च पदसंज्ञाऽतिरिक्ताद्वारकत्वं बोध्यम् । एषाञ्च चतुर्विधानां स्थानिवद्भावानां मध्ये परम्परासाधकस्य स्थानिवद्भावस्य नानेन निषेधः । वेतस्वानित्यत्र भसंज्ञाप्रतिबन्धकस्थानिवद्भावस्य तत्प्रतिबन्धद्वारा सान्तवृत्तिपदसंज्ञासम्पादनद्वारा पदचरमावयवरुत्वसाधकत्वेन निषेधादेव सान्ते भसंज्ञया रुत्वाभावे सिद्धे सप्तमीसमासाश्रयणपरभाष्य-

विरोधात्। अत एव 'षडिक' इत्यत्र षकारान्तधर्मिकभसंज्ञाप्रतिबन्धकस्थानिवद्भावस्य परम्पराजश्त्वसाधकत्वेऽपि नानेन निषेधः। न च सप्तमीसमासे 'षडिक' इत्यत्रेकस्य पदत्वाभावात्कथमनेन निषेधसम्भव इति वाच्यम्। इकस्य पदत्वाभावेऽपि कुलिशब्दाकारयोर्लोपे तस्य स्थानिवत्त्वेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेनेतिविवरणोक्तरीत्या तत्सम्भवात्।

केचित्तु—परम्परासाधकस्थानिवद्भावनिषेधाभावस्य फलं सुध्यृडिति। तत्र हि इणधातोर्घञर्थे के इणो यणि यशब्देन सुधीशब्दस्य समासे सुधीय इति, तत आचारक्विबन्तात्क्विचि अल्लोपयलोपयोः सुधी इत्यस्य ऋड्शब्देन समासे सुधी ऋडिति दशायाम् "ऋत्यक" इति प्रकृतिभावप्रतिबन्धकाल्लोपस्थानिवद्भावस्य परम्परायणसाधकत्वेऽपि न निषेध इति ऋत्परत्वाभावात्प्रकृतिभावाभावाद्यणेवेत्याहुः; तन्न। "ऋत्यक" इत्यत्र ह्रस्व इत्यस्याप्यनुवृत्तेः परम्परायणसाधकत्वेन स्थानिवद्भावस्य निषेधाभावेऽपि पदचरमावयवस्य ह्रस्वस्य साक्षात्प्रतिबन्धकत्वेन निषेधस्य दुर्वारतया तत्र पक्षे ह्रस्वसमुच्चितप्रकृतिभावस्येष्टत्वात्। साक्षात्पदचरमावयवसाधकस्थानिवद्भावनिषेधस्योदाहरणं वाक्यसंस्कारपक्षे—*कानि सन्तीति*। पदसंस्कारपक्षे—*गोचेति* तत्र "अच" इत्यल्लोपस्य स्थानिवद्भावस्य साक्षादेवावङ्साधकत्वात्। न च "अच" इत्यल्लोपः परनिमित्तको नेति वाच्यम्। वव्रश्चेत्यत्रेव प्राचीनमतेऽङ्गभसंज्ञाऽऽक्षिप्तप्रत्ययनिमित्तकत्वेन नागेशमते परम्परानिमित्तकत्वेन च तत्त्वसौलभ्यात्। न च प्रतीचो यदिति निर्देशाद् "अच" इत्यल्लोपो न स्थानिवदिति कल्पनान्नेदं फलमिति वाच्यम्। तेनातिरिक्तवचनकल्पनापेक्षया सूत्रोदाहरणस्यैव युक्तत्वात्। दध्युपपदकेणधातोर्मूलविभुजादित्वात्कप्रत्यये इणो यणि दधिय इत्यत्र यणः स्थानिवत्त्वेन प्राप्तयण्रूपपदचरमावयवस्य साक्षात्साधकस्य स्थानिवद्भावस्य निषेधस्य फलसत्त्वाच्च।

साक्षात्पदचरमावयवप्रतिबन्धकस्थानिवद्भावनिषेधस्योदाहरणं वाक्यसंस्कारपक्षे—*एषो यन्निति*। तत्र यणादेशस्थानिवद्भावस्य साक्षात्पदचरमावयवत्वप्रतिबन्धकत्वात्। पदसंस्कारपक्षे एष यन्नित्यस्यैवेष्टत्वे तु हरिशब्दस्य यशब्देन समासे तत आचारक्विबन्तात्कर्त्तृक्विप्यल्लोपयलोपयोः "ह्रस्वस्य" इति तुकि हरिदित्यत्राल्लोपस्थानिवत्त्वस्य साक्षात्पदचरमावयवतुक्प्रतिबन्धकस्य निषेधः फलम्। एवं भजपूतेत्रेकेणधातोर्मूलविभुजादित्वात्के इणो यणि तेजोय इत्यत्र यणा-

देशस्थानिवद्भावस्य साक्षात्पदचरमावयवत्वप्रतिबन्धकस्य निषेधः फलं बोध्यम् । परम्परापदचरमावयवप्रतिबन्धकस्थानिवद्भावनिषेधस्योदाहरणं दध्यार इति । तत्र हि दध्युपपदकऋधातोरणि वृद्धौ दधि आरेति स्थिते आर्शब्दे स्थानिवत्त्वेन ऋबुद्ध्या "ऋत्यक" इति प्रकृतिभावो न तस्य स्थानिवद्भावस्य प्रकृतिभावसाधनद्वारा पदचरमावयवस्य यणः प्रतिबन्धकत्वात् । यदि तु "ऋत्यक" इत्यत्र ह्रस्वपदस्याप्यनुवृत्तेर्ह्रस्वस्यापि विधानात्साक्षात्पदचरमावयवसाधकत्वादेवात्र निषेधः सुलभ इति विभाव्यते; तदा सार्पिष्यामिति फलं बोध्यम् । तत्र हि सर्पिःशब्दादिदमर्थेऽणि आद्यचो वृद्धौ सार्पिषशब्दस्याशब्देन समासे सार्पिषाशब्दादाचारक्विबन्तात्कर्त्तृक्विपि नपुंसकह्रस्वे तत आचारक्विबन्तात्कर्त्तरि क्विप्यल्लोपे भ्यामि सार्पिष्यामित्यत्राल्लोपस्य स्थानिवत्त्वस्य भसंज्ञाप्रवर्त्तनद्वारा रुत्वप्रतिबन्धकस्यानेन निषेधात् । एवं व्याघ्रपाच्छब्दस्याशब्देन समासे ततष्टाविभक्ताविनादेशे गुणे व्याघ्रपादेनेति स्थिते परादिवत्त्वेनैनशब्दे स्वादित्वमानीय व्याघ्रपाच्छब्दस्य भत्वे पदादेशे व्याघ्रपदेनेत्यत्र गुणादेशस्थानिवद्भावस्य पाच्छब्दान्तवृत्तिभत्वप्रतिबन्धकद्वारा पदचरमावयवपदादेशप्रतिबन्धकस्य निषेधः फलम् । एवं व्याघ्रपाच्छब्दस्याशब्देन समासे तत आचारक्विबन्ताड्डिचि अल्लोपे व्याघ्रपाच्छब्दाट्टाविभक्तौ भसंज्ञायां पदादेशे व्याघ्रपदेति भवति । तत्र पाच्छब्दान्तधर्मिकभसंज्ञाप्रतिबन्धकस्थानिवद्भावस्य परम्परापदचरमावयवपदादेशप्रतिबन्धकत्वेन निषेधः फलं बोध्यम् । अथ कथं भावसाधने वाचिकस्य सिद्धिरिति चेत् ? "एकाक्षरपूर्वपदानाम्" इति वार्तिकेनाशीर्दत्तस्य लोपेऽज्झलादेशत्वाद् भसंज्ञायामपि स्थानिवद्भावाभावात्सिद्धिरिति गृहाण। षडिके तु न तद्वार्तिकं प्रवर्तते 'षषष्ठाजादिवचनात्सिद्धम्' इत्युक्तेः षष्शब्दातिरिक्तत्वेनैकाक्षरपूर्वपदेत्यत्र सङ्कोचादिति प्रदीपोद्द्योतयोः स्पष्टम् । अथ "भावसाधने वाचिकार्थमेकाक्षरपूर्वपदानाम्" इति वार्तिकाश्रयणं तत्रापि षष्शब्दातिरिक्तत्वेन सङ्कोचः वेतस्वानित्याद्यर्थं सप्तमीसमासाश्रयणमिति यत्नत्रयम् ।

कर्मसाधने तु षडिकार्थं षषः पदत्वमात्रं विधेयमिति लाघवात्कर्मसाधन एवास्त्विति चेद् ? न । भावसाधनेऽपि वेतस्वानित्याद्यर्थाश्रिते भसंज्ञाद्वारकपरम्परायाः अपि ग्रहणमित्यर्थबोधके अथवेत्यादिना भाष्योक्तसिद्धान्तपक्षे षडिके भत्वद्वारकपरम्परायाः अनाश्रयणमात्रस्यैवोद्द्योतोक्तरीत्या बोधनेन तदंशे साम्यात् कर्मसाधने विधिग्रहणस्य

स्थानिवद्भावो निषिध्यते, विनिगमनाविरहात् । एतत्सूत्रभाष्य- "कमेर्णिङ्" (पा० सू० ३-१-३०) इत्यादिसूत्रभाष्यैः "पूर्वत्रा- सिद्धे न स्थानिवत्" इत्यवष्टभ्य वरेयलोपस्वरदीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति लभ्यते । निषेध इति । द्विर्वच- नग्रहणात् "पूर्वत्रासिद्धे" इति निषेधाद्वेति भावः ।

---

द्वन्द्वनिर्दिष्टेषु द्विर्वचनादिष्वनन्वयापत्तिः परमतिरिच्यत इत्यतः सर्वैरु- पेक्षितोऽयं पक्ष इति दिक् ।

*वरेयलोपस्वरदीर्घग्रहणं वर्जमिति* । यद्यपि प्रकृतसूत्रे भाष्ये "पूर्वत्रासिद्धे न स्थानिवत्" इति वक्तव्यं वरेयलोपस्वरवर्जमित्येवोक्तं; तथाऽपि तद्दीर्घस्याप्युपलक्षणं "कमेर्णिङ्" इति सूत्रे "चिण्णमुलोः" इति सूत्रे च भाष्ये "चिण्णमुलोः" इतिसूत्रविषयेऽपि ण्यन्ताण्णौ दीर्घविधौ निषेधस्य सञ्चारितत्वात् "चिण्णमुलोः" इतिसूत्रे "णिज्व्य- वेतानां चोपसंख्यानम्" इतिवार्त्तिकस्य दीर्घविधौ स्थानिवत्त्वनिषेधेन प्रत्याख्यानाच्च । द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याता इति कौमुदी तु चिन्त्यैवेति "चिण्णमुलोः" इतिसूत्रे शेखर एव सुव्यक्तम् । दीर्घविधौ 'प्रतिदीव्न' इतिभाष्योदाहरणमपि 'न चोदाहरणमादरणी- यम्' इतिन्यायादुपलक्षणमिति भावः । वस्तुतस्तु सापादिकदीर्घस्यापि ग्रहणे आयसौ जनावित्यादौ वृद्धौ कृतायां परादिवत्त्वेन सर्वनामस्थान- त्वेनैकदेशविकृतन्यायेनाङ्गत्वेनासन्तलक्षणस्य नान्तलक्षणस्य च दीर्घ- स्यापत्तिः । अङ्गत्वमक्तपरिमाणमिति तु वक्तुमनर्हम् ; आयसावित्य- त्रैव नुमापादनपर-"अचः परस्मिन्" इतिसूत्रभाष्यव्याख्यानावसरे विवरणे तन्न्यायेनैवाङ्गत्वानयनात् । एवञ्च भाष्यमते ण्यन्ताण्णौ जा- तिनिर्देशादुपसंख्यानाद्वेष्टसिद्धिर्विधेयेति शिवम् ॥*॥

इति श्रीमदुमादत्तशर्मतनुजन्मनः श्रीखुद्दीशर्मणः कृतौ लघुश- ब्देन्दुशेखरव्याख्यायां नागेशोक्तिप्रकाशाख्यायां न पदान्तसूत्रान्तमाद्यं खण्डं परिपूर्णम् ।

# परिष्कारदर्पण

## ( परिष्कारों का खज़ाना )

### लघुशास्त्रार्थकला ( परिभाषेन्दुशेखरखण्डन ) सहित

यह परिष्कारग्रन्थ अभीतक अद्वितीय है। इसमें परिष्कार बनाने की रीतियाँ परिष्कृतपाणिनिसूत्रोदाहरणपूर्वक बतलाई गई हैं। जिन्हें देखकर आप स्वयम् दूसरे सूत्रों का या वाक्यों का अपेक्षित परिष्कार सहज ही में बना सकेंगे। अवच्छेदकत्वप्रतियोगित्वादिपदार्थों का निरूपण भी इस लिये किया गया है कि शेखरादिग्रन्थ सर्वथा आप के हस्तगत हो जायँ। पृष्ठ संख्या २७५ सुन्दर कागज़ छपाई आदि होने पर भी प्रचारार्थ मूल्य भी स्वल्प १=) कमीशन काट कर ॥|≡) मात्र रक्खा गया है।

# व्युत्पत्तिवाद

## [ शास्त्रार्थकलाटीकासहित ]

यह ग्रन्थ द्वितीयाकारकान्त न्यायव्याकरणाचार्य के अन्तिम खण्डों की परीक्षाओं में है। अभी तक इसकी बहुत कम टीकायें निकली हैं। जो निकलीं भी वे बहुतेरी शास्त्रार्थमात्रोपयोगी तथा बहुतेरी परीक्षामात्रोपकारिणी हैं। जिनसे एकही प्रयोजन सिद्ध हो सकता था। अतः इस क्षति की पूर्ति इस शास्त्रार्थकलाटीकासहित व्युत्पत्तिवाद से की गई है। इसमें "इति परीक्षालेखप्रकार:" अथ शास्त्रार्थप्रकार:" इस तरह विषयविभाग से बड़ी ही सुगमता हो गई है। साथही कालेज की गत परीक्षाओं के प्रश्नपत्र भी छपे हैं। एवम् लगभग बड़े आकार के ३०० पृष्ठात्मक कागज़ छपाई सुन्दर ग्रन्थ का मूल्य प्रचारार्थ २) कमीशन काट कर १|||) मात्र रक्खा गया है।

---